चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

चतुर्दशी-वर्षे ] September, 1959 [ प्रथमा संख्या

# मञ्जूषा



सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः



SUBSCRIBE FOR THE MANJUSHA

*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

## मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकवर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२। प्रतिसौरमासं दशमदिने ( आङ्ग्लमासस्य चतुर्विंशे दिवसे ) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।




**श्रीविश्वनाथ-चट्टोपाध्यायः ।**

Phone :—55-4049

८, भूपेन्द्र वसु आभेन्यू, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराज
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

September, 1959. | १८८१-शकीयाश्विनस्य १४श-वर्षस्य प्रथम-संख्या | Vol. XIV No. 1

## मङ्गलाचरणम्

प्रातः स्मरामि भवभीतिहरं सुरेशं
गङ्गाधरं वृषभवाहनमम्बिकेशम् ।
खट्वाङ्गशूलवरदाभयहस्तमीशं
संसाररोगहरमौषधमद्वितीयम् ॥१॥

प्रातर्नमामि गिरिशं गिरिजार्धदेहं
सर्गस्थितिप्रलयकारणमादिदेवम् ।
विश्वेश्वरं विजितविश्वमनोऽभिरामं
संसाररोगहरमौषधमद्वितीयम् ॥२॥

प्रातर्भजामि शिवमेकमनन्तमाद्यं
वेदान्तवेद्यमनघं पुरुषं महान्तम् ।
नामादिभेदरहितं षडभावशून्यं
संसाररोगहरमौषधमद्वितीयम् ॥३॥

प्रातः समुत्थाय शिवं विचिन्त्य
श्लोकत्रयं येऽनुदिनं पठन्ति ।
ते दुःखजातं बहुजन्मसञ्चितं
हित्वा पदं यान्ति तदेव शम्भोः ॥४॥

## उद्यम-प्रशंसा

उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः ।
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥
उत्थानवीरः पुरुषो वाग्वीरानधितिष्ठति ।
उत्थानवीरान् वाग्वीरा रमयन्त उपासते ॥
उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
प्रधर्षणीयः शत्रूणां भुजङ्ग इव निर्विषः ॥ शान्ति ५८।१४-१६

## पारमार्थिकं तपः

अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ शान्ति ७६।१८

घृणा अनुकम्पा ।

## यथार्थं सुखम्

पानीयं वा निरायासं स्वाद्वन्नं वाऽभयोत्तरम् ।
विचार्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ॥ शान्ति १११।३२

निर्वृतिः सुस्थितिः, मनसः शान्तिः ।

---

# आभाणकमाला

Greek. Ho d'olbos ou bebaios, all' ephēmer
Happiness is not abiding but ephemeral.
न खलु सुखं शाश्वतं परं क्षणिकम् ।

Greek. Ek toû horâin gignetai to erâin.
दर्शनाज् जायतेऽनुरागः । ईक्षणाज्जायते कामः ।

Greek. En thalattēi Zētel̂s hudōr.
You are looking for water in the sea.
सागरे सलिलं मृगयसे ।

(Zēteō I seek, seek for.)

Greek. Ta kala duskola. Beautiful things harass.
यावद्रम्यं क्लेशकरम् । क्लेशकारीणि रम्याणि । "भार्या रूपवती शत्रुः ।" नास्ति कमलं कण्टकं विना (No rose without a thorn) ।

# रामायणरत्नमञ्जूषा

## दशरथरामसंवादः ( अयोध्या ३४ )

ततः कमलपत्राक्षः श्यामो निरुदरो[1] महान् ।
उवाच रामस्तं सूतं [2]पितुराख्याहि मामिति ॥
स रामप्रेषितः क्षिप्रं सन्तापकलुषेन्द्रियः ।
प्रविश्य नृपतिं सूतो निश्वसन्तं ददर्श ह ॥
[3]उपरक्तमिवादित्यं वह्निच्छन्नमिवानलम् ।
तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ॥
आलोक्य तु महाप्राज्ञः परमाकुलचेतसम् ।
राममेवानुशोचन्तं सूतः प्राञ्जलिरासदत्[4] ॥
तं वर्धयित्वा राजानं सूतः पूर्वं जयाशिषा ।
भयविक्लबया वाचा मन्दया श्लक्ष्णमब्रवीत् ॥
अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः ।
ब्राह्मणेभ्यो धनं दत्त्वा सर्वं चैवोपजीविनाम्[5] ॥
स त्वा पश्यतु भद्रं ते रामः सत्यपराक्रमः ।
सर्वान् सुहृद आपृच्छ्य[6] त्वामिदानीं दिदृक्षते[7] ॥
गमिष्यति महारण्यं तं पश्य जगतीपते ।
वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः ॥
स सत्यवादी धर्मात्मा गाम्भीर्यात्सागरोपमः ।
आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥
सुमन्त्रानय मे दारान् ये केचिदिह मामकाः ।
दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि धार्मिकम्[8] ॥
सोऽन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् ।
आर्या ह्वयति[9] वो राजा गम्यतां तत्र मा चिरम् ॥

---

१ तनुमध्यः । २ पित्रे । ३ राहुग्रस्तम् । ४ आसदत्—a-aor. of आ-सद् । ५ उपजीविभ्यः । ६ आमन्त्र्य (bidding adieu to). ७ ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदम् । ८ This word is worth its weight in gold. ९ Generally used with आ. Cf. तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।

एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण नृपाज्ञया ।
[1]प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥
अर्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः ।
कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥
आगतेषु च दारेषु समवेक्ष्य महीपतिः ।
उवाच राजा तं सूतं सुमन्त्रानय मे सुतम् ॥
स सूतो राममादाय लक्ष्मणं मैथिलीं तदा ।
जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥
स राजा पुत्रमायान्तं दृष्ट्वा दूरात्कृताञ्जलिम् ।
उत्पपातासनात्तूर्णमार्तः स्त्रीजनसंवृतः ॥
सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशाम्पतिः ।
तमसंप्राप्य दुःखार्तः पपात भुवि मूर्छितः ॥
तं रामोऽभ्यपतत्क्षिप्रं लक्ष्मणश्च महारथः ।
विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा ॥
स्त्रीसहस्रनिनादश्च सञ्जज्ञे राजवेश्मनि ।
हाहा रामेति सहसा भूषणध्वनिमूर्छितः[2] ॥
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ ।
पर्यङ्के सीतया सार्धं रुदन्तः समवेशयन् ॥
अथ रामो मुहूर्तेन लब्धसंज्ञं महीपतिम् ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥
[3]आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः ।
प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥
लक्ष्मणं चानुजानीहि सीता चान्वेति मां वनम् ।
कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥
अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद ।
लक्ष्मणं मां च सीतां च प्रजापतिरिव प्रजाः ॥
प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः ।
उवाच राजा संप्रेक्ष्य वनवासाय राघवम् ॥

---

र्थैकत्वाभावान्नात्मनेपदम् । २ समुच्छ्रितः । ३ आङि नुप्रच्छ्योरित्यात्मनेपदम्

अहं राघव कैकेय्या वरदानेन मोहितः।
अयोध्यायास्त्वमेवाद्य भव राजा निगृह्य माम्॥
एवमुक्तो नृपतिना रामो धनुर्भृतां वरः।
प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः॥
भवान् वर्षसहस्राय पृथिव्या नृपते पतिः।
अहं त्वरण्ये वत्स्यामि न मे कार्यं त्वयानृतम्॥
नव पञ्च च वर्षाणि वनवासे विहृत्य ते।
पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप॥
रुदन्नार्तः प्रियं पुत्रं सत्यपाशेन संयतः।
कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत्॥
श्रेयसे वृद्धये तात पुनरागमनाय च।
गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम्॥

---

## किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः

वृत्तान्तपत्रेषु पठितम् ( ढाका, ३० जुलाई, P T. I. ) मिथ्यासाक्ष्यप्रदानप्ररोचनापराधेन श्रीमान् कर्त्तव्यपरायणवसुः सामरिकाधिकरणेन दण्डित इति।

---

## रिक्तः सर्वो भवति हि लघुः*

कविकुलचूडामणिना मेघसन्देश उक्तम्—रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय [ १।३१ ] इति। परं रिक्तोऽपि गुरुर्भवत्येव। अत एव मुनिप्रवरेण पाणिनिना सूत्रितं कुरुगार्हपत-रिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूपण्यकम्बलौ दासीभाराणां च [ ६।२।४२ ] इति। अत्र रिक्तश्चासौ गुरुश्चेति रिक्तगुरुरिति व्याख्यातारः। प्राकृतजनदृष्ट्या रिक्तोऽपि पुरुषोऽध्यात्मसम्पदा गुरुर्भवत्येव। रिक्तगुरुशब्दे पूर्वपदस्य प्रकृतिस्वरो भवति। लोकदृष्ट्या रिक्तत्वस्यैव प्राधान्यमिति।

---

* तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः।
अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय॥

# छात्रहितैषिणी

१। बहुभिश्छात्रैः पृच्छ्यते—कथं 'ज्योतिस्'-शब्दान्मतुपि ज्योतिष्मान् भवति मयटि च ज्योतिर्मयो भवतीति।

मयटि परे स्वादिष्वसर्वनामस्थाने इति सूत्रेण पदसंज्ञा भवति, ततश्च ससजुषो रुः इति सूत्रेण रुदिशे ज्योतिर्मय इति पदं निष्पद्यते। मतुपि परे पुनः सकारान्तप्रातिपदिकस्य तसौ मत्वर्थे इति सूत्रेण भसंज्ञायां जातायां पदकार्यं किमपि न भवति। आदेशप्रत्यययोरिति सूत्रेण षत्वे पुंलिङ्गप्रथमैकवचने ज्योतिष्मान् इति भवति।

---

# प्रमादमाला

युगान्तरपत्रे (सोमवार, १०इ श्रावण, १३६६ पृः ८, स्त० ७) दृष्टम्—"कुष्ठव्याधिग्रस्त ब्राह्मण कौशिक ऋषि अनिमान्डव्य कर्तृक अभिशप्त हइया ताँहार साध्वी पत्नीर चेष्टाय विपदोत्तीर्ण हन। पूण्यवती नारी कौशिकी...।" इत्यादि।

नकार-णकारयो ह्रस्वोकारदीर्घोकारयोः स्वरव्यञ्जनयोर्भेददूरीकरणे गृहीतदीक्षोऽयं प्रबन्धलेखक इति प्रतिभाति।

अथवा अनिमान्डव्यगतं (Aneurin Mandavy) नकारद्वितयं तस्यानार्यदेशप्रसूतत्वं स्फुटयति। विपदोत्तीर्णपदं भागुरिमतेन विपदाशब्दस्य सत्तां सूचयति। पूण्यवतीशब्दगतो दीर्घोकारः पुण्यस्यातिमहत्त्वमभिव्यञ्जयति। एवमेव क्लेशस्यातिशयबोधनाय Statesmanपत्रे (July 30, 1959 p. 6. col. 1 Death) painfull शब्दे लकारद्वयं दृष्टम्।

# नामसु सादृश्यस्य प्रभावः

## नीरोजिनी

Statesman पत्रे (Tuesday, July 28, 1959) श्रीमत्या नीरोजिनीवसुजायायाः पुरन्दरपुरप्रयाणवृत्तान्तः प्रकाशितः। सरोजिनीशब्दसादृश्येन नीरोजिनीशब्दो निष्पन्न इति स्फुटमेव।

# भाषायां सङ्करः (Contamination)

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायस्य ]

ऋग्वेदस्य वायो तव प्रपृञ्चती धेना जिगाति दाशुषे। उरूची सोमपीतये ॥ [१।२।३] इति मन्त्रं व्याचक्षाणेन सायणाचार्येणोक्तम्—वर्तते अयते इत्यादिषु द्वाविंशाधिकशतसंख्येषु गतिकर्मसु गाति जिगाति इति पठितम्। अत्र द्वाविंशाधिकशतशब्दो न सिध्यति। तदस्मिन्नधिकमिति दशान्ताड्डः इत्यस्यानन्तरं सूत्रम्—शदन्तविंशतेश्च [५।२।४६] इति। अत्र च वर्तते वार्त्तिकम्—विंशतेश्च [५।२।४६।३] इति। व्याख्यातं चेदं भाष्यकृता—विंशतेश्चान्तग्रहणं कर्तव्यम्। [एकविंशतिरधिकास्मिञ्छते] एकविंशं शतम्। इति। एवं च प्रत्ययेनैवाधिकार्थस्य प्रत्यायनाद् द्वाविंशाधिकशतसंख्येष्विति वेदभाष्यकारवचने दृश्यमानोऽधिकशब्दस्यावकरत्वं (wasteful and ridiculous excess) स्फुटमेव। एवं च द्वाविंशशत-द्वाविंशत्यधिकशतशब्दयोः सङ्करेण द्वाविंशाधिकशतशब्दो निष्पन्न इति स्पष्टमेव। द्वाविंशशत+द्वाविंशत्यधिकशत=द्वाविंशाधिकशत। अत एव सायणभाष्ये द्वाविंशत्यधिकशतसंख्येष्विति पठनीयम्। मन्ये तदेव भाष्यकृता विलिखितं लिपिकराणां प्रसादेन वा प्रमादेन वान्यथा भूतम्।

---

# वङ्गभाषामयग्रन्थेषु संस्कृतोद्धृतिः

श्रीफाल्गुनी (?) मुखोपाध्याय-महोदयस्य "आकाशवनानी जागे" कथाग्रन्थे १२७म पृष्ठे दृश्यते—

पिताः धर्म पिताः स्वर्ग पिताहिः परमन्तप।  
पितरि प्रीतिमापन्ने प्रियन्ते सर्व देवता ॥

इति। मन्त्रस्य शुद्धः पाठः—

पिता धर्मः पिता स्वर्गः पिता हि परमन्तपः।  
पितरि प्रीतिमापन्ने प्रीयन्ते सर्वदेवताः ॥ इति।

---

# भूतकरणः (Augment)

लुङ्लङ्लृङ्क्षु धातोः पूर्वं योऽकार आसज्यते स भूतकरण इत्युच्यते। चतुरध्यायिकायाम् (आथर्वणप्रातिशाख्ये) दृश्यते सूत्रम्—भूतकरणस्य च [३।४९] इति। एतदनुरूपं पाणिनीयं सूत्रम् आटश्च [६।१।९०] इति। कातन्त्रस्याख्यातप्रकरणे दृश्यते सूत्रम्—भूतकरणवत्यश्च [३।१।१५] इति। वृत्तिकारैरपि भूतकरणस्यार्थो न बुद्धः

किं पुनरर्वाचीनैः। वृत्तिकारैरुक्तम्—भूतः कालः करणम्, तद्विद्यते यासामिति पारिशेष्याद्ध्यस्तन्यद्यतनीक्रियातिपत्तय एव रूढाः। इति। व्याख्यातं चेदं टीकाकारेण दुर्गसिंहेन—भूतः कालः करणमिति—भूतश्चासौ करणं चेति। साधकतमत्वात् करणं कारकं भवति। वन्तुरिह संसर्ग एव प्रक्रियावशात्। भूतकाले करणं व्युत्पादनं वा। इतरेतराश्रयदोषोऽत्र न शङ्क्यते वृद्धस्मरणात्। अत आह—रूढा इति। एता एव लोके भूतकरणवतीत्वेन विश्रुता इत्यर्थः। यद्यपि प्रयोगतश्चेति स्मृत्यर्थे भूतानद्यतने भविष्यन्त्यपि दृष्टा तथापि न तस्यां रूढिरित्यन्वर्थवादोऽयम् इति। अत्र पञ्जीकारेणोक्तम्—भूतशब्दोऽतीते काले वर्तत इत्याह—भूतः कालः करणमिति। भूतश्चासौ करणश्चेति। साधकतमत्वाद् भूतः कालः करणं भवति। संसर्गे वन्तुरयं प्रकियावशात्। पारिशेष्यादिति। अन्यासां विभक्तीनां स्वस्मिन् स्वस्मिन् काले विहितत्वादित्यर्थः। ननु भूते विधानमन्तरेण भूतकरणवतीत्वं न सम्भवतीतीतरेतराश्रयदोषात् संज्ञाविधानं न स्यादित्याह रूढा इति। न खल्विदानीं भूतकरणवतीसंज्ञा विधीयते येनायं प्रसङ्गः। किन्तर्हि? भूतकरणवतीत्वेन लोके पूर्वमेव प्रसिद्धा इति विधानं न विरुध्यते। इति। अत्र कविराजेनोक्तम्—यद्यपि पृथिव्यादिषु भूतं स्याद् भूतः कालपिशाचयोरित्यस्ति, तथापि प्रस्तावादिह कालार्थ एव गृह्यत इत्याह—भूतेत्यादि। ननु शब्दस्य नित्यत्वपक्षे कथं संसर्गे वन्तुरित्युक्तम्? नित्यस्य करणासम्भवादित्याह—प्रक्रियावशादिति। प्रक्रियायां भूतकाले ह्यस्तन्यादीनामुत्पन्नत्वात् भूतः कालः करणं भवतीति। ननु न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इति न्यायाद् भूतकरणवतीत्यत्र कथं वन्तुप्रत्ययः। सत्यम्। संज्ञाभूताद् भवत्येवेति हेमकरः। ननु मत्वर्थीयादीप्रत्यये सति संज्ञा गम्यते, नहि भूतकरणभागः संज्ञेति। सत्यम्, संज्ञाभूतात् संज्ञास्वरूपाद्धेतोर्वन्तुर्भवत्येवेत्यर्थः। अन्यथा संज्ञैव न गम्यत इति। इति। व्याकृतं चेदं सूत्रमाख्यातव्याख्यासारे—"भूतशब्द इति पञ्जी। क्तप्रत्ययस्यातीतकाले विधानात् भूतशब्देनाप्यतीतः कालः कथ्यत इति। करणं साधकतममित्यमरकोशदर्शनाभिप्रायेणाह—साधकतमत्वादिति। अयमभिप्रायः। यथा क्रियासिद्धौ करणकारकं साधकतमं भवति तथा ह्यस्तन्यद्यतनीक्रियातिपत्तिविषये भूतकालः साधकतमो भवतीत्यर्थः। विधानमिति। अतीतकाल एतास्तिस्रो विभक्तयो भवन्ति। एतत्तु विधानम्। प्रसिद्धा इति। ह्यस्तन्यद्यतनीक्रियातिपत्तय एवेति भावः। अथ रूढमिति परोक्षाप्यत्रैव निक्षिप्यतां किं पृथग्विधानेन? सत्यं सुखार्थमिति।"

सर्वमेतदविज्ञातवस्तुतत्त्वानां कल्पनाराज्यविजृम्भणम्। वस्तुतस्तु क्रियतेऽनेनेति करणाधिकरणयोश्चेति करणे ल्युट्। भूतस्य कारणः भूतकरणः। अकारेणाकारेण वातीतकाल एव बोध्यत इत्यकार आकारश्च भूतकरण इत्युच्येते।

भूतकरणश्च द्विविधः—अकारः (syllabic augment) आकारश्च (temporal augment)। भूतकरणधातुकार्ययोरन्तरङ्गत्वादुपसर्गेण व्यवधानं न सम्भवति।

वेदे च केषुचित्स्थलेष्वडभावोऽपि दृश्यते। तथा च पाणिनिसूत्रम्—बहुलं छन्दस्यमाङ्योगेऽपि [ ६।४।७५ ] इति। क्वचिच्च यणः पूर्वमप्याड् दृश्यते। तथाच प्रातिशाख्यकारिकाः [ २।७५-७७ ]—

योनिमारैगगादारैगारैग् दुर्योण आवृणक्।
हन्त्यासद्र प आरुपितमनायुधास आसता॥
अस्त्वासतो निराविध्यदभ्यादेवं क आसतः।
न्यावृणङ् नकिरादेवो न्याविध्यदेनमायुनक्।
अहिहन्नारिणक् पथ .आयुक्षातामुदावता।
रिक्थमारैग्य आयुक्त कुरुश्रवणमावृणि॥ इति।

स्वसा स्वस्रे ज्यायस्यै योनिमारैक् [ सं० १।१२४।८ ]। रुशद्वत्सा रुशती श्वेत्यागादारैगु वत्सा सदनान्यस्याः [ १।११३।२ ] आरैक् पन्थां यातवे सूर्याय [ १।११३।१६ ]। नि दुर्योण आवृणङ् मृध्रवाचम् [ ५।३२।८ ]। निराविध्यद् गिरिभ्य आ [ ८।७७।६ ] भुवद्विश्वमभ्यादेवमोजसा [ २।२२।४ ]। इन्द्रो यः शुष्णमशुषं न्यावृणक् [१।१०१।२]। न्याविध्यदिळीविशस्य दृळहा [ १।३३।१२ ]। यमेन दत्तं त्रितमेनमायुनक् [ १।१६३।२ ]। आरिणक् पथः [ २।१३।५ ]। आयुक्षातामश्विना यातवे रथम् [ १।१५७।१ ]। न जामये तान् वो रिक्थमारैक् [ ३।३१।२ ]। य आयुक्त तुजा गिरा [ ५।१७।३ ]। अयुक्त सप्त शुन्ध्युवः [ १।५०।९ ]। कुरुश्रवणमावृणि राजानम् [ १०।३३।४ ]।

नामधातुविषये भट्टोजिभट्टेनोक्तम्—उपसर्ग-समानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियत इति। तेन मनःशब्दात् प्रागट्। स्वमनायत। उन्मनायते। उदमनायत। एवं च अवागल्भत अवागल्भिष्टेत्यादावप्यवेत्येतस्य पृथक्करणं बोध्यम्। ज्ञापकं च सजातीयविषयम्, तेन यत्रोपसर्गस्वरूपं सकलं श्रूयते नत्वादेशेनापहृतं तत्रैव पृथक्कृतिः। एवं च आ ऊढः ओढः स इवाचर्य ओढायित्वा। अत्र उन्मनाय्य अवगल्भ्य इत्यादिवन्न ल्यप्। इति।

In the original Indo-European language the so-called tenses had no time significance. They merely denoted differences in the aspects of the action. The augment (Skt. *a*, Gk. *e*) was prefixed to the imperfect, pluperfect, aorist and conditional to express past time. Hence it was known as bhūtakaraṇa or 'maker of past tense' in Sanskrit. It was originally an independent adverbial particle with a temporal sense and invariably

bore the accent, if the verb was accented. ( लुङ्लङ्लृङ्क्ष्वडुदात्तः vi. 4.71.) When the past sense was clear from the context, it was not felt necessary to use the augment and thus the augmentless and augmented forms came to exist side by side. Gradually after the analogy of the augmented forms, the past sense came to be attached to the unaugmented forms independently of the context. This is why the augment became optional in Vedic ( बहुलं छन्दस्यमाङ्योगेऽपि vi. 4. 75 ), Homeric Greek and Avesta. Classical Sanskrit, on the other hand, followed the analogy of the augmented forms and generalised them. The same may be said of classical Greek prose also (except in the case of the pluperfects where both forms were used indiscriminately).

The augment is found in Sanskrit, Greek, Armenian and Phrygian. In Latin and other Indo-European languages it has disappeared.

Philogists generally distinguish between two varieties of the augment. When in the parent language it was prefixed to a verb beginning with a consonant and was a syllable by itself, it is called the **syllabic augment** ; as **e-bher-e-t*, Skt. *a-bhar-a-t*, Arm. *e-ber*, Gk. *e-pher-e*. When it was contracted with the initial vowel of the verb, it is known as the **temporal augment** : as, Skt. *a - as - am* *āsam*, Gk. *e - es - m* ēa. I.E. **e-es-m* ē*sm*.

This appeared to be a case of lengthening and after the analogy of this ē, *a* in Greek was lengthened to *ā*, *o* to ō, *i* to ī *u* to ū etc.

According to Pāṇini the syllabic augment is *a* ( लुङ्लङ्लृङ्क्ष्वडुदात्तः vi. 4.71) and the temporal augment *ā* ( आडजादीनाम् vi. 4 72). For this *ā* he frames the special rule that with a following vowel it will be contracted to the corresponding vṛddhi vowel ( आटश्च vi. 1.90).

Before *w* the syllabic augment is ē (Skt. *ā*) instead of *e* (Skt. *a*). ( छन्दस्यपि दृश्यते vi. 4.73.) Thus आवर् 'he covered' from वृ 'to cover'. आवस् 'it shone' from वस् to shine, आवृणि 'I chose' from वृ 'to choose', आवृणक् 'he turned' from वृज् 'to turn' आविध्यत् 'he wounded' from व्यध् 'to pierce'. अविधत् in RV. ii.1.7,9 (यस्तेऽविधत्) should preferably be read आविधत् ( यस्त आविधत् ).

The analogy of these forms was followed by आयुनक् (beside अयुनक्) and आयुक्त (beside अयुक्त ) from युज् 'to join', आरिणक् and आरैक् from रिच् 'to leave' and आनट् from नश् 'to attain'.

The relationship between the verb and the augment was closer ( अन्तरङ्गतर) than that beween the verb and the preposition, so the augment was placed immediately before the verb and then the preposition added to it; thus उदगच्छन्, समुदगच्छन् from उद्गच्छति, Gk. ap-e-balon (aorist), peri-e-ballon (imperfect) etc. from ballō 'I throw'. In the case of denominatives from compound nouns with prepositions as the first member the augment was placed after the preposition ( उदमनायत ) except when the latter had undergone sandhi change beyond recognition and appeared to form an integral part of the word.

## नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सहृदयाः, केन वा न श्रुतः कालिदासस्य श्लोकः –

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत् कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ इति ।

ऋग्वेदे [ १०।११७।५ ] श्रूयते –

पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्राऽन्यमन्यमुप तिष्ठन्त रायः ॥* इति ।

अत्र सायणभाष्यम् । धनवन्तं पुरुषं दाने प्रेरयति । तव्यान् तवीयान् धनैरतिशयेन प्रवृद्धः पुरुषः नाधमानाय याचमानायातिथये पृणीयात् इत् धनानि दद्याद् एव । पॄ पालनपूरणयोः । क्र्यादिः । "प्वादीनां ह्रस्वः ।" यदि दद्यात् द्राघीयांसम् । दीर्घ-शब्दादीयसुनि प्रियस्थिरे-

---

* Let the rich satisfy the poor implorer, and bend his eye upon a longer pathway.

Riches come now to one now to another, and like the wheels of cars are ever rolling.

*Bend his eye upon a longer pathway*: Carefully consider the future and not the present only. He himself may need the same assistance hereafter. GRIFFITH

त्यादिना [ ६।४।१५७] द्राघीत्यादेशः। दीर्घतमं पन्थां पन्थानं सुकृतमार्गम् अनु पश्येत अनुपश्येत्। व्यत्ययेनात्मनेपदम्। तत्र कारणमाह—रायः। धनानि ओ हि। आ उ। आ वर्तन्त एव खलु। एकत्र न तिष्ठन्तीत्यर्थः। तत्र दृष्टान्तः-रथ्येव यथा रथ्यानि। रथाद्यत् [ ४।३।१२१ ] इति तस्येदमित्यर्थे यत्। रथसम्बन्धीनि चक्रा चक्राण्युपर्यधोभावेनावर्तन्ते तद्वत्। आवृत्तिमेव दर्शयति—अन्यमन्यं पुरुषं धनानि उप तिष्ठन्त उप तिष्ठन्ते। समवेतानि भवन्ति। उपाद्देवपूजासङ्गतिकरणेत्यात्मनेपदम् [ १।३।२५।१ ]। तस्माद् धनानि देयानीति भावः। इति।

महाभारते [ ५।३६।४७] दृश्यते—

सुखं च दुःखं च भवाभवौ च लाभालाभौ मरणं जीवितं च।
पर्यायशः सर्वमेते स्पृशन्ति तस्माद्धीरो न प्रहृष्येन्न शोचेत्॥ इति,
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
पर्यायेणोपसर्पन्ते नरं नेमिमरा इव॥ [ ३।२६१।४५ ] इति च।

न नित्यं लभते दुःखं न नित्यं लभते सुखम् इति द्वितीयार्धस्य पाठान्तरम्।

कालक्रमेण जगतः परिवर्तमाना चक्रारपङ्क्तिरिव
गच्छति भाग्यपङ्क्तिः। स्वप्नवासवदत्तम् १।७

सुखमापतितं सेव्यं दुःखमापतितं तथा।
चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च॥
हितोपदेशः १।१६४

सम्पद्विपद्वापि निसर्गलोला कुत्रापि न स्थैर्यमुरीकरोति। कृष्णानन्दः।

---

## तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः

"रविवारेर युगान्तर" पत्रे ( ११इ श्रावण १८८१ ) 'भेलकि हइते भेषज" पुस्तकस्य समालोचन-प्रसङ्गे नोक्तम्—प्राचीन भारतीय चिकित्साविज्ञानीदेर अन्यतमेर नाम देओया हयेछे 'भागवत' एवं ताँहार पुस्तकेर नाम देओया हयेछे 'भागवत पुराण'।

ए दुटी हवे भागभट ओ 'भागभट संहिता' इति। ( प्राचीन भारतीय-चिकित्साविज्ञान-विदाम् अन्यतमस्य नामात्र दृश्यते 'भागवत' इति, तस्य पुस्तकस्य च नाम 'भागवत पुराण' इति। अनयोः शुद्धावाकारौ भागभट 'भागभट संहिता' इति च। )

क्रियतश्चित् कालात् पूर्वं धर्माधिकरणे आरक्षिकपुरुषः प्राड्विवाकेन पृष्टः—कोऽस्याभियुक्तस्यापराधः? इति।

तेनोक्तम्—आर्य, Bigamy. अनेन दुर्वृत्तेन त्रिविवाहः कृत इति। प्राड्विवाकेनोक्तम्, विस्मितोऽस्मि ते मौर्ख्येण। न खलु Bigamy तत्। Trigonometry इति वक्तव्यम्! इति।

---

## शाकुन्तलविमर्शः

### भरतः

कस्य वा न विदितः संस्कृतज्ञस्य शाकुन्तलगतः श्लोकः [ ३।३३ ]—

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्॥

इति। अत्र महाकविना नाटककथावस्त्वनुगुणं निर्वचनं स्वीकृतम्। वस्तुतस्तु दर्शतयजतादिवद् भरतोऽपि कर्मसाधनः। अत एव यथा वेदे दर्शतशब्दो दर्शनीयार्थे प्रयुज्यते (Gk. dus-derketos), यजतशब्दश्च (Av. yazata) यजनीयार्थे एवं भरतोऽपि भरणीयार्थकः। अत एव पद्मपुराणे दृश्यते—

भर्तव्योऽयं त्वया यस्मादस्माकं वचनादपि।
तस्माद् भवत्वयं नाम्ना भरतो नाम ते सुतः॥ इति।

---

कवीन्द्र-रवीन्द्रनाथस्य

## विवाहः

[ श्रीफटिकलाल-दासकृतस्तात्पर्यानुवादः ]

बभूव राज्याः प्रथमो हि यामो दध्मुश्च शङ्खानसकृद् रमण्यः।
वधूवरं ग्रन्थिपिनद्धचेलं नताननं चित्रमिवावतस्थे॥१॥

गवाक्षमुन्मुच्य पुराङ्गनाश्च भिरवास्यवासो ददृशुस्तदेव ।
प्रावृड्रजन्यां जलदा जगर्जुर्नेदुः सम तैश्च विवाहशङ्खाः ॥२॥
ईशानकोणे पवनः स्थिरोऽभून्मेघैः समन्ताद् गगनं च पूर्णम् ।
सहस्रदीपद्युतिदीप्तकक्षे चक्रुर्जनानां मणयोऽक्षिपीडाम् ॥३॥
अत्रैव काले सहसागतः को बहिः कथं वा निननाद भेरी ।
विक्षुब्धभीता जनता सभास्था वधूवरौ तौ परिवृत्य तस्थौ ॥४॥
चितोरदूतो विहितोढिसज्जं तं मेत्रिवंशध्वजमाचचक्षे ।
"अरातिवृन्दैः सह योद्धुकामः श्रीरामराणागमदाजिभूमिम् ॥५॥
ये सन्ति मेत्र्यन्वयराजपुत्रास्त एत सर्वे श्रुतपार्थिवाज्ञाः ।"
इत्थं समाख्याय जगाद दूतः "श्रीरामसिंहो जयतान्महीपः ॥"६॥
उच्चैरवादीत् स च मेत्रिराजः "श्रीरामसिंहो जयतान्महीशः ।"
भयाच्चकम्पे हृदयं च वध्वा नेत्रे च जाते गलदश्रुपूर्णे ॥७॥
जन्याश्च सर्वे युगपज्जगर्जुः "श्रीरामसिंहो जयतान्महीपः ।"
दूतोऽपि चख्यौ "शृणु मेत्रिपाळ ! नास्त्येव कालोऽतिविलम्बनस्य ॥"८॥
वृथोत्थितः शङ्खरवः सभायां वृथाङ्गनाकण्ठहुलुध्वनिश्च ।
कन्याञ्चलग्रन्थिमपास्य वोढा प्रोवाच तां वक्त्रनिबद्धदृष्टिम् ॥९॥
"आपृच्छ्यसे भो दयिते ! मया त्व समागतो मृत्युसभानिदेशः ।
मुधाधुना शङ्खरवप्रचारो मुधाङ्गनामाङ्गलिकस्वनश्च ॥"१०॥
वरस्य धृत्वा मुकुटं स शीर्षे तुरङ्गमारुह्य रयात् प्रतस्थे ।
विच्छायवक्त्रा सुविनम्रमस्ता शुद्धान्तकक्षं प्रविवेश कन्या ॥११॥
निर्वाणमायन्त सहस्रदीपाः सभा च राज्ञस्तमसावृताभूत् ।
गले च माल्यं मुकुटं च मूर्ध्नि बिभ्रद्वरोऽधावत घोटपृष्ठे ॥१२॥
प्रोवाच कन्यां जननी सरोदं "वध्वंशुकं भाग्यहते ! त्यजैतत् ।
प्रशान्तनम्रा दुहिताचचक्षे "धृत्वा तवाहं चरणौ प्रयाचे ॥१३॥
मास्माम्ब ! शोचीः कृपणं मदर्थे गात्रे ममास्त्वेष विवाहवेषः ।
तमीक्षितुं मेत्रिपुरं प्रयामि ।" "हा दुर्भगे"ति प्रसवित्र्युवाच ॥१४॥
कृत्वाशिषं ते ब्रहविप्रवर्गास्तस्या ददुर्मूर्धनि धान्यदूर्वाः ।
कन्याधिरूढो चतुरस्रयानं चक्रुश्च नार्यौ हुलुनादमुच्चैः ॥१५॥
वर्णाढ्यवासः परिधाय गात्रे सार्धं प्रयाता बहुकिङ्कराश्च ।
स्नेहेन माता वदनं चुचुम्ब न्यधत्त हस्तं जनकश्च मस्ते ॥१६॥

उक्तं जनैः "के समुपस्थिता रे प्रज्वाल्य दीपान् निशि मेत्रिगेहे ।
निधाय भूमौ नरवाह्यदोलां निवर्त्यतां वो मुरलीनिनादः ॥१७॥
सर्वेऽत्र पृथ्वीपतिमेत्रिपुर्यां तद्दाहकृत्ये मिलिता वयं स्मः ।
स मेत्रिराजो, निहतोऽद्य युद्धे यूयं ह्यकाले समुपस्थिताः के ॥"१८॥
बधूः समूचे चतुरस्रयानात् "सुतारवंशीध्वनिमारभध्वम् ।
गतं न लग्नं भवितधुना मे न मोक्ष्यते ग्रन्थिरुताञ्चलस्य ॥१९॥
दोलानिषण्णा पुनरेव सोचे "परेतशय्यानलदीप्तिमध्ये ।
उच्चार्यतामिन्तविधानमन्त्रो निनाद्यतां वेणुरनारतं च ॥"२०॥
सरत्नमालो धृतवोढृवेशः शिश्ये चितायां स हि मेत्रिराजः ।
यानावतीर्णा सहधर्मिणी च सा तस्य शीर्षं निकषा न्यषीदत् ॥२१॥
बद्धाञ्चलं स्वं वसनेन तस्य सद्योविमुक्तक्षतजाप्लुतेन ।
सतीव पत्युः स्ववरस्य मस्तं न्यधत्त चाङ्के परमादरेण ॥२२॥
पुराङ्गनास्तत्र दलैर्विभक्ताश्चक्रुः समेतं हुलुशब्दमुच्चैः ।
चख्यौ पुरोधाः "सुकृतेऽसि धन्या" जगौ च गाता "जय मृत्युजेत्रि !"॥२३॥
धूधूरवेण ज्वलितश्चितायां स जातवेदाश्चरमाश्रयो यः ।
योगासने सा रमणी वितष्ठे जातं श्मशानं जयघोषपूर्णम् ॥२४॥

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

## न च स्मार्त्तमतद्धर्माभिलापात् १।२।१९

सांख्यस्मृतिकल्पितं प्रधानं नान्तर्यामी । कुतः ? अतद्धर्माभिलापात्, "अदृष्टो द्रष्टाऽश्रुतः श्रोता" इत्यदृष्टत्वादीनां तत्र सम्भवेऽप्यचेतनस्य द्रष्टृत्वश्रोतृत्वादीनां धर्माणामसम्भवात् तेषां चात्राभिलापादित्यर्थः ॥१९॥

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ।१।२।२०

नेत्यनुवर्तते । शारीरो जीवश्च नान्तर्यामिशब्दवाच्यस्तस्य सर्वनियन्तृत्वसर्वान्तरत्वासम्भवात् । किञ्च उभयेऽपि शाखिनः काण्वा माध्यन्दिनाश्चान्तर्यामिणो भेदेनैनं शारीरमधीयते । तथाहि "यो विज्ञाने तिष्ठन्नि"ति काण्वपाठः, "य आत्मनि तिष्ठन्नि"ति च माध्यन्दिनपाठः

शारीरस्यापि पृथिव्यादिवन्नियम्यत्वेनान्तर्यामिणो भेदमेव दर्शयति। "नान्योऽतोऽस्ति द्रष्टे"ति तु अंशांशिभावादभेद इति बोध्यम् ॥२०॥

अदृश्यत्वादिगुणको धर्मोक्तेः ।१।२।२१

मुण्डके श्रूयते "अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद् भूतयोनिं परिपश्यन्ति धीराः" इति। अत्रादृश्यत्वादिगुणानां साधारणत्वात् किमेतैः प्रधानं जीवः परमात्मा वा कथ्यते इति संशये आकाशादिकार्याणां जडत्वेनाशुद्धत्वेन सारूप्यात् प्रधानमेव जगद्योनिवाच्यं "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् ॥" इत्यूर्णनाभ्यादिदृष्टान्ताश्चात्रैवानुगता भवन्ति, ऊर्णनाभिदेहस्यैव तन्तुहेतुत्वात् केशलोमादिहेतुत्वाच्च पुरुषदेहस्य, "अक्षरात् परतः पर" इत्यपि परस्मादक्षरात् प्रधानात् परः पुरुषः कथ्यते। एवं प्राप्ते समाधत्ते—अदृश्यत्वादिगुणक इति। योऽयमदृश्यत्वादिगुणको भूतयोनिरुक्तः स परमात्मैव भवितुमर्हति, नापरः प्रधानं जीवो वा। कुतः? तद्धर्मोक्तेः। "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते ॥" इति सर्वज्ञात् सर्वविदो नामरूपाद्युत्पत्तिः श्रूयते इति भूतयोनेः सर्वज्ञत्वं सर्ववित्त्वं च धर्मौ परमात्मन एव परमचेतनस्य सम्भवतो नाचेतनस्य प्रधानस्य। यद्यपि जीवश्चेतनस्तथापि न स भूतयोनिः, "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुत्या ब्रह्मण एव तदभिधानात्, "जगद्व्यापारवर्जमि"ति न्यायाच्च। ततश्च "क्षरात् सम्भवतीह विश्वमि"त्यक्षरमपि ब्रह्मैव बोध्यम्, अतो "ऽक्षरात् परतः पर" इत्यपि क्षरशब्दो जीवमेवाभिधत्ते न प्रधानमवैदिकत्वात्। प्रधानसारूप्याच्च तत्कार्यत्वं जगतः पश्चान्निराकरिष्यते। किञ्च परापरविद्ययोर्वेदितव्यत्वमुक्त्वा ऋग्वेदादिलक्षणामपरविद्यामभिधाय "अथ परा यया तदक्षरमधिगम्यते" इत्यक्षरस्य परविद्याधिगम्यत्वमुक्तम्। परा च विद्या ब्रह्मविद्यैव, तस्या एव सर्वविद्याप्रतिष्ठात्वात् सर्वविज्ञानहेतुत्वाच्च, "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे"ति पूर्वोक्तेः, "कस्मिन् खलु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति" शौनकप्रश्नानन्तरं परविद्यात्वेनाक्षरविद्याभिधानाच्च। ब्रह्मविद्याया एव सर्वविज्ञानहेतुत्वं श्रुत्यन्तरेऽप्युक्तम्, "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" इति ब्रह्मैवात्र भूतयोनिरक्षरपदार्थो बोध्यः ॥२१॥

श्रीः

# अनुकूल-गलहस्तकम्

## ( प्रहसनम् )

### भट्टपल्लीवास्तव्य-श्रीविष्णुपदभट्टाचार्य-विरचितम्

### पात्रपरिचयः

| पुरुषाः | स्त्रियौ |
|---|---|
| १। दिव्येन्दु-सुन्दरः। ( नायकः। ) | १। यामिनी। ( नायिका। ) |
| २। रामावतारः। ( भिन्नभावापन्नं | २। शाश्वती। ( यामिन्याः सखी। ) |
| ३। विन्ध्याचलः। किङ्करद्वयम्। ) | |
| ४। सूत्रधारः। | |
| ५। नन्दकः। ( सूत्रधारस्य सहकारी। ) | |

प्रस्तावना

आ जन्मनोऽप्यकरुणं निजजन्ममूलं
यूनां निकृन्तति मनो विषमैः शरैर्यः।
सर्वातिशायि-विभवो भवकारणं वो
नित्यं प्रसादमधुरोऽस्तु मनोभवोऽसौ ॥१॥

( नान्द्यन्ते प्रविशतः सूत्रधार-नन्दकौ। )

सूत्र०। नन्दक! अद्य तावत् पौर्णमासी-विभावरी।

वेष्टितो गोपिकावृन्दैर्वृन्दावन-वनाङ्गने।
श्रीराधाहृदयानन्दनिदानं नन्दनन्दनः ॥२॥
निशां चन्द्रकरस्नातामीदृशीं हि महीयसीम्।
विदधे बहुविस्तारैर्लीलाविष्करणैः पुरा ॥३॥

एवंविधायां त्रियामायां निसर्गत एव प्रमोदाय स्पृहयन्ति सहृदयानां चेतांसि। केनापि कालोपयोगिना प्रहसनेन तत्रभवतां सन्तोषः सम्पादनीयः।

नन्द०। आर्य! नेदृशं किमपि प्रहसनं मे स्मृतिपथमायाति।

सूत्र०। कथम्? भट्टपल्लीनिवासेन शौनकेनोपेन्द्रसूनुना महामहोपाध्यायन्यायरत्नोपाधिक-राखालदासदौहित्रेण भट्टाचार्योपाह्वेन श्रीविष्णुपदशर्मणा नवनिबद्धम् अनुकूलगलहस्तकं नामास्त्येव किञ्चित् प्रहसनम्। तच्च कुशीलवैरनुशीलितं नाम। तदेवोपस्थाप्यतां विदुषां मनोरञ्जनाय।

नन्दः। प्रहसन-नाम्नाऽभिहितमपि न हि तत् पूर्णतया तल्लक्षणाक्रान्तम्।

सूत्र०। ततः किम्? परिवर्तितरूपोऽप्यसौ निबन्धो हास्यरसप्राचुर्यात् प्रहसनमेव भवतु।

नन्द०। आर्य! कथमत्रायं पक्षपातः? किमत्र वैशिष्ट्यं नाम?

सूत्र०। श्रूयताम्।

भाषाणां भारतीयानां प्रसूतिर्या सनातनी।
सर्वानाधुनिकान् भावान् साऽपि द्योतयितुं क्षमा ॥४॥

इत्येवानेन समर्थितं स्यात्।

नन्द०। तथाऽपि तुच्छमेवास्य विषयवस्तु। शङ्के प्रवीणमनोहरणाय नालमेव तत्।

सूत्र०। (विहस्य) हा हा हा हा! किमिदमुच्यते? तुच्छातितुच्छमपि वस्तु प्रायशो महोदर्कतया विपरिणमते। किं न वेत्सि—

स्फुलिङ्गादपि दिग्दाहो बीजादपि वनस्पतिः।
स्वल्पादपि विसंवादाद् विश्वयुद्धं प्रवर्तते ॥५॥

अत्रापि निबन्धे—

परिहासकृतालापैर्लघुभिर्यन्त्रमध्यतः।
तरुणी-तरुणौ नीतावच्छेद्यं प्रेमबन्धनम् ॥६॥

अलमलं विचिकित्सया। अत्रैव प्रवर्तन्तां कुशीलवाः।

नन्द०। यथाऽऽज्ञापयत्यार्यः। (उभौ निष्क्रान्तौ।)

---

## प्रथमोऽङ्कः

(अपसारितायां यवनिकायां नीशारेण द्विधाविभक्तो रङ्गमञ्चो दृश्यते। एकतो दिव्येन्दुसुन्दरगृहम्, अन्यतो यामिनीभवनम्। दिव्येन्दुः स्वगृहे काष्ठासनसमासीनो भृशं चिन्ताकुलो दृश्यते। पुरतो दारुमयमञ्चिकायां दूरश्रुतियन्त्रं (telephone) तदाधारस्थं वर्तते। यामिनीभवने यामिनी तत्सखी शाश्वती च नीचैरन्योन्यमाभाषमाणे दृश्येते। तत्रापि मञ्चिकायां दूरश्रुतियन्त्रमाधारस्थं विलसति।)

दिव्ये०। (निश्वस्य स्वगतम्) अहो दुर्दैवम्! क्वासौ यामिनीहतकः? बहुशश्चेष्टमानोऽपि तमहं नैव प्राप्नोमि। किमहं करोमि? भवतु पुनरपि यतिष्ये। (दूरश्रुति-यन्त्रं तदाधारादादाय संख्यानिर्देशकं चक्रम् (dial) आवर्तयन्नाभाष्येण संयोगमापादयति। यामिन्या भवने घण्टिका-ध्वनिः श्रूयते। साऽपि दूरश्रुतियन्त्रमुद्धृत्य कर्णे लगयति।)

दिव्ये०। हेलो! हेलो!

यामि०। हेलो! हेलो!

दिव्ये०। (स्वगतम्) अहो वीणाविनिन्दी तरुणीकण्ठस्वरः? यथाऽहं जानामि नास्त्येव सुहृद्गृहे साम्प्रतं काऽपि तरुणी। मन्ये नवागता काऽप्यात्मीया भवेत्। (प्रकाशम्) हेलो! किमदो यामिनीगृहम्?

यामि०। (स्वगतम्) अहो अपरिचितोऽयं तरुणकण्ठस्वरः! कोऽयं मामाह्वयति? (प्रकाशम्) भद्र! इदमेव यामिनीगृहम्। कथमाह्वयति मां भवान्?

दिव्ये०। भवतीम्? नहि, नहि। यामिनीमहमाभाषितुमिच्छामि। गुर्वस्ति मे प्रयोजनम्।

यामि०। किं प्रयोजनम्?

दिव्ये०। अद्यैव सायं मया गम्यते।

यामि०। अद्यैव? क्व गम्यते भवता?

दिव्ये०। किं नैतद्विदितं भवत्या?

यामि०। विदितं वा न वा, न तत् स्मर्यतेऽधुना। पुनरप्युच्यताम्।

दिव्ये०। यत्र गमनं पूर्वत एव स्थिरीकृतं तत्रैव गम्यते मया।

यामि०। स्वच्छन्दं गम्यताम्। शिवास्ते सन्तु पन्थानः।

दिव्ये०। भद्रे! नैकको गन्तुमुत्सहे।

यामि०। तर्हि सस्त्रीकमेव गम्यताम्। महान् खलु प्रमोदः स्यात्।

दिव्ये। सस्त्रीकम्? (विहस्य) हा हा हा हा! भद्रे! नाद्यापि कृतदारोऽहम्। ततो यामिनी-सहकृतो गन्तुमिच्छामि। असावेव मे बहिश्चराः प्राणाः।

यामि०। (सरोषम्) अहो धृष्टता! निरयं गच्छ त्वम्!

दिव्ये०। भद्रे! किमित्येवमुच्यते? कस्तावदत्र प्रसङ्गो धृष्टतायाः?

यामि०। न कोऽपि शिष्टम्मन्यो कामपि भद्रमहिलामित्थमाभाषते। मन्ये विद्यासम्पर्कविवर्जितो वर्वरोऽसि त्वम्।

दिव्ये०। अकारणं मह्यं रुष्यति भवती। नाहं वर्बरो नाऽपि विद्यासम्पर्करहितः। ऐषम एव स्नातकोत्तरपरीक्षोत्तीर्णोऽहम्। तथापि चेदकृतविद्योऽहं न जाने कथमन्यथा भवेयम्।

यामि०। (संशयितस्वरेण) किं ब्रवीषि? स्नातकोत्तरपरीक्षोत्तीर्णोऽसि त्वम्? (विहस्य) ही ही ही! ननु पृच्छामि, कति दिनानि गञ्जिकासक्तस्ते प्ररूढायाः?

दिव्ये०। अनुचित एवायमुपालम्भः। मद्वचनेऽप्यप्रत्ययश्चेत्, परीक्षाफलज्ञापकं वार्तापत्रमेव द्रष्टव्यं भवत्या।

यामि०। सत्यं वास्त्वनृतं वास्तु ते वचनं, तेन मे न किमपि हीयते। यमहं न जानाम्यपि नास्ति मे तस्य कृते काऽपि शिरोवेदना।

दिव्ये०। ( स्वगतम् ) अहो त्रुटिर्मे! मन्नामाऽपि नास्यै विज्ञापितम्। ( प्रकाशम् ) भद्रे दिव्येन्दुसुन्दरोऽहम्।

यामि०। दिव्येन्दुसुन्दरः? अर्थान्नभसश्चन्द्र इव सुदर्शनोऽसि? अहो रूपाभिमानः! सुदर्शनो वा कुरूपो वा, तेन किं मे? एवं विकत्थमानो लज्जितुमर्हसि त्वम्।

दिव्ये०। अत एवोच्यते "स्त्रीबुद्धिः प्रलयङ्करी"ति। सर्वमेव विपरीतं दृश्यते भवत्या। भद्रे! नेयं रूपश्लाघा, इयमेव पितृकृतेन नाम्ना मे लोकपरिचितिः।

यामि०। एवम्? मन्ये

यथा भवति काणोऽपि संज्ञया पद्मलोचनः।
तथैवाञ्जनकृष्णोऽपि भवान् दिव्येन्दुसुन्दरः ॥१॥

दिव्ये०। अलं प्रतिवादेन। भद्रे! समयोऽतिवर्तते। आहूयतामसौ मे सखा यामिनीकान्तः।

यामि०। किमुच्यते? यामिनीकान्तः? न कान्तविरहिता यामिनी? ( विहस्य ) ही ही ही हो! अधुना सर्वमेव स्पष्टम्।

दिव्ये०। भद्रे! कथमयं परिहासः? नामकरणसमये नाहं मे पित्राऽभिमन्त्रितो नापि मे सखा तज्जनकेन।

यामि०। नाभिमन्त्रितः? सत्यम्? अहो दुर्भाग्यम्! तिष्ठतु तावदयं प्रसङ्गः। भद्र! विषीदामि खलु विज्ञापयन्तो सखा ते नात्र सन्निहित इति।

दिव्ये०। न सन्निहितः? हा हतोऽस्मि! कर्पूरवत् कालीयतासौ वराकः?

यामि०। तदहं न जानामि।

दिव्ये०। अहो दुर्दैवम्! तमप्राप्य सर्वथोद्भ्रान्तोऽहं संवृत्तः।

यामि०। एवम्? नूनं परितापविषयोऽयम्। मद्वचनं क्रियते चेत्, त्वरितमेव राञ्चीपत्तनं गम्यताम्। तत्रैव बुद्धिस्थैर्यं ते सम्पत्स्यते।

दिव्ये०। अद्यैव सायन्तनबाष्पयानेन तत्रैव गम्यते मया।

यामि०। साधु क्रियते।

दिव्ये०। परन्तु यामिनी-विनाकृतं तत्र गमनं न मे सुखाय कल्पिष्यते। कृपयोच्यतामसौ

तद्द्वितीय एव गन्तुमिच्छाम्यहम्। तेनापि तथैव प्रतिश्रुतम्। तदर्थं बाष्पशकटे स्थानमपि संरक्षितमिति।

यामि०। भद्र! यामिनीगमनमद्य कथमपि न सम्भवति।

दिव्ये०। किं प्रतिश्रुतिरपि तेन गङ्गाम्भसि विसर्जिता?

यामि०। कथमुत्ताम्यति भवान्? द्वित्रैरेव दिवसैर्यामिन्यपि गमिष्यति।

दिव्ये०। तत्तु न मे रोचते। भवतु। कृपयोच्यतामसौ राञ्चीनगर्यां मया सहैव वस्तव्यं तेनेति।

यामि०। भद्र! अनिवार्यकारणेन तदपि न सम्भवति। राञ्चीनगरे हिनुपल्ल्यां रञ्जन-कुटीराख्ये प्रवासभवने पृथगेव वत्स्यत्यसौ।

दिव्ये०। (सविषादम्) हा धिक्! किमत्रापि मतिपरिवर्तनम्?

परिवर्तते धीस्तस्य प्रतिसूर्यकवर्णवत्।

यामि०। किमत्र चित्रम्?

परिवर्तनशीला हि निखिलैव वसुन्धरा ॥२॥

दिव्ये०। भवतु। तत्रैव रञ्जन-कुटीरे तमहं द्रक्ष्यामि। अमातुलात् काणमातुलोऽपि वरम्।

यामि०। कोऽत्र संशयः?

दिव्ये०। भद्रे! कृतार्थोऽहमनेन भवत्याः सौजन्येन। ननु पृच्छामि कया मे संलापसौभाग्यं जातम्?

यामि०। अर्थात् काऽहमिति जिज्ञास्यते। अशोभनमिदं कौतूहलम्। ततोऽहम-परिचितैव स्थातुमिच्छामि। नमस्ते।

दिव्ये०। हेलो! हेलो!

(यामिनी कलहास्येन दूरश्रुति-यन्त्रमाधारे स्थापयति।)

दिव्ये०। हेलो! हेलो! ननु पृच्छामि—हा धिक्! संयोगोऽपि विच्छिन्नः! केयं कौतुकप्रिया रहस्यमयी?

दूरान्निशम्य पिक-काकलि-मञ्जु-कण्ठं
मन्ये नवेन वयसाऽद्य विकस्वरेयम्।
रूपं तथैव सुषमं यदि नाम धत्ते
धन्यस्तदीयवरमाल्यधरो धरायाम् ॥३॥

अथवा नेदृशी चिन्ता साम्प्रतं युज्यते। राञ्चीपुरमेव गत्वा कथमपि सा न द्रष्टव्यः। (विनिश्वसन् दूरश्रुति-यन्त्रं तदाधारे निवेशयति। तस्मिन्नेव क्षणे यवनिकार्ध-

पातेन दिव्येन्दुसुन्दरगृहसमन्वितं मञ्चार्धमदृश्यं भवति। अन्यतरार्धं तु दृश्यमानमेवास्ते। यामिनी कलहास्यं कुर्वाणा तिष्ठति। )

शाश्व०। संम्रियतामुन्मत्तिके संम्रियतामुल्लासः। किं श्वासरोधेन मर्तुमिच्छसि ?

यामि०। (हसन्त्येव) अहो कौतुकम्! ही ही ही ही! हन्त कुक्षिर्मे दूयते। तथापि नात्मनः प्रभवामि। ही ही ही ही!

शाश्व०। तर्हि यमालयं गच्छ।

यामि०। (हासं कथमपि संवृत्य) अहो पुरुषाणां सारल्यम्!

शाश्व०। नाहं सम्यगवगतार्था। त्वयोक्तान्येव वचांसि मया श्रुतानि न तु तेन।

यामि०। तर्हि समासतः श्रूयताम्।

आदौ पृष्टाऽहममुना 'किमदो यामिनीगृहम्'।
मामेवाह्वयतीत्येवं भ्रान्तिस्तस्मादजायत ॥४॥
सखायं यामिनीकान्तमन्विष्यति न मामिति।
प्रतीतिस्तु ततो जाता तस्यैव वचनैर्मम ॥५॥
यन्त्रसंयोगवैकल्यं शङ्कितं न तथाऽप्यहो।
मन्यमानोऽथ स आसीन्मां मित्रालयवासिनीम् ॥६॥
प्रवासाय प्रतिष्ठासुरसावद्य समित्रकः।
विज्ञसश्च दिनैर्द्वित्रैर्यामिन्यपि गमिष्यति ॥७॥

शाश्व०। सर्वं स्पष्टमधुना। ननु पृच्छामि किमसौ यामिनीकान्तस्ते परिचितः ?

यामि०। परिचितः ? नास्य नामापि मया श्रुतपूर्वम्।

शाश्व०। तर्हि कथं मृषोद्येन प्रवञ्चितोऽसौ तपस्वी ?

यामि०। क्व तावन्मिथ्याभाषणम् ?

सखाऽस्य तत्र गन्तेति न जातु जल्पितं मया।

शाश्व०। किन्तु तर्हि त्वया प्रोक्तं ? किंवाऽयं मे श्रुतिभ्रमः ॥८॥

यामि०। यामिन्यपि गमिष्यतीति मयोक्तम्।

शाश्व०। समार्थकमेव तत्।

यामि०। नहि। अहमपि नाम्ना यामिनी।

शाश्व०। तेन किम् ?

यामि०। अहमेव द्वित्रैर्दिवसै राञ्चीपुरं गमिष्यामि।

शाश्व०। सत्यम् ? नैतन्मे विदितम्।

यामि०। सद्य एव सङ्कल्पोऽयं गृहीतः।

शाश्व० । कथं साहसेऽस्मिन् प्रवृत्तिः ?

यामि० । शाश्वति ! एतदेव मे कर्तव्यम् । ममैव सत्येनापि वचसा जनितभ्रमोऽयम् । भ्रमोऽसौ मयैव निरसनीयः ।

शाश्व० । कथं संलापक्षण एव नापनोदितः ।

यामि० । एतदपि वक्तव्यम् ? तथा चेदकरिष्यत प्रारब्धस्य कौतुकस्याकालमरणमभविष्यत् ।

शाश्व० । सखि ! विचित्रैव प्रकृतिस्ते ।

एकतो न निवृत्ताऽसि परवञ्चनकिल्बिषात् ।
अन्यतः प्रसिताऽसि त्वं प्रायश्चित्तविधावपि ॥९॥
गण्डूपदं विचिन्वाना प्राप्ताऽस्युरगसन्निधिम् ।
नर्मोदकेन सिक्तस्ते प्ररूढः प्रणयाङ्कुरः ॥१०॥

सत्यं ब्रूहि किं निपुणमनुमितं मया न वेति ।

यामि० । शाश्वति ! उल्लम्फनशीलेयं ते कल्पनाप्रवणता ।

शाश्व० । अयि गोपनचारिणि ! मदक्ष्णोर्धूलिप्रक्षेपो नैव सुकरः ।

यामि० । यथाभिरुचि मन्यताम् ।

शाश्व० । साधयाम्यहमधुना । ( समुत्तिष्ठति । )

यामि० । स्मर्यतां तावत् परश्व एव सान्ध्यशकटेन राञ्चीपुरमभि यातव्यं मया । त्वमपि सहगमनाय कृतोद्योगा तिष्ठ ।

शाश्व० । अवश्यमेव स्थास्यामि । त्वदभियानस्य परिणतिदर्शने भृशमुत्सुकाऽहम् । ( उभे निष्क्रान्ते । )

---

## द्वितीयोऽङ्कः

( राञ्चीपुरस्थं रञ्जनकुटीराख्यं प्रवासभवनम् । बहिष्प्रकोष्ठे कुट्टिमासीनो रामावतारो वामकरतलस्थं चूर्णविमिश्रं ताम्रकूटपत्रखण्डं दक्षिणकराङ्गुष्ठेन पिनष्टि सशिरः-कम्पमुच्चैर्गायति च । )

रामा० । जय रघुवंशज ! राम !
दशमुखभञ्जन ! जनगणरञ्जन !
पूरित-मानस-काम !
जय दूर्वादल-मेदुर-कान्ते !
निखिल-धरणि-तल-विरचित-शान्ते !

विन्ध्या० । सुवेषेण सुरूपेण केनचित् तरुणेन ।

रामा० । सुवेषेण ? सुरूपेण ? तरुणेन ? नहि नहि । नैतत् कथमपि प्रत्ययमर्हति ।

विन्ध्या । अविमिश्रं सत्यमेव कथयामि । न केवलं तथा, मित्रपरिचयेन विश्वासमप्य-जनयदसौ तस्करः ।

रामा० । विन्ध्याचल ! ब्रूहि तावत्, किमहं प्रकृतिस्थो न वा ? ( विन्ध्याचलश्चपेटया रामावतारस्य पृष्ठं प्रसभमाहन्ति । )

रामा० । ( यन्त्रणासूचकमार्तनादं कुर्वन् ) आः कथं प्रहरसि माम् ?

विन्ध्या० । सम्यक् प्रकृतिस्थोऽसि त्वं यतः स्पर्शानुभूतिस्ते प्रखरैव ।

रामा० । मन्ये खैनी-सेवनेन विकृतं ते मस्तिष्कं नोचेत् कथं विश्वासानर्हमुपन्यस्यते त्वया । सुवेषस्तस्करो न जातु मया दृष्टः ।

विन्ध्या० । यद् वृत्तं तदेव कथितं मया । भद्रवेषधरो भवतु वा न वा न क्वाऽपि विश्वासः स्थापनीयः । अभद्रादपि भद्रः समधिकतरं शङ्कनीयः । “मणिना भूषितः सर्पः किमसौ न भयङ्करः ?”

रामा० । अथ किम् । सत्यमेवोक्तं त्वया । तन्मयाऽपि नयनयुगलमुन्मील्य स्थातव्यम् । उपकृतोऽहं ते वचनेन ।

( ततः प्रविशति दिव्येन्दुसुन्दरः । रामावतारस्तं शङ्कितदृशा निर्वर्णयति । )

दिव्ये० । हंहो ! किमिदं यामिनीगृहम् ?

रामा० । ( विन्ध्याचलं प्रति जनान्तिकम् ) विन्ध्याचल !

विन्ध्या० । भ्रातः !

रामा० । पश्यसि ?

विन्ध्या० । पश्याम्येव । जाग्रदेवाहमस्मि ।

रामा० । सुवेषः सुरूपश्चायं तरुणः ।

विन्ध्या० । तथैव ।

दिव्ये० । ( विरज्यमानः ) किं बधिरौ युवाम् ? अश्रुत्वा प्रश्नं मे किमन्योन्यम् आभाषेथे ? ननु पृच्छामि किमिदं यामिनीगृहम् ? हन्त ! अत्यद्भुतयोः पुंसोः कवलं प्रविष्टोऽस्मि ।

रामा० । ( प्रकाशम् ) क्षणं तिष्ठतु भवान् । ( विन्ध्याचलं प्रति जनान्तिकम् ) विन्ध्याचल ! किमहं ब्रवीमि ?

विन्ध्या० । सत्यमेवोच्यताम् ।

रामा० । ( प्रकाशम् ) भद्र ! इदमेव तद्गृहम् ।

दिव्ये० । तर्हि त्वरितं गम्यतां निवेद्यताश्च प्रियसुहृद् दिव्येन्दुसुन्दरः प्राप्त इति ।

रामा० । क्षणं तिष्ठतु भवान् । ( विन्ध्याचलं प्रति जनान्तिकम् ) विन्ध्याचल !

विन्ध्या० । भ्रातः !

रामा० । श्रुतम् ?

विन्ध्या० । श्रुतमेव ।

रामा० । अयमपि मित्रपरिचयेनात्मानमुपस्थापयति ।

विन्ध्या० । तथा ।

रामा० । ततस्तस्कर एवायमित्यत्र नास्ति मे कोऽपि संशयः ।

विन्ध्या० । नापि मम ।

रामा० । तत् किं विलम्ब्यते ?

विन्ध्या० । किं कृतमिच्छसि ?

रामा० । झटिति गृह्यतामयं तस्करापसदः ।

विन्ध्या० । किं मस्तिष्कविकृतिस्ते जाता ? द्वितीयपाण्डव इव बलवानयम् । नैकाकोऽस्मिन् कर्मणि प्रवर्तितुमुत्सहे ।

रामा० । अस्मादपि बलवत्तरस्त्वम् । अहमपि ते सहायो भविष्यामि ।

विन्ध्या० । तर्हि कौशलेनैव साधनीयमेतत् । प्रागुपवेश्यतामसौ ।

दिव्ये० । कियन्तं कालं प्रतीक्षितव्यं मया ? त्वर्यताम् ! त्वर्यताम् !

रामा० । भद्र ! इदमासनम् । अत्रोपविशतु भवान् यावदहमन्तः प्रविश्य भवदागमनवार्तां निवेदयामि ।

( यावद्दिव्येन्दुः काष्ठासने निषीदति, तावद् रामावतार-विन्ध्याचलौ तमाक्रामतः । )

दिव्ये० । ( सन्त्रस्तः ) आः किं क्रियते, किं क्रियते ? मुञ्च, मुञ्च माम् ।

( विन्ध्याचलः स्वस्कन्धलम्बमानां गात्रमार्जनीमादाय दिव्येन्दोर्मुखविवरम् अवष्टभ्नाति । दिव्येन्दुर्वृथैवात्मानं मोचयितुं विचेष्टते । )

दिव्ये० । ( निरुद्धकण्ठस्वरः ) आँ आँ आँ आँ !

विन्ध्या० । न भेतव्यम् । एषोऽहं त्वां श्वशुरालयं प्रेषयामि । रामावतार ! रज्जुः ! रज्जुः ! ( रामावतारो निष्क्रम्य रज्जुखण्डेन प्रविशति । तेन च दिव्येन्दुं काष्ठासनेन दृढं निबध्नाति । )

रामा० । आः ! निश्चिन्तोऽहमधुना । ( विन्ध्याचलमाश्लिष्य ) भ्रातर्विन्ध्याचल । असाध्यमेव साधितं त्वया । न जाने कथमनृणी भवेयम् । सुप्रसन्नाया भर्तृदारिकायाश्चेदुपायनं लभ्येत तदर्धं तुभ्यमवश्यमेव दास्यामि ।

विन्ध्या०। ( दन्तविकाशपूर्वकं स्मयमानः ) पश्चाद् यथाभिरुचि क्रियताम्। अधुना तु नगररक्षिणमाहूय तत्करे समर्पणीयोऽसौ श्वशुरपुत्रः।

रामा०। यथार्थमुक्तं त्वया। एषोऽहं गच्छामि। दुर्धर्षोऽयं तस्करः। अवहितेन त्वयाऽपि वर्तितव्यम्।

( रामावतारो धावन्नेव निर्गमद्वारमुपैति। प्रविशति श्रमणोचितनेपथ्या यामिनी, तत्पृष्ठतः शाश्वती च। )

यामि०। तिष्ठ तिष्ठ। ऊर्ध्वश्वासं क्व गम्यते त्वया?

रामा०। ( सम्भ्रान्तवत् ) भर्तृदारिके नगररक्षिणा प्रयोजनम्। तस्करो गृहीतः।

यामि०। ( विस्मिता ) तस्करः? क्वासौ? ( रामावतारस्तर्जन्या दिव्येन्दुं निर्दिशति। यामिनी शाश्वती च तं निकषा गच्छतः। )

यामि०। किमयमेव तस्करः? आश्चर्यम्! नायमाकृत्या तद्वद् दृश्यते।

रामा०। अनेनैव शङ्करप्रसादश्रेष्ठिनो गृहात् सर्वस्वमपहृतम्।

यामि०। कस्त्वं भोः? कथमियं ते दुर्मतिः?

दिव्ये०। ( निरुद्धकण्ठस्वरः ) आँ! आँ! आँ! आँ!

यामि०। रामावतार! किमपि वक्तुकामोऽयम्। प्रागेव मुखबन्धनमपनीयताम्। ( रामावतारस्तथा करोति। )

यामि०। ( दिव्येन्दुं प्रति ) यद्वक्तव्यमधुनोच्यताम्।

दिव्ये०। भद्रे!

न मे किमपि वक्तव्यं मतिर्मे मूढतां गता।
तिष्ठाम्युत्कर्ण एवाहं श्रोतव्यमस्ति मे बहु ॥२

यामि०। किं श्रोतुमिच्छसि?

दिव्ये०। ननु पृच्छामि किमपराद्धं मया? कथं वा तस्करवन्निगृहीतोऽहम्?

रामा०। तस्करोऽसि। ततो नार्हसि श्वशुरालयवदाप्यायनम्!

यामि०। रामावतार! किमत्रापहृतमनेन?

रामा०। अपहृतम्? न किमपि। अपहरणात् प्रागेवायं बन्दीकृतः। अन्यथा सर्वस्वमेवापाहरिष्यत्।

यामि०। कथं ज्ञायते?

रामा०। दृश्यतामस्य विलासिजनोचिताकल्पविधानम्।

यामि०। पश्यामि! ततः किम्?

रामा०। वीक्ष्यतामस्य मदनमोहनं रूपम्।

यामि०। ( सलज्जम् ) तदपि पश्यामि। ततः किम् ?

रामा०। निर्वर्ण्यतामस्य शौर्यान्वितं तारुण्यम्।

यामि०। सर्वमेव पश्यामि। किमत्र शङ्काकारणम् ?

रामा०। दुर्वृत्तोऽयं मित्रपरिचयेन विश्वासं जनयितुं यतते स्म।

यामि०। ( दिव्येन्दुं प्रति ) किमिदं सत्यम् ?

दिव्ये०। किं मयोक्तेन ? यतो भवत्याः किङ्कर एव प्रमाणम्।

रामा०। ( सतर्जनम् ) कथमपलपसि ? किमिदं यामिनीगृहमिति किं प्रथममेव न पृष्टं त्वया ? सुहृदागमनवार्ता निवेद्यतामिति किं पश्चान्नोक्तम् ?

यामि०। ( सविस्मयम् ) किमेतदेव कथितं त्वया ?

दिव्ये०। कथितमेव।

यामि०। तर्हि मृषैवोक्तं त्वया। दूरेऽस्तु मैत्री, मुखमपि ते न जातु मया दृष्टपूर्वम्।

दिव्ये०। दृष्टपूर्वमिति किं मया कथ्यते ?

यामि०। तर्हि कथमयमुपन्यासः ? अभिसन्धिस्ते कुटिल इव प्रतिभाति। किंनामाऽसि त्वम् ?

दिव्ये०। ( स्मयमानः ) भद्रे ! दिव्येन्दुसुन्दरोऽहम्।

यामि०। ( सपदि परिवर्तितमुखवर्णा ) अहो लज्जा ! रामावतार ! किमिदमनुष्ठितं त्वया ? न जाने कथं दुष्कृतमिदमकृतं भवेत्। द्रागपनीयताम् अत्रभवतो बन्धनम्।

रामा०। भर्तृदारिके ! तस्करं प्रति नेदृशी करुणा युज्यते।

यामि०। ( सतर्जनम् ) मूर्ख ! तूष्णीमास्स्व। भृत्योऽसि त्वम्, भृत्यवदाचर। मौनमाश्रित्य मद्वचनमेव क्रियताम्।

रामा०। ( अप्रसन्नः स्वगतम् ) अहो अहो तरुणीनां मतितारल्यम् ! ( यथादिष्टं करोति। )

यामि०। रामावतार ! विन्ध्याचलेन साकं बहिरेव गन्तव्यं त्वया ? युष्मद्दर्शनमपि मे नेत्रशूलं जनयति। ( उभे निष्क्रामतः। )

दिव्ये०। ( आसनादायासेनोत्थाय ) भद्रे ! परमनुगृहीतोऽहमनेनायाचितकारुण्येन। एवंविधैव गृहागतसंवर्धनरीतिरत्र प्रभवतीति न मया विदितपूर्वम्।

यामि०। ( त्रपया स्खलितवचना ) म-म-म-मर्षयतु मामत्रभवान्। ना ना-नाहं ज्ञानतः कृतापराधा।

दिव्ये०। सम्भवत्येव। ननु पृच्छामि किं सखा मे यामिनीकान्तोऽत्र समागतः ? ( यामिनी मौनमाश्रित्य शिरः सञ्चालयति। )

दिव्ये० । नागतः ? अहो दुर्दैवम् ! तत् कथं वा द्वित्रैरेव दिवसैरागच्छेदिति दूरश्रुति-यन्त्रेण कथितं मे । अद्य तावच्चतुर्थो दिवसः । ( शाश्वती पुरत उपसर्पति । )

शाश्व० । भद्र ! केनैवमुक्तम ? भवन्मित्रेणैव ?

दिव्ये० । नहि नहि । मित्रगृहवास्तव्यया कयापि महिलयेति मन्ये । कण्ठस्वरेणा-नुमीयते यदियमेव सा महिलेति । ( तर्जन्या यामिनीं निर्दिशति । यामिनी लज्जारक्तं मुखमवनमयति । )

दिव्ये० । ( यामिनीं प्रति ) भद्रे ! कथमेवमनृतं भाषितं भवत्या ?

क तावदनवद्यं ते मुखं फुल्लमिवोत्पलम् ।
क वाऽनर्थकरी वाणी दूये समधिकं ततः ॥३॥

मन्ये स्वभावतो निष्ठुराऽसि भवती । ततो निर्दोषाणां निग्रहेण महानुल्लासः समधिगम्यते । ( यामिनी तूष्णीमास्ते । )

शाश्व० । भद्र ! नूनं निगृहीतो भवान् । तथाऽपि प्रतिनिग्रहेण वरशोधनं नोपपद्यते भवति । किमेतन्न बुध्यते दूरस्थितयोरावयोः किङ्करकरनिकारस्ते जात इति ।

दिव्ये० । सत्यम् । तथाऽपि कथं वा न बुध्यते भवतीभ्यां यद् दूरश्रुतियन्त्रेणानृत-भाषणमेव सर्वानर्थनिदानम् ?

शाश्व० । नैवं वक्तव्यम् । नानया किमपि मृषा भाषितम् ।

दिव्ये० । ( विस्मयं नाटयन् ) दुर्बोधं वचनमिदम् !

शाश्व० । सौम्य !

दुर्दैवाद् यामिनीसंज्ञा भवन्मित्रञ्च मत्सखी ।
बिभ्रतस्तत एवेयं प्रतिपत्ति-विमूढता ॥४॥
द्वित्रैरेव दिनैरत्र यामिन्यप्यागमिष्यति ।
यदिदं भाषितं तत्तु कार्यतोऽपि स्वनुष्ठितम् ॥५॥

अत एवैनामत्रागतां पश्यति भवान् ।

दिव्ये० । ( प्रसीदन् ) सर्वमधुना स्पष्टम् । पश्यामि तदानीं मित्रभवने यामिनीपद-वाच्यानां मेलकोऽभूत् । ( हसन् ) हा हा हा हा !

शाश्व० । न तथा । नेयं मे सखी भवन्मित्रभवनमधिवसति । दूरश्रुतियन्त्रसंयोग-प्रमादादेव मत्सख्याऽसौ संलापः समभवत् ।

दिव्ये० । ( विस्मयं नाटयन् ) यन्त्रसंयोगप्रमादः ! ( क्षणं तूष्णीमवस्थाय समुच्चै र्हसति । ) हा हा हा हा ! तर्हि मयाऽपि गर्दभायितम् ! ( भूयो गाम्भीर्यं

यामि० । ( सलज्जम् ) तदपि पश्यामि । ततः किम् ?

रामा० । निर्वर्ण्यतामस्य शौर्यान्वितं तारुण्यम् ।

यामि० । सर्वमेव पश्यामि । किमत्र शङ्काकारणम् ?

रामा० । दुर्वृत्तोऽयं मित्रपरिचयेन विश्वासं जनयितुं यतते स्म ।

यामि० । ( दिव्येन्दुं प्रति ) किमिदं सत्यम् ?

दिव्ये० । किं मयोक्तेन ? यतो भवत्याः किङ्कर एव प्रमाणम् ।

रामा० । ( सतर्जनम् ) कथमपलपसि ? किमिदं यामिनीगृहमिति किं प्रथममेव न पृष्टं त्वया ? सुहृदागमनवार्ता निवेद्यतामिति किं पश्चान्नोक्तम् ?

यामि० । ( सविस्मयम् ) किमेतदेव कथितं त्वया ?

दिव्ये० । कथितमेव ।

यामि० । तर्हि मृषैवोक्तं त्वया । दूरेऽस्तु मैत्री, मुखमपि ते न जातु मया दृष्टपूर्वम् ।

दिव्ये० । दृष्टपूर्वमिति किं मया कथ्यते ?

यामि० । तर्हि कथमयमुपन्यासः ? अभिसन्धिस्ते कुटिल इव प्रतिभाति । किं-नामाऽसि त्वम् ?

दिव्ये० । ( स्मयमानः ) भद्रे ! दिव्येन्दुसुन्दरोऽहम् ।

यामि० । ( सपदि परिवर्तितमुखवर्णा ) अहो लज्जा ! रामावतार ! किमिदमनुष्ठितं त्वया ? न जाने कथं दुष्कृतमिदमकृतं भवेत् । द्रागपनीयताम् अत्रभवतो बन्धनम् ।

रामा० । भर्तृदारिके ! तस्करं प्रति नेदृशी करुणा युज्यते ।

यामि० । ( सतर्जनम् ) मूर्ख ! तूष्णीमास्स्व । भृत्योऽसि त्वम्, भृत्यवदाचर । मौनमाश्रित्य मद्वचनमेव क्रियताम् ।

रामा० । ( अप्रसन्नः स्वगतम् ) अहो अहो तरुणीनां मतितारल्यम् ! ( यथादिष्टं करोति । )

यामि० । रामावतार ! विन्ध्याचलेन साकं बहिरेव गन्तव्यं त्वया ? युष्मद्दर्शनमपि मे नेत्रशूलं जनयति । ( उभे निष्क्रामतः । )

दिव्ये० । ( आसनादायासेनोत्थाय ) भद्रे ! परमनुगृहीतोऽहमनेनायाचितकारुण्येन । एवंविधैव गृहागतसंवर्धनरीतिरत्र प्रभवतीति न मया विदितपूर्वम् ।

यामि० । ( त्रपया स्खलितवचना ) म-म-म-मर्षयतु मामत्रभवान् । ना ना-नाहं ज्ञानतः कृतापराधा ।

दिव्ये० । सम्भवत्येव । ननु पृच्छामि किं सखा मे यामिनीकान्तोऽत्र समागतः ?
( यामिनी मौनमाश्रित्य शिरः सञ्चालयति । )

दिव्ये०। नागतः ? अहो दुर्दैवम् ! तत् कथं वा द्वित्रैरेव दिवसैरागच्छेदिति दूरश्रुतियन्त्रेण कथितं मे। अद्य तावच्चतुर्थो दिवसः। ( शाश्वती पुरत उपसर्पति।)

शाश्व०। भद्र ! केनैवमुक्तम ? भवन्मित्रणैव ?

दिव्ये०। नहि नहि। मित्रगृहवास्तव्यया कयापि महिलयेति मन्ये। कण्ठस्वरेणानुमीयते यदियमेव सा महिलेति। ( तर्जन्या यामिनीं निर्दिशति। यामिनी लज्जारक्तं मुखमवनमयति।)

दिव्ये०। ( यामिनीं प्रति ) भद्रे ! कथमेवमनृतं भाषितं भवत्या ?

क तावदनवद्यं ते मुखं फुल्लमिवोत्पलम्।
क वाऽनर्थकरी वाणी दूये समधिकं ततः ॥३॥

मन्ये स्वभावतो निष्ठुराऽसि भवती। ततो निर्दोषाणां निग्रहेण महानुल्लासः समधिगम्यते। ( यामिनी तूष्णीमास्ते।)

शाश्व०। भद्र ! नूनं निगृहीतो भवान्। तथाऽपि प्रतिनिग्रहेण वरशोधनं नोपपद्यते भवति। किमेतन्न बुध्यते दूरस्थितयोरावयोः किङ्करकरनिकारस्ते जात इति।

दिव्ये०। सत्यम्। तथाऽपि कथं वा न बुध्यते भवतीभ्यां यद् दूरश्रुतियन्त्रेणानृतभाषणमेव सर्वानर्थनिदानम् ?

शाश्व०। नैवं वक्तव्यम्। नानया किमपि मृषा भाषितम्।

दिव्ये०। ( विस्मयं नाटयन् ) दुर्बोधं वचनमिदम् !

शाश्व०। सौम्य !

दुर्दैवाद् यामिनीसंज्ञा भवन्मित्रश्च मत्सखी।
विभ्रतस्तत एवेयं प्रतिपत्ति-विमूढता ॥४॥
द्वित्रैरेव दिनैरत्र यामिन्यप्यागमिष्यति।
यदिदं भाषितं तत्तु कार्यतोऽपि स्वनुष्ठितम् ॥५॥

अत एवैनामत्रागतां पश्यति भवान्।

दिव्ये०। ( प्रसीदन् ) सर्वमधुना स्पष्टम्। पश्यामि तदानीं मित्रभवने यामिनीपदवाच्यानां मेलकोभूत्। ( हसन् ) हा हा हा हा !

शाश्व०। न तथा। नेयं मे सखी भवन्मित्रभवनमधिवसति। दूरश्रुतियन्त्रसंयोगप्रमादादेव मत्सख्याऽसौ संलापः समभवत्।

दिव्ये०। ( विस्मयं नाटयन् ) यन्त्रसंयोगप्रमादः ! ( क्षणं तूष्णीमवस्थाय समुच्चैर्हसति।) हा हा हा हा ! तर्हि मयाऽपि गर्दभायितम् ! ( भूयो गाम्भीर्यं

यामि० । ( सलज्जम् ) तदपि पश्यामि । ततः किम् ?

रामा० । निर्वर्ण्यतामस्य शौर्यान्वितं तारुण्यम् ।

यामि० । सर्वमेव पश्यामि । किमत्र शङ्काकारणम् ?

रामा० । दुर्वृत्तोऽयं मित्रपरिचयेन विश्वासं जनयितुं यतते स्म ।

यामि० । ( दिव्येन्दुं प्रति ) किमिदं सत्यम् ?

दिव्ये० । किं मयोक्तेन ? यतो भवत्याः किङ्कर एव प्रमाणम् ।

रामा० । ( सतर्जनम् ) कथमपलपसि ? किमिदं यामिनीगृहमिति किं प्रथममेव न पृष्टं त्वया ? सुहृदागमनवार्ता निवेद्यतामिति किं पश्चान्नोक्तम् ?

यामि० । ( सविस्मयम् ) किमेतदेव कथितं त्वया ?

दिव्ये० । कथितमेव ।

यामि० । तर्हि मृषैवोक्तं त्वया । दूरेऽस्तु मैत्री, मुखमपि ते न जातु मया दृष्टपूर्वम् ।

दिव्ये० । दृष्टपूर्वमिति किं मया कथ्यते ?

यामि० । तर्हि कथमयमुपन्यासः ? अभिसन्धिस्ते कुटिल इव प्रतिभाति । किंनामाऽसि त्वम् ?

दिव्ये० । ( स्मयमानः ) भद्रे ! दिव्येन्दुसुन्दरोऽहम् ।

यामि० । ( सपदि परिवर्तितमुखवर्णा ) अहो लज्जा ! रामावतार ! किमिदमनुष्ठितं त्वया ? न जाने कथं दुष्कृतमिदमकृतं भवेत् । द्रागपनीयताम् अत्रभवतो बन्धनम् ।

रामा० । भर्तृदारिके ! तस्करं प्रति नेदृशी करुणा युज्यते ।

यामि० । ( सतर्जनम् ) मूर्ख ! तूष्णीमास्स्व । भृत्योऽसि त्वम्, भृत्यवदाचर । मौनमाश्रित्य मद्वचनमेव क्रियताम् ।

रामा० । ( अप्रसन्नः स्वगतम् ) अहो अहो तरुणीनां मतितारल्यम् ! ( यथादिष्टं करोति । )

यामि० । रामावतार ! विन्ध्याचलेन साकं बहिरेव गन्तव्यं त्वया ? युष्मद्दर्शनमपि मे नेत्रशूलं जनयति । ( उभे निष्क्रामतः । )

दिव्ये० । ( आसनादायासेनोत्थाय ) भद्रे ! परमनुगृहीतोऽहमनेनायाचितकारुण्येन । एवंविधैव गृहागतसंवर्धनरीतिरत्र प्रभवतीति न मया विदितपूर्वम् ।

यामि० । ( त्रपया स्खलितवचना ) म-म-म-मर्षयतु मामत्रभवान् । ना ना-नाहं ज्ञानतः कृतापराधा ।

दिव्ये० । सम्भवत्येव । ननु पृच्छामि किं सखा मे यामिनीकान्तोऽत्र समागतः ? ( यामिनी मौनमाश्रित्य शिरः सञ्चालयति । )

नाटयन् ) तथाऽपिच्छलनाप्रवृत्तिरत्र सुस्पष्टा दृश्यते। कथं जानत्याऽपि सख्या ते मद्भ्रान्तिर्नापनोदिता ?

शाश्व०। तदेवास्याः कर्तव्यमासीत्। परं ललनाजनसुलभकौतुकप्रियताऽत्र प्रभवति स्म।

दिव्ये०। ( तिक्तस्वरेण ) एकतः कौतुकासक्तिर्योषितां चित्ततोषिणी।
अन्यतो निग्रहः पुंसां निष्कारणोऽतिदुःसहः ॥६॥

( यामिनीं प्रति ) अयि सुचरिते ! नेदृशी लघुचित्तता करुणामय्यां रमण्यां युज्यते।

शाश्व०। सौम्य ! यदिदमत्याहितं वृत्तं तेन सखी मे लज्जया म्रियमाणा तिष्ठति। चापलकृतकौतुकम् ईदृगशुभानुबन्धि भवेदिति स्वप्नेऽपि नाकलितमनया।

तथाऽपि कृतमज्ञानाद् यदिदं पातकं महत्।
तन्मर्षणसुपर्याप्तं महौदार्यं किमस्ति ते ॥७॥

दिव्ये०। ( स्मयमानः ) भद्रे ! विमृश्यैवोत्तरं प्रदेयं मया।

शाश्व०। ( कृताञ्जलिः ) महात्मन् ! मर्षितेयं भवतु वा मा वा भूत्, आतिथ्यसंविधानेन पापमिदं लघयितुमुत्सुका वयम्। केवलं भवदनुमतिरपेक्ष्यते।

दिव्ये०। ( स्मयमानः ) आतिथ्यं चेन्निग्रहापरनाम न भवति, यथेष्टं क्रियताम्। शमनसमानाभ्यां किङ्कराभ्यां युध्यमानो बुभुक्षयाऽप्याक्रान्तोऽहम्।

शाश्व०। ( सहर्षम् ) महानयं प्रसादः। भद्र ! गृह्यतामासनम्। इयमहम् आगच्छामि। ( शाश्वती त्वरितं निष्क्रान्ता। दिव्येन्दुर्निषीदति। )

दिव्ये०। ( यामिनीं प्रति ) अयि ! कथं नोपविश्यते भवत्या ?

परिभ्रमणखिन्नेव लक्ष्यसे त्वं शुचिस्मिते !
शिरीषसुकुमारं ते नाङ्गं क्लेशमिहार्हति ॥८॥
आस्थायासनमत्रैव कर्तुमर्हसि शोभने।
तृष्णातुरदृशोर्मे त्वं लावण्यामृततर्पणम् ॥९॥

( यामिनी सलज्जं निषीदति। प्रविशति भोक्तव्यसम्भारहस्ता शाश्वती दिव्येन्दोः पुरतो मञ्चिकायां सयत्नं च स्थापयति। )

शाश्व०। अभ्यवह्रियतां भवता।

दिव्ये०। ( भुञ्जानः ) भद्रे ! भवत्याः प्रश्नस्योत्तरमधुना प्रदीयते। मामेवं छलयन्त्या सख्या ते महान् अपराधः कृतः। न खलु मार्जनीयोऽसौ गुरुदण्डमन्तरेण।

शाश्व०। ( सस्मितम् ) कृतागसाऽवश्यमेव शिरसा धारणीयः सः। निर्दिशतु भवान्।

दिव्ये०। भद्रे ! यद्यहं ब्रूयाम्, यावज्जीवं कारावरोधनमन्तरेण न तस्य पर्याप्तं प्रायश्चित्तं स्यात् ?

शाश्व० । अतिकठोरोऽयं दण्डः । तथाऽपि नास्त्येव गत्यन्तरम् । ततश्चिराय कारा-
बन्धनमेव भजतामसावविमृश्यकारिणी ।

दिव्ये० । यथाऽहं पश्यामि मदवरोधमन्तरेण नास्त्येव द्रढीयः कारान्तरम् ।

शाश्व० । ( स्मयमाना ) नात्र ममापि संशयः । तत्रैवावरुद्धावतिष्ठतामियम् । ( यामिनीं पाणौ गृहीत्वा ) एहि प्रियसखि !

इच्छयानिच्छया वाऽपि रोपितो यो महीरुहः ।
फलं तस्योपभोक्तव्यं प्रसन्नमनसा त्वया ॥१०॥

( दिव्येन्दुं प्रति ) महानुभव !

सुविचारकहस्तेऽद्य चिराय प्रियबान्धवी ।
दीयते साध्वसेनेयं सानुकम्पमवेक्ष्यताम् ॥११॥

( यामिन्याः पाणिं दिव्येन्दोः पाणौ निधत्ते । नेपथ्ये शङ्खध्वानः । )

शाश्व० । मन्ये सम्यङ् निर्वृतं ते मनः ।

दिव्ये० । किमेतदपि वक्तव्यम् ? किङ्करकरनिग्रहोऽपि मे साम्प्रतमनुकूलो गलहस्त इव प्रतिभाति ।

शाश्व० । ( स्मयमाना ) अधुना तावदात्माऽपि त्वया विचार्यपदवीं प्रापयितव्यः ।

दिव्ये० । न बुध्यते ।

शाश्व० । अहो बोधवैधुर्यम् ! तर्हि श्रूयताम् । ( यामिनीं निर्दिशन्ती )

येयं सर्वस्वभूतैव भवनस्यास्य यामिनी ।
विचार-व्यपदेशेन हृताऽसौ नीयते त्वया ॥१२॥

ततस्तस्करकुलशिरोमणेस्ते कस्तावदनुरूपो दण्डः ?

दिव्ये० । ( स्मयमानः )

दुष्कृतेः पूर्वमेवासौ दण्डो मयि निपातितः ।
द्विर्दण्डः कृतपापस्य धर्मशास्त्रविगर्हितः ॥१३॥

शाश्व० । सत्यम् । तर्हि प्रियमेवार्हसि त्वम् । किन्ते प्रियं करणीयं मया ?

दिव्ये० । सखि ! किमतोऽपि प्रियतरमस्ति ?

तडिद्गर्भान्मेघादिव शिशिरधाराऽमृतमयी
रमेव स्निग्धश्रीर्मथनतरलोल्लोलजलधेः ।
सखीयं ते सान्द्रा द्युतिरिव विधोर्विग्रहवती
निकारादस्मान्मे बहुलसुकृतैः प्रादुरभवत् ॥१४॥

तथाऽपीदमस्तु—

संसारे दुःखसारेऽस्मिन्नस्तु नो विरसा स्थितिः।
प्रेमासारप्रवर्षेण सहनीयाऽन्तराऽन्तरा ॥१५॥

( पटीक्षेपः )

समाप्तोऽयं निबन्धः। शुभमस्तु।

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

माधवः। आर्य, शूलरोगेण समाक्रान्तोऽस्मि। उदरस्य दक्षिणदेशे दुःसहा वेदनानुभूयते।

भिषक्। भेषजापणात् त्रिंशशक्तिकं वृकपदीयमानीय बिन्दुमेकं सलिलसंयोगेन निषेवस्व।

माधवः प्रस्थितः, होरार्धादनन्तरं च प्रतिनिवृत्तः।

माधवः। आर्य कस्मिन्नप्यापणे वृकपदीयं न लब्धम्। आपणिकैर्जन्मत आरभ्य वृकपदीयस्य नामापि न श्रुतम्।

भिषक्। अरे मूढ, मया संस्कृतभाषायामुक्तं वृकपदीयमिति। आपणिकास्तु प्रायेण संस्कृतभाषानभिज्ञा एव भवन्ति। अत एव तेषां सविधे Lycopodium इति वक्तव्यम्।

माधवः। यथाज्ञापयत्यार्यः।

ततः प्रविशति यादवः।

यादवः। आर्य, मम पुत्रः क्रिमिरोगेणाक्रान्तः।

भिषक्। सायं प्रातश्च तक्रं प्रदीयताम्।

परेद्यवि प्रातर्यादवः समागतः।

यादवः। आर्य, सायं प्रातस्तक्रनिषेवणेनापि विशेषो नोपलभ्यते। वैद्यराजेन 'चोक्तं' यद्यपि "तक्रं शक्रस्य दुर्लभम्" इति जागर्ति वचनम्, तथापि तक्रस्य क्रिमिनाशकत्व-मायुर्वेदशास्त्रेषु न दृश्यत इति।

भिषक्। अरे तक्रमिति संस्कृतं नाम। भेषजस्य पारमार्थिकं नाम—Teukrium Marum Verum इति।

यादवः। आर्य, अनुगृहीतोऽस्मि। नाममात्रश्रवणेनैव क्रिमयो विनाशमुपया-स्यन्ति। इदानीमेव प्रचलामि भेषजं क्रेतुम्।

---

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| October, 1959. | १८८१-शकीय-कार्त्तिकस्य १४श-वर्षस्य द्वितीय-संख्या | Vol. XIV No. 2 |
|---|---|---|


## देवीस्तुतिः

या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

---

## आभाणकमाला

१। शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः। कुमारसम्भवः २।२०

Tender-handed stroke a nettle,
And it stings you for your pains ;
Grasp it like a man of mettle,
And it soft as silk remains.

AARON HILL, *The Nettle's Lesson.*

२। मृदु तीक्ष्णतरं [ यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ]। मालविकाग्निमित्रम्।

There is no severity like gentleness.

३। Fortitude is shown in toil and danger ; Temperance in declining sensual enjoyments ; Prudence in the choice between good and evil, Justice in awarding to every one his due.

श्रमे विपदि च धैर्यं प्रदर्श्यते, इन्द्रियार्थप्रत्याख्याने जितेन्द्रियता प्रदर्श्यते, सदसतोर्विवेचने विमृश्यकारित्वं प्रदर्श्यते, सर्वेभ्यः स्वप्राप्यप्रदाने न्यायपरता प्रदर्श्यते ।

तथाऽपीदमस्तु—

संसारे दुःखसारेऽस्मिन्नस्तु नो विरसा स्थितिः।
प्रेमासारप्रवर्षेण सहनीयाऽन्तराऽन्तरा ॥१५॥

( पटीक्षेपः )

समाप्तोऽयं निबन्धः। शुभमस्तु।

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

माधवः। आर्य, शूलरोगेण समाक्रान्तोऽस्मि। उदरस्य दक्षिणदेशे दुःसहा वेदनानुभूयते।

भिषक्। भेषजापणात् त्रिंशशक्तिकं वृकपदीयमानीय बिन्दुमेकं सलिलसंयोगेन निषेवस्व।

माधवः प्रस्थितः, होरार्धादनन्तरं च प्रतिनिवृत्तः।

माधवः। आर्य कस्मिन्नप्यापणे वृकपदीयं न लब्धम्। आपणिकैर्जन्मत आरभ्य वृकपदीयस्य नामापि न श्रुतम्।

भिषक्। अरे मूढ, मया संस्कृतभाषायामुक्तं वृकपदीयमिति। आपणिकास्तु प्रायेण संस्कृतभाषानभिज्ञा एव भवन्ति। अत एव तेषां सविधे Lycopodium इति वक्तव्यम्।

माधवः। यथाज्ञापयत्यार्यः।

ततः प्रविशति यादवः।

यादवः। आर्य, मम पुत्रः क्रिमिरोगेणाक्रान्तः।

भिषक्। सायं प्रातश्च तक्रं प्रदीयताम्।

परेद्यवि प्रातर्यादवः समागतः।

यादवः। आर्य, सायं प्रातस्तक्रनिषेवणेनापि विशेषो नोपलभ्यते। वैद्यराजेन चोक्तं यद्यपि "तक्रं शक्रस्य दुर्लभम्" इति जागर्ति वचनम्, तथापि तक्रस्य क्रिमिनाशकत्वमायुर्वेदशास्त्रेषु न दृश्यत इति।

भिषक्। अरे तक्रमिति संस्कृतं नाम। भेषजस्य पारमार्थिकं नाम—Teukrium Marum Verum इति।

यादवः। आर्य, अनुगृहीतोऽस्मि। नाममात्रश्रवणेनैव क्रिमयो विनाशमुपयास्यन्ति। इदानीमेव प्रचलामि भेषजं क्रेतुम्।

---

४। यावज्जीवेत् सुखं जीवेत्।

Latin. Dum vivimus, vivamus.

यावज्जीवामः, सुखं जीवामः ।

५। न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।

When the fox sleeps no grapes fall into his mouth.

न शृगालस्य प्रसुप्तस्य मुखे पतन्ति मृद्वीकाः ।

Old French. À regnard endormi rien ne cheut en la gueule.

Germ. Dem schlafenden Fuchs läuft keine weise Maus in den Mund.

Germ. Schlafender Fuchs fängt kein Huhn.

न खलु सुप्तः शृगालः कुक्कुटं गृह्णाति ।

Germ. Dem schlafenden Wolf läuft kein Schaf ins Maul.

वृकस्य न प्रसुप्तस्य प्रधावति मुखे ह्यविः ।

Germ. Ein Wolf im Schlaf fing nie ein Schaf.

Latin. Vulpi stertenti veniet non grellio denti.

Old French. A goupil endormi rien ne lui chet (falls) en gueule.

६। Failure is the foundation of success; success is the landing-place of failure.

असिद्धिरेव भित्तिभूमिः सिद्धेः। सिद्धिः खलु तरणस्थानमसिद्धेः ।

Failure teaches success.

असिद्धिः सिद्धिं शिक्षयति ।

Failure is the only high road to success.

असिद्धिरेवैक एव राजपथः सिद्धेः।

Failures are the pillars of success.

असिद्धयः खलु सिद्धेर्मूलस्तम्भाः ।

---

## सुभाषितानि

I am remarkably ignorant of many facts which some of my junior colleagues know, but I know where to look them up. J. B. S. HALDANE.

बहूनि खलु तथ्यानि विशेषतो ममाविदितानि यानि खलु विदितान्येव मे कनीयसां सहकर्मणाम्। परं क्व तान्यन्वेष्टव्यानि तज् ज्ञायत एव मया।

Research is rather like poetical composition. There are rules for both ; but you will not become a poet by adhering to the rules, nor will you make scientific discoveries by following "scientific method" as laid down by writers on that subject. Both the great poets and the great scientists adhere to the normal canons as a general rule, but do not hesitate to violate them from time to time. These violations may sometimes become the canons of art or science in future ages.

J. B. S. HALDANE

तत्त्वान्वेषणं बाहुल्येन काव्यनिर्माणमनुहरति। उभयोः कृते विधयो वर्तन्ते, परं का कथा महाकवित्वस्य विधिमनुसरन् कवित्वमपि नासादयिष्यसि। नापि विज्ञानप्रबन्धृभिरुपनिबद्धां वैज्ञानिकीं प्रणालीमनुपालयन्नुदात्तान् वैज्ञानिकानाविष्कारान् विधास्यसि। कामं महाकवयो महावैज्ञानिकाश्चोभय एवोत्सर्गतः सामान्यविधीननुरुध्यन्ते परमन्तरान्तरा तान् व्यभिचरन्त्येव। तेषां व्यभिचारा भविष्यत्सु कालेषु कचिच्छिल्पस्य विज्ञानस्य वा विधयो भवेयुः।

Let prayer be the key of the morning and the bolt of the evening. HENRY.

देवताराधनं प्रातस्तनी कुञ्चिका सायन्तनी चार्गला भवतु।

---

# सतामनुपलब्धिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

महाभाष्ये दृश्यते—

षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति। अतिसन्निकर्षाद् अतिविप्रकर्षान् मूर्त्यन्तरव्यवधानात् तमसावृतत्वाद् इन्द्रियदौर्बल्याद् अतिप्रमादादिति। [ ४।१ ३ ] इति।

अत्र कैयटः। अतिसन्निकर्षादिति। यथा स्वचक्षुर्गतस्याञ्जनादेः। अतिविप्रकर्षादिति। यथोड्डीनस्य शकुनेः। मूर्त्यन्तरव्यवधानादिति। कुड्यादिव्यवहितस्य सुवर्णादेः। तमसावृतत्वादिति। अन्धकाराक्रान्तस्य श्वभ्रादेः। [अन्धकारेति। आलोकस्य सहकारित्वादिति। श्वभ्रो गर्तः। उद्द्योतः।] इन्द्रियदौर्बल्यादिति। तिमिरावृतस्य नयनादेः। [ इन्द्रियाणां दौर्बल्यं ग्राहकशक्तिहीनता। सा च स्वगततिमिरादिदोषेण, वस्तुगतसौक्ष्म्यदोषेण,

तैदावारकालगतसौक्ष्म्यदोषेण वा। उद्द्योतः।] अतिप्रमादादिति। विषयान्तरासक्तचित्तत्वादित्यर्थः। सौक्ष्म्यस्येन्द्रियदौर्बल्येऽन्तर्भावान्न पृथगुपन्यासः। दिव्यचक्षुःश्रोत्रा हि सूक्ष्ममप्यर्थमुपलभन्ते न तु दुर्बलेन्द्रियाः। [योगसामर्थ्येनेति भावः। एवञ्चास्मदादीनामिन्द्रियशक्त्यभावेन सूक्ष्मार्थसूक्ष्मकालावच्छिन्नार्थग्रहणायोग्यत्वमिति भावः। यद्यपि सर्वदर्शनशक्तिमत् सर्वमिन्द्रियम्, तथाप्यस्मदादीनामिन्द्रियस्य बह्वयः शक्तयस्तमसावृता इति न देशकालस्वभावविप्रकृष्टानां प्रत्यक्षम्। योगाभ्यासेन च तदपनये क्लृप्तैः सन्निकर्षैः संयोगादिभिरेव सर्वप्रत्यक्षम्। योगजधर्मस्य पृथक्प्रत्यासत्तिकल्पनस्य गुरुत्वादिति तात्पर्यम्। उद्द्योतः।]

सांख्यकारिकायां [७] दृश्यते—

अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।
सौक्ष्म्याद् व्यवधानादभिभवात् समानाभिहाराच्च॥

अत्र गौडपादभाष्यम्। इह सतामप्यर्थानामतिदूरादनुपलब्धिर्दृष्टा, यथा देशान्तरस्थानां चैत्रमैत्रविष्णुमित्राणाम्। सामीप्याद् यथा चक्षुषोऽञ्जनानुपलब्धिः। इन्द्रियाभिघाताद् यथा बधिरान्धयोः शब्दरूपानुपलब्धिः। मनोऽनवस्थानाद् यथा व्यग्रचित्तः सम्यक् कथितमपि नावधारयति। सौक्ष्म्याद् यथा धूमोष्मजलनीहारपरमाणवो गगनगता नोपलभ्यन्ते। व्यवधानाद् यथा कुड्येन पिहितं वस्तु नोपलभ्यते। अभिभवाद् यथा सूर्यतेजसाभिभूता ग्रहनक्षत्रतारकादयो नोपलभ्यन्ते। समानाभिहाराद् यथा मुद्गराशौ मुद्गः क्षिप्तः कुवलयामलकमध्ये कुवलयामलके क्षिप्ते कपोतमध्ये कपोतो नोपलभ्यते समानद्रव्यमध्याहृतत्वात्। एवमष्टधानुपपत्तिः सतामर्थानामिह दृष्टा। इति।

अत्र कौमुदी। अतिदूरादिति। अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोकनन्यायेनानुषञ्जनीयम्। यथोत्पतन् वियति पतत्र्यतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते। सामीप्यादित्यत्राप्यतिरनुवर्तनीयः। यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते। इन्द्रियघातोऽन्धत्वबधिरत्वादिः। मनोऽनवस्थानात्। यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्तिनमिन्द्रियसन्निकृष्टमर्थं न पश्यति। सौक्ष्म्याद् यथेन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति। व्यवधानात्। यथा कुड्यादिव्यवहितं राजदारादिकं न पश्यति। समानाभिहारात्। यथा तोयदविमुक्तानुदबिन्दूञ्जलाशये न पश्यति।

चकारोऽनुक्तसमुच्चयार्थः। तेनानुद्भवोऽपि संगृहीतः। तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न पश्यति।

सांख्यकारिका महाभाष्यस्यैवच्छायामूलिका। तमसावृतत्वस्याभिभवेऽन्तर्भावः

प्रतीयते। मनस इन्द्रियत्वेऽपि इन्द्रियघातादित्यनेनापि मनोऽनवस्थानादिति क्रोडीकर्तुं न शक्यते अनवस्थानावघातयो र्भिन्नत्वात्।

चरकसंहितायां [ १।११।८ ] दृश्यते—

अतिसन्निकर्षादतिविप्रकर्षादावरणात् करणदौर्बल्यान्मनोऽनवस्थानात् समानाभिहारादभिभवादतिसौक्ष्म्याच्च प्रत्यक्षानुपलब्धिः। इति।

अत्र टीका। प्रत्यक्षानुपलब्धिरित्यतिसन्निकर्षादिभिः प्रत्येकमभिसम्बध्यते। अतिसन्निकर्षादनुपलब्धिर्यथा नयनगतकज्जलादेः। अतिविप्रकर्षाद् यथा दूराकाशगतस्य पक्षिणः। आवरणाद् यथा कुड्यादिपिहितस्य घटादेः। करणदौर्बल्याद् यथा कामलाद्युपहतस्य चक्षुषः पटशौक्ल्याद्यप्रतिभानम्। मनोऽनवस्थानाद् यथा कान्तामुखनिरीक्षणप्रहितमनसः पार्श्वगतवचनानवबोधः। समानाभिहाराद् यथा बिल्वराशिप्रविष्टस्य बिल्वस्येन्द्रियसम्बद्धस्यापि भेदेनाग्रहणम्। अभिभवाद् यथा मध्यन्दिन उल्कापातस्य। सौक्ष्म्याद् यथा त्रिचतुर्हस्तप्रमाणदेशवर्तिनः क्रिमिविशेषलिख्यादेरग्रहणम्। इति।

त्रयाणामेतेषां पर्यालोचनया प्रतीयते महाभाष्यमेव प्राचीनतमम्। ततोऽप्यर्वाचीना चरकसंहिता, ततोऽप्यर्वाचीना सांख्यकारिकेति।

मनोऽनवस्थानादनुपलब्धेर्मनोज्ञमुदाहरणं महाभाष्य उपलभ्यते—तद् यथा वैयाकरणानां शाकटायनो रथमार्ग आसीनः शकटसार्थं यान्तं नोपलेभे [ ३।२।११५ ] इति।

अपरमप्युदाहरणं शाकुन्तले वर्तते। सखीभ्यां सस्नेहमुपवीज्य "हला शकुन्तले, अपि सुखाय ते नलिनीपत्रवातः" इति पृष्टा शकुन्तला प्रत्युवाच "किं वीजयतो मां सख्यावि"ति।

उटज-सन्निहितापि शकुन्तला हृदयेनासन्निहितेति महर्षेर्दुर्वाससः "अयमहं भोः" इत्युदात्तमाह्वानं नोपलब्धवती, अत एव महर्षिणा साभिशप्ता—

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव॥ इति।

समानाभिहारात् इत्यस्योदाहरणानि सामान्यालङ्कारा मीलितालङ्काराश्च।

तथाच काव्यादर्शे श्लोकः—

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥ २।२१५

इति। नैषधे च श्लोकौ—

सममेणमदैर्यदापणे तुलयन् सौरभलोभनिश्चलम्।
पणिता न जनारवैरवैदपि कूजन्तमलिं मलीमसम् ॥२।९२॥
विरहपाण्डुकपोलतले विधुर्व्यधित भीमभुवः प्रतिबिम्बितः।
अनुपलक्ष्यसितांशुतया मुखं निजसखं सुखमङ्कमृगार्पणात् ॥४।२६॥ इति।

अतिविप्रकर्षस्योदाहरणं शिशुपालवध उपलभ्यते—

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवः पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥१।३। इति।

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ।१।२।२२

किञ्च विशेषणभेदव्यपदेशाभ्यां चेतरौ प्रधानजीवौ न भूतयोनी भवतः। विशेषणं तावत्—

"दिव्यो ह्यमूर्त्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः ॥

इति। दिव्यत्वादिविशेषणं न जडस्य प्रधानस्य, जीवस्य पुनः प्राणादिमतः सम्भवति, "अक्षरात् परतः पर" इति जीवाद् भेदं च दर्शयति। अक्षरादिति क्षरति विनश्यतीति क्षरो विनाशी स न भवतीत्यक्षरोऽविनाशी, क्षित्यादिभूतजातमप्याप्रलयमविनाशित्वादक्षर-मुच्यते। "मृत्तिकेत्येव सत्यमि"ति श्रुतेः। सत्यं नित्यं, तच्चापेक्षिकमेवेति ततोऽपि परः श्रेष्ठोऽक्षरो जीवस्तस्याविनाशित्वात्, "न जीवो म्रियते" इति श्रुतेरिति। परतोऽक्षरात् जीवात् परो भिन्न इत्यर्थः। नचात्राक्षरशब्दार्थः प्रधानं तस्याशब्दत्वादानुमानिकत्वाच्च "ईक्षतेर्नाशब्दम्" "आनुमानिकमप्येकेषामि"मित्युक्तेः। नाप्यज्ञानं मायिकानां तस्य बौद्धोच्छिष्टत्वेन तुच्छत्वात्। एतस्मादेव च दिव्यत्वादि-विशेषण-विशिष्टात् परमेश्वराद् भूतसृष्टिं दर्शयति—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥" इति।

तस्मादुक्तविशेषणेभ्यो भेदव्यपदेशाच्च न प्रधानजीवौ भूतयोनिशब्दार्थः, किन्तु परमात्मैवेति ॥२२॥

रूपोपन्यासाच्च ।१।२।२३

किञ्चाक्षरात् प्राणसृष्ट्यभिधानात् परं तस्यैव रूपमुपन्यस्तम्,—

"अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः ।

वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा"

इति । न चैतदीश्वरव्यतिरेकेण जीवस्य स्वल्पशक्ते र्युज्यते, ईश्वरस्य च सर्वकारणत्वाद् युक्तं सर्वरूपत्वं "सर्वं खल्विदं ब्रह्मे"ति श्रुतेः । सर्वभूतान्तरत्वश्रवणाच्च न प्रधानस्येदं रूपम् । अत्रास्येति एष इति च जगत्कारणस्यैव परामर्शादरूपस्यापि स्वेच्छया बहुरूपत्वं युज्यते "तदैक्षत बहु स्यां प्रजायेय"इति "तत्तेजोऽसृजते"ति श्रुत्यन्तरात् । अत्र "एतस्माज्जायते प्राण" इति ब्रह्मणः सामान्यसृष्टिमुक्त्वा कार्यकारणयोरभेद-प्रदर्शनार्थं सामान्यसृष्टेस्तस्यैव रूपमुपन्यस्तम् । "तस्मादग्निः समिधो यस्ये"ति विशेषसृष्टिकथनावसरे तत्पदेन च परमात्मन एव परामर्शः, "तस्मादृचः साम यजूंषी"ति वेदसृष्ट्यभिधानात् "अस्यैव महतो भूतस्य निःश्वसितमि"ति श्रुत्यन्तरात् । पूर्वापरयोः परमात्मनः कीर्त्तनादन्तराले रूपोपन्यासस्तस्यैव युक्तो न त्वकस्मादसम्बद्धस्य प्रजापतेः, अस्येति एष इति च पदाभ्यां परमात्मन एव परामर्शात् । पश्चाच्च सामान्यविशेष-सर्वरूपत्वं तस्यैव दर्शितम् "पुरुष एवेदमि"ति, "ब्रह्मैवेदं विश्वमिदं वरिष्ठमि"त्यवसाने च । "मूर्द्धैव सुतेजाश्चक्षु र्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावि"ति श्रुत्यन्तराच्चेति ॥२३॥

वैश्वानरः साधारणशब्दविशेषात् । १।२।२४

छान्दोग्ये श्रूयते "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषितमेव नो ब्रूही"त्युपक्रम्य "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति । अत्र वैश्वानर-शब्देन जाठराग्निर्भूताग्निस्तदभिमानिनी देवता जीवः परमात्मा वा कथ्यते पञ्चानामेव सम्भवात् । "अयमग्नि र्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इति जाठराग्नौ वैश्वानरशब्दप्रयोगात्, "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्नि"ति भूताग्नौ, "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीरि"ति देवतायाम्, "आत्मानमेव वैश्वानरमि"त्यात्मशब्दसामानाधिकरण्याज्जीवेश्वरोभयवाचकत्वाच्च तस्य तयो-रिति । तत्र जाठराग्न्यादिषु यः कश्चन वैश्वानरो भवितुमर्हति न परमात्मेति प्राप्ते आह "वैश्वानरः साधारणशब्दविशेषादि"ति । अत्र वैश्वानरः परं ब्रह्मैव । तत्र

हेतुः "साधारणशब्दविशेषादि"ति। यद्यपि जाठरादिसाधारण एव वैश्वानरशब्दो दृश्यते तथापि तस्य विशेषो विद्यते, तथाहि "को न आत्मा किं ब्रह्मे"ति प्रश्ने ब्रह्मविषयमेवोत्तरं वाच्यम्, उत्तरवाक्ये "आत्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती"ति ब्रह्मस्थाने वैश्वानरशब्दप्रयोगात् सर्वलोकाश्रयफलवत्त्वाच्च ब्रह्मैव वैश्वानरः। किञ्च "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूप" इति वैश्वानरस्य सर्वात्मत्वं परमात्मपरत्व एव युज्यते, परमकारणत्वात्। अन्ते च "तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते" इति वैश्वानरज्ञानफलं सर्वपापराहित्यं ब्रुवती तस्य ब्रह्मत्वमेव गमयति, ब्रह्मज्ञस्यैव तथात्वात्, "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति श्रुत्यन्तरादिति ॥२४॥ (क्रमशः)

——

# ख्यातिवादः

[ श्रीसीतानाथ-गोस्वामी ]

मुनानाञ्च मतिभ्रम इत्यस्ति कश्चनातिप्रसिद्ध आभाणकः। किंस्वरूपोऽयं सर्वजनीनो भ्रम इत्यालोचितं बहुशो दार्शनिकप्रवरैः। भ्रमविषयो यथानुभूतो नासौ वस्तुतस्तथेति प्राकृतजनानामप्येकमत्यं दृश्यते। शुक्तिमेव रजतमिति मन्यमानो जनो भ्रान्तः। भ्रमे भासमानं रजतमिदं सद्वा असद्वेति प्रश्ने दृश्यते बहुधा विप्रतिपत्तिर्वादिनाम्। सूक्ष्मतो विचार्यमाणेऽत्र भासमानरजतस्वरूपविषये कल्पचतुष्टयं पदं लभते। तथाहि— रजतमिदं सत्, असत्, सदसत्, सदसद्विलक्षणञ्चेति। सर्वे खलु पक्षाः पण्डितैः कक्षीकृताः। सदिदं रजतमिति मतमङ्गीकुर्वाणा रामानुजीयादयः सत्ख्यातिवादिन इत्याख्यां लभन्ते। अपरे च रजतासत्त्वं ब्रुवाणा माध्वादयोऽसत्ख्यातिवादिन इत्यभिहिताः। एवमेव विज्ञानभिक्षुप्रभृतयः सदसत्ख्यातिवादिन इति, अद्वैतिनश्च सदसद्विलक्षणख्यातिवादिन इति नाम्ना अनिर्वचनीयख्यातिवादिन इत्याख्यया वा समधिकं परिचिताः।

सम्भवत्यप्येतादृशे विभागे दार्शनिकनिकाय एतदतिरिक्ता अन्यथाख्यातिप्रभृतयोऽन्ये केचन वादाः समुल्लसन्ति। अन्यथाख्यातौ देशान्तरीयस्य सतो रजतस्यैव भ्रमकाले तद्देशीयत्वेन प्रतीतिर्भवतीत्यास्थीयते नैयायिकैः। इतो रजतस्य मानात् ख्यातिरियं सत्ख्यातिरेव। अख्यातिवादे तद् रजतम्, इयं शुक्तिरिति द्वयोर्ज्ञानयोः स्मृतिप्रत्यक्षयोः सत्यभूतयोर्मिथो भेदाग्रहणाद् इदं रजतमिति प्रतीतिर्भवतीत्युच्यते

प्राभाकरैः। तत्रापि रजतस्य सद्रूपत्वमेवेति सत्ख्यातितो नेयं भिन्ना। एवं बौद्धानामात्मख्यातावेदं रजतमिति भ्रमज्ञाने ज्ञानाकारस्य सतो रजतस्य बाह्ये आरोपो भवतीत्याद्युक्तम्। सतो रजतस्य भानादियमपि ख्यातिः सत्ख्यातिरेव। एतेषां त्रयाणां ख्यातिवादानां सत्ख्यातित्वं कण्ठरवेणैव समुद्घोषितमाचार्येणेष्टसिद्धिकृता। तथा चोक्तम्—　अन्यथाख्यातिरख्यातिरात्मख्यातिरिति त्रयः।
सत्ख्यातिपक्षा नैतेऽपि विना सिध्यन्ति मायया॥ [ २।१ ]

एवमेवेष्टसिद्धिकारतोऽर्वाचीनेन रामानुजाचार्येणापि सत्ख्यातिरेवाङ्गीकृतेति चतुर्विधा सत्ख्यातिरिति पर्यवस्यति। उक्तञ्च कल्पतरुपरिमलेऽप्पयदीक्षितपादैः—"चतुर्विधाप्येषा सत्ख्यातिः" ( २० पृः, निर्णयसागर ) इति।

माध्वानां मते भ्रमे भासमानं रजतं सर्वथाऽऽसदेव, शशविषाणवदलीकम्।

सदसत्ख्यातिमतं विज्ञानभिक्षुप्रभृतिभिः प्रतिपादितम्। सदसतोः सर्वथा विरोधाद् एतन्मतं न कथमपि विद्वज्जनानां सन्तोषमावहति, न वा विचारपदवीं समधिरोहति।

अद्वैतिनां मते भ्रमे भासमानं रजतं न सत्, तस्यासन्निधानात्, नाप्यसत्, असतः प्रतीत्यनर्हत्वात् रजतस्य च प्रतीतेः, नापि सदसद् विरोधात्। अतः सदसद्विलक्षणमेतच्चतुर्थं मतम्, ख्यातिश्च सत्त्वेनासत्त्वेन वा निर्वचनानर्हत्वाद् अनिर्वचनीयेति विद्वद्गोष्ठीषु लब्धप्रतिष्ठा सञ्जाता। अनिर्वचनीयत्वमेतस्याः ख्यातेरेवं संस्थापितं वेदान्तकल्पतरावमलानन्देन—

अथवाऽसन्निधानेन सत्ख्यातिरिह वारिता।
अवभासादसत्ख्यातिर्नृशृङ्गे तददर्शनात्॥ ( १९-२० पृः )

ब्रह्मसूत्रस्य शाङ्करभाष्ये तत्रस्थटीकादिषु च त्रिविधायाः सत्ख्यातेः खण्डनं प्रदर्शितम्। सत्यामपि बहुधा विप्रतिपत्तौ सर्वेषां ख्यातिवादानामैकरूप्यमाचार्यशङ्करेण सुष्ठु प्रतिपादितम्—"सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति" ( ३२ पृः, शाङ्करभाष्य ) इति। तत्रैव भामतीकारेणारोपितवस्तुनो मिथ्यात्वम् "अन्यस्यान्यधर्मकल्पनाऽनृतता" इत्येवंरूपेण साधितम्।

भवतु, रामानुजाचार्याणामिदमर्वाचीनं मतं भाष्यभामत्यादिग्रन्थेषु न समालोचितमिति पश्चात्तनाः केचनाचार्या ब्रह्मविद्याभरणादिषु ग्रन्थेषु तस्य मतस्य समीक्षां कृतवन्तः। अथास्मिन् निबन्धे रामानुजीयसत्ख्यातिवादो विशेषतः खण्डयिष्यते।

# बहुवचन पक्षपातः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

यो वै भूमा तत्र सुखं नाल्पे सुखमस्तीत्युपनिषदो घण्टाघोषः। अत एव बहुवचन एव विशेषतः पक्षपातो लिपिकराणाम्। बृहदारण्यके श्रूयते—स होवाच महिमान एवैषामेते। त्रयस्त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशदिति। अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशत्। इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति। इति।

अत्र शाङ्करभाष्ये दृश्यते—स होवाचेतरो महिमानो विभूतय एषां त्रयस्त्रिंशतां देवानामेते त्रयश्च त्री च शतेत्यादयः। परमार्थतस्तु त्रयस्त्रिंशत्त्वेव देवा इति।...... इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशतां पूरणौ। [ ३।९।१।२ ] इति।

अत्र विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरित्याप्तभाषितमतिक्रम्य त्रयस्त्रिंशतामिति बहुवचनं द्विर्दृश्यते। मन्यामहे "त्रयस्त्रिंशतो देवानां" "त्रयस्त्रिंशतः पूरणौ" इति भाष्यकृद्भिर्विलिखितम् तत्रानभिज्ञैर्लिपिकरैर्जामातृसंशोधनं विहितम्।

सायणाचार्यस्य ऋग्वेदभाष्येऽपि दृश्यते—अर्चति-गायतीत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु धातुषु जरते ह्वयतीति पठितम् [ १।२।२ ] इति, श्लोकः धारा इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु गणः धेना ग्ना इति पठितम् [ १।२।३ ] इति, रणः इत्यादिषु षट्चत्वारिंशत्सु संग्रामनामसु समत्सु समरणे इति पठितम् [ १।५।४ ] इति च। घोरिति अप इत्यादौ षड्विंशतौ कर्मनामसु पठितः [ १।२।७ ] इत्यत्र शुद्धः पाठो मुद्रितपुस्तकेषूपलभ्यते। ओजः पाज इत्यादिष्वष्टाविंशतिसंख्याकेषु बलनामसु दक्षः वीळु इति पठितम्। अपःशब्दः षड्विंशतिसंख्याकेषु कर्मनामसु पठितः [ १।२।९ ]। इत्यादिषु च।

———

# अनुप्रासमाहात्म्यम्

## Apt Alliteration's Artful Aid

Statesmanपत्रे (Friday, September 4, 1959, p. 7, col. 3) दृष्टम्—he is likely *to sent* a detailed report to the high command इति। अत्रानुप्रासानुरोधेन to send इत्यस्य स्थाने to sent इति मुद्रितम्। परमर्धजरतीयन्यायः सर्वथा न रोचते सहृदयेभ्यः, अतः to sent a tetailet report to the high commant इत्येव मुद्रणीयमासीत्। टवर्गोपासकस्य कस्यचन पुरुषस्य कृष्णवर्णया स्त्रिया परिणयः सञ्जातः। तस्य ज्यायसां भ्रातॄणां पत्न्यो गौरवर्णा आसन्।

ततस्तेन विलपितम्—हायरे आमार टगालठाना (=कपालखाना) आमार वराटेइ (=वरातेइ) टालो (=कालो)! ( अहो मे ललाटलेखनम् ममैव भागधेये कृष्णवर्णा! ) इति।

---

## अधिकन्तु न दोषाय

आनन्दबाजारपत्रिकायां ( बृहस्पतिवार, १७इ भाद्र, १३६६, पृ० ३ स्त० १ ) दृष्टम्—विंशतम वाहिनीर इति। विंशतेः पूरण इत्यर्थे विंश इत्यपि भवति, विंशतितम इत्यपि भवति। तत्र च सूत्रं विंशत्यादिभ्यस्तमडन्यतरस्याम् [ ५।२।५६ ] इति। तमपा मुक्त औत्सर्गिको डट्। विंशतमशब्दे डट्तमटोरुभयोः सन्निवेशः।

विंश+विंशतितम = विंशतम।

---

## अतिपरिचयादवज्ञा

विदुषी भार्या। ( पतिं प्रति ) अद्यापराह्णे धूमशकटं (car) मयापेक्ष्यते।

पतिः। धूमशकटेन किं करिष्यति भवती? क्व वा गन्तव्यम्?

भार्या। भवानीनगरे कश्चन स्वामी समायातः। सोऽवश्यं मया द्रष्टव्यः।

पतिः किमप्यनुक्त्वा विहसति।

भार्या ( उद्दीपितामर्षा )। किमिति विहसति भवान्? यदेव मया क्रियते, यदेव मयोच्यते सर्वमेवोपहासास्पदं ननु!

पतिः। मर्षयतु मर्षयतु भवती। स्वामी तु ते पुरत एव वर्तते। किमिति तस्य सन्दर्शनाय दूरतरप्रदेशगमनक्लेशः सोढव्यः? "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।"

भार्या। अहं तावद् गुरुं द्रष्टुं गन्तुमिच्छामि।

पतिः। आर्ये पतिरेको गुरुः स्त्रीणामिति धर्मसूत्रकाराः समामनन्ति। भवती पुनर्धर्मशास्त्रं समुल्लङ्घ्य धर्मार्जनाय प्रयस्यति। पत्युर्यथाकालं भोजनादिकं भवतु वा मा वा, पाकादिकं सम्यग् निर्वर्त्यतां वा मा वा, केवलं स्वामिजीनां सन्दर्शनायैव समुत्कण्ठते भवत्या मानसम्। कस्य देशस्य कस्मिन् धर्मशास्त्र एतद्विहितम्?

भार्या। पुरुषाः सदैव स्वार्थपरायणा भवन्ति। न भवतो वचनं श्रोष्यामि। अवश्यं मया गन्तव्यं गुरूणामुपदेशामृतपानाय।

पतिः। गच्छतु भवती। अन्ते तावदुपदेशविषेण जर्जरा ज्ञास्यति मम वचनानां समीचीनत्वम्।

# शिवाष्टकम्

[ श्रीफटिकलाल-दासः ]

जय भक्तजनाश्रय लोकपते जय सत्य सनातन शङ्कर हे ।
जय साधकसाधुजनैकगते जय दैत्यविमर्दक शङ्कर हे ॥१॥
जय सेवकवत्सल कृत्तिपट जय पापविखण्डक शङ्कर हे ।
जय चन्द्रविमण्डितभालतट जय दुःखविनाशक शङ्कर हे ॥२॥
जय शैलनिकेतन भूतपते जय शाश्वतकारण शङ्कर हे ।
जय पञ्चमुखाक्षर विश्वगते जय सत्य शुभङ्कर शङ्कर हे ॥३॥
जय दग्धपुरत्रिकपञ्चशर जय योगिजनादृत शङ्कर हे ।
जय शैलसुतान्वितदेहधर जय शान्तिसुखाकर शङ्कर हे ॥४॥
जय नागसुशोभितकण्ठधर जय शुद्ध दिगम्बर शङ्कर हे ।
जय पूतधरातल पूज्यवर जय सत्त्वगुणाकर शङ्कर हे ॥५॥
जय भोगविकारविनाशकर जय संसृतिवारक शङ्कर हे ।
जय शूलवराभयहस्तधर जय किङ्करपालक शङ्कर हे ॥६॥
जय देवगणार्चित देववर जय योगिधुरन्धर शङ्कर हे ।
जय भस्मविभूषितदेहधर जय सर्व परात्पर शङ्कर हे ॥७॥
जय डम्बरुपाशपिनाककर जय कालभयङ्कर शङ्कर हे ।
जय मानसतामसनाशकर जय नित्यनिरञ्जन शङ्कर हे ॥८॥

---

# अनुबन्धविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## उगितश्च

उगितश्च [ ४।१।६ ] इति सूत्रेण उदित ऋदितश्च स्त्रियाम् ई(ङीप्)प्रत्ययो विहितः। अत्र बीजमेतदेव। वोतो गुणवचनादिति [ ४।१।४४ ] सूत्रेणोकारान्ताद् गुणवचनात् प्रातिपदिकात् स्त्रियामीकारो ( ङीष् ) भवत्येव विभाषा। ऋन्नेभ्यो ङीप [ ४।१।५ ] इति सूत्रेण ऋकारान्तेभ्यः स्त्रियां ङीब् विहितः। अत एव ईप्रत्ययस्थले उकार ऋकारश्चानुबन्धावुपयुक्तौ सूत्रकारेण। कातन्त्रे दृश्यते सूत्रम्—नदाद्यन्चिवाह्यन्-स्यन्तृसखिनान्तेभ्य ई [कारक २५६] इति। अत्राप्युकारान्तेभ्य ऋकारान्तेभ्यश्च स्त्रियामी-प्रत्ययो विहितः।

पूर्वाचार्याणां ग्रन्थेषु उगित्-प्रत्यया नकारयुक्ता एव पठ्यन्ते स्म, पाणिनेः शतृ

तेषां शन्तृङ्, मतुप् मन्तुः वन्तुरिति। अत एवोगिदचां सर्वनामस्थानेऽधातोः [ ७।१।७० ] इति नुमागमो विहितः पाणिनिना।

उगितश्च [ ६।३।४५ ] इति द्वितीयं सूत्रं वर्तते पाणिनीये तस्य चार्थः—उगितः परस्य ङीप्रत्ययस्य घादिषु परतोऽन्यतरस्यां ह्रस्वो भवतीति। पूर्वोक्तेन कारणेन य उगितस्तेषामेवात्र ग्रहणम्। ( क्रमशः )

---

## उभयतोमुखः शब्दः

याच धातुः प्रार्थनार्थको लोकवेदयोः प्रसिद्धः, परमथर्ववेदे दानार्थकोऽपि परस्मैपदी याचतिरुपलभ्यते। तथा चाथर्वणे श्रूयते—यदभिवदति दीक्षामुपैति यदुदकं याचत्यपः प्रणयति [ ९।६।४ ] इति। अतिथीन् प्रति पश्यति हिङ्कृणोत्यभिवदति प्रस्तौत्युदकं याचत्युद्गायति [ ९।१०।८ ] इति च। अत्रातिथये पाद्यं ददातीत्यर्थः प्रतीयते।

---

## "प्रियदर्शिका"-कथासारः

[ अभिनवभट्टबाण-कृष्णाचार्यस्य ]

वत्सराजाय स्वकन्यां दित्समानो ह्यङ्गाधिपो दृढवर्मा 'मत्प्रार्थ्यमानाप्यनेन स्वदुहिता वत्सराजाय दत्ता' इति बद्धानुशयेन 'वत्सराजो बन्धनान्न निवर्तते' इति च लब्धरन्ध्रेण कलिङ्गेन सहसागत्य बलादवस्कन्द्य गाढप्रहारजर्जरीकृतो बद्धः। तदा च तस्मादवस्कन्दसम्भ्रमात् कथञ्चिदपवाह्य दिष्ट्या दृष्टां प्रियदर्शिकाम् 'इदानीं न युक्तमत्र स्थातुम्। यथा कथञ्चिदेनां वत्सराजायोपनीय स्वामिनमनृणं करिष्यामी'ति मन्वानो दृढवर्मणः कञ्चुकी विनयवसु दृढवर्मणो मित्रभावान्वितस्यैवाटविकस्य विन्ध्यकेतोर्गृहे तां स्थापयित्वा स्नानाय नातिदूरमगस्त्यतीर्थं गतः। यावच्च विनयवसुः प्रतीपमागच्छति तावत् तत् स्थानं वत्सराजप्रेषितेन सेनापतिना विजयसेनेन स्मर्तव्यतां नीतं सह विन्ध्यकेतुना। आनीता च विन्ध्यकेतोर्वेश्मनि स्थिता 'हा तात हा तात' इति कृतकृपणप्रलापा प्रियदर्शिका विन्ध्यकेतुदुहितेयमित्यभिमन्यमानेन विजयसेनेन। वत्सराजोऽपि तामेनाम् 'भगिनीबुद्ध्या सर्वदा त्वयेयं द्रष्टव्या' इति सन्दिश्य देव्यै वासवदत्तायै प्रेषयामास। वासवदत्तयाप्यारण्यका-व्यपदिष्टा प्रियदर्शिका स्वाज्ञाकरीष्वन्यतमा परिगृहीता। अनन्तरं च वत्सराजोऽयमवबुध्य दृढवर्मणो दिष्टदोषं नितान्तरुष्टो व्यसर्जयद्विजयसेनपुरःसरं दण्डचक्रमुपरि कलिङ्गहतकस्य। एवं गच्छति काले कदाचित् कमलावचयाय वासवदत्तया धारागृहोद्यानदीर्घिकां प्रहिता प्रियदर्शिका, देव्या विरहोत्कण्ठाविनोदनिमित्तं तत्रैव सविदूष-

-क्रमागतेन वत्सराजेन दृष्टा। दृष्टमात्रायां च तस्यां तल्लावण्यादिविमोहितस्य बलवानभवद-नुरागो वत्सराजस्य। अत्रान्तरे च मधुकरैरायास्यमाना सभयमुत्तरीयेण मुखं पिधाय स्वसखीमाह्वयन्ती प्रियदर्शिका तदा स्वसमीपमागतं वत्सराजं सखीभ्रमेण कण्ठे गृह्णाति स्म। ततश्च मुखादुत्तरीयमपनीय राजानं पश्यन्ती लज्जास्पृहाभ्यामाकुला यावद्राज्ञा समाश्वास्यते तावदेव तत्सख्या इन्दीवरिकायाः समागमेन ससाध्वसा प्रियदर्शिका विमुच्य राजसन्निधिं सह सख्या गता वासवदत्तासकाशम्। तदा प्रभृति प्रियदर्शिकाया वत्सराजे—यः प्रियदर्शिकया 'अयं खलु स महाराजो यस्मा अहं तातेन दत्ता' इत्येवं प्रत्यभिज्ञातः—बलवानभिनिवेशः समजनि। तेन सा तदसमागमे नियतमात्मानमप्युत्स्रष्टुमभवदुद्युक्ता।

एतयोश्चेमम् अकालक्षमम् अन्योन्यानुरागम् अवगम्य परस्परसमागमसङ्घटने कृत-प्रयत्नेन राज्ञः सख्या विदूषकेण पृष्टा विदितारण्यकावृत्तान्ता च मनोरमा नाम प्रियदर्शि-कायाः प्रियसखी 'अद्य रात्रावस्माभिर्भगवत्याः साङ्कृत्यायन्याः कृतिरुदयनचरितं नाम नाटकं देव्याः पुरतः प्रयोक्तव्यम्। तत्रारण्यका वासवदत्ता भविष्यति। अहमपि वत्सराजः। तच्चरितेनैव सर्वं शिक्षितव्यम्। तदागत्य स्वयमेव स्वां भूमिकां कुर्वाणः समागमोत्सवमनुभवतु महाराजः।' इति तत्रोपायमावेदयामास। तथा चैवमविक-लमनुष्ठिते, निद्रापरवशेन मूर्खेण विदूषकेण सर्वोऽप्ययं वृत्तान्तः सहसा विभेदितः, येन कुपिता वासवदत्ता राज्ञोऽनुनयेनाप्यप्रसन्ना सद्य एवारण्यकां बन्धने कर्तुमादिदेश। गच्छता च कियतापि कालेन स्वमात्रा प्रेषितं पत्रमेकमधिगतं वासवदत्तया यत्र वासव-दत्तामातृष्वसृभर्तुरङ्गराजस्य कलिङ्गावस्कन्दः, बलवतोऽपि वत्सराजस्य तत्रौदासीन्य-प्रसङ्गेन विषादश्च व्यक्तीकृतः। एतन्मात्रदर्शनेन, आरण्यकावृत्तान्तव्यतिकरेण च खिद्यमानां वासवदत्तां यावदाश्वासयति सांकृत्यायनी, तावद् वत्सराजेनापि देवी-प्रसादनाय तत्र समुपस्थितम्। निवेदितश्चावगतदेवीवैमनस्यहेतुना राज्ञा पूर्वमेव स्वय-माचरितः कलिङ्गोपरि दण्डचक्रप्रेषणवृत्तान्तः, येन वासवदत्तायाः सन्तोषः समभवत्। अत्रान्तरे च निहतकलिङ्गः स्थापिताङ्गराजो विजयसेनः सहाङ्गराजकञ्चुकिना विनयवसुना समागतः। निवेदितश्च विनयवसुना दृढवर्मणः कृतज्ञतापरिमलः सन्देशः। अस्मिन्नेवावसरे स्वमरणमेव श्रेयो मन्यमाना विषं पीत्वा विमूर्छिता प्रियदर्शिका, गृहीतविषवैद्येन वत्सराजेन चिकित्सयितुमानीता वासवदत्तासकाशम्। यदा च चिकित्सिता सा बोधमापन्ना, तदा विनयवसोः प्रियदर्शिकायाश्च परस्परप्रत्यभिज्ञानसम्भाषणेन ज्ञातं वासवदत्तया स्वभगिनीत्व-मारण्यकायाः। ततश्च सर्वेष्वपि सन्तुष्टेष्वानन्दभरितया देव्या वासवदत्तया ससन्तोषं प्रतिपादिता प्रियदर्शिका वत्सराजेन पूर्णेन मनसा प्रतिगृहीता।

---

# शाकुन्तलस्यच्छाया

[ श्रीहर्षेण शाकुन्तलगतं मधुकरवृत्तान्तमवलम्ब्य विनिर्मितः प्रियदर्शिकायां द्वितीयाङ्कस्यान्तिमो भाग इति प्रायेण नैव विदितमिदं छात्राणां चाध्यापकानां च। अत एव तेषामवबोधनाय प्रियदर्शिकायाः कियांश्चन भागोऽत्रोद्ध्रियते। ]

आरण्यका। ( भ्रमरसम्बाधं नाटयन्ती ) हद्धी हद्धी! एदे खु अवरे परिच्चइअ कमलिणिं णीलुप्पलवणाइं समापडन्ता णिउणदरं बाधन्ता आआसअन्ति मं दुट्ठमहुअरा। ( उत्तरीयेण मुखं पिधाय सभयम् ) हला इन्दीवरिए, परित्ताएहि मं। परित्ताएहि मं। एदे दुट्ठमहुअरा परिभविस्सन्ति। [ हा धिक्, हा धिक्! एते खल्वपरे परित्यज्य कमलिनीं नीलोत्पलवनानि समापतन्तो निपुणतरं बाधमाना आयासयन्ति मां दुष्टमधुकराः। हला इन्दीवरिके! परित्रायस्व माम्! परित्रायस्व माम्! एते दुष्टमधुकराः परिभविष्यन्ति। ]

विदूषकः। भो वअस्स, पुण्णा दे मनोरधा। जावज्जेव्व गब्भदासीए सुदा ण आअच्छदि तावज्जेव्व तुमं पि तुण्हिक्को भविअ उवसप्प। एसा वि सलिलसद्दसुणिदेण पदसञ्चारेण इन्दीवरिआ आअच्छदित्ति जाणिअ तुमं जेव्व ओलम्बिस्सदि। [ भो वयस्य, पूर्णास्ते मनोरथाः। यावदेव गर्भदास्याः सुता नागच्छति तावदेव त्वमपि तूष्णीको भूत्वोपसर्प। एषापि सलिलशब्दश्रुतेन पदसञ्चारेण इन्दीवरिकागच्छतीति ज्ञात्वा त्वामेवावलम्बिष्यते। ]

राजा। साधु वयस्य साधु। कालानुरूपमुपदिष्टम्। ( इत्यारण्यकासमीपमुपसर्पति। )

आरण्यका। ( पदशब्दाकर्णनं नाटयन्ती ) इन्दीवरिए, लहु उवसप्प लहु उवसप्प। आउलीकिदम्हि दुट्ठमहुअरेहिं। ( राजानमवलम्बते। ) [ इन्दीवरिके लघूपसर्प, लघूपसर्प। आकुलीकृतास्मि दुष्टमधुकरैः। ]

( राजा कण्ठे गृह्णाति। आरण्यकोत्तरीयं मुखादपनीय राजानमपश्यन्ती भ्रमरावलोकनं नाटयति। )

राजा ( स्वोत्तरीयेण भ्रमरं निवारयन् )।

अयि विसृज विषादं भीरु भृङ्गास्तवैते
परिमलरसलुब्धा वक्त्रपद्मे पतन्ति।
विकिरसि यदि भूयस्त्रासलोलायताक्षी
कुवलयवनलक्ष्मीं तत्कुतस्त्वां त्यजन्ति॥

आरण्यका। ( राजानं दृष्ट्वा साध्वसं नाटयन्ती ) कधं ण एसा इन्दीवरिआ! ( सभयं राजानं त्यक्त्वापसरन्ती ) इन्दीवरिए, लहु आअच्छ लहु आअच्छ।

परित्ताएहि मं। [ कथं नैषेन्दीवरिका! इन्दीवरिके, लघ्वागच्छ, लघ्वागच्छ, परित्रायस्व माम्। ]

विदूषकः। भोदि, सअलपुढवीपरित्ताणसमत्थेण वच्छराएण परित्ताअन्ती चाड इन्दीवरिअं आक्कन्देसि! [ भवति सकलपृथ्वीपरित्राणसमर्थेन वत्सराजेन परित्रायमाणा चेटीमिन्दीवरिकामाक्रन्दसि! ]

( राजा अयि विसृजेत्यादि पुनः पठति। )

आरण्यका। ( राजानमवलोक्य सस्पृहं सलज्जं चात्मगतम् ) अअं खु सो महाराओ यस्स अहं तादेण दिण्णा, ठाणे खु तादस्स पक्खवादो। ( आकुलतां नाटयति। ) [ अयं खलु स महाराजो यस्मा अहं तातेन दत्ता। स्थाने खलु तातस्य पक्षपातः। ]

चेटी। आआसिदा खु आरण्णिआ दुट्ठमहुअरेहि। ता जाव उवसप्पिअ समास्सासेमि। आरण्णिए मा भाआहि। एसा उवाअद म्हि। [ आयासिता खल्वारण्यका दुष्टमधुकरैः। तद्यावदुपसृत्य समाश्वासयामि। आरण्यके मा भैषीः। एषोपागतास्मि। ]

विदूषकः। भो ओसर ओसर। एसा खु इन्दिवरीआ आअदा। ता एदं वुत्तन्तं पेक्खिअ देवीए निवेदिस्सदि। ( अङ्गुल्या निर्दिश्य ) ता इमं जेव्व कदलीघरं पविसिअ मुहुत्तं चिट्ठम्ह। [ भो अपसरापसर। एषा खल्विन्दीवरिकागता। तदिमं वृत्तान्तं प्रेक्ष्य देव्यै निवेदयिष्यति। तदिदमेव कदलीगृहं प्रविश्य मुहूर्तं तिष्ठामः। ]

( उभौ तथा कुरुतः। )

चेटी। ( उपसृत्य कपोलौ स्पृशन्ती ) हञ्जे आरण्णिए कमलसदिसस्स तुह वअणस्स अअं दोसो यं महुअरा एव्वं अवरज्झन्ति। ( हस्ते गृहीत्वा ) ता एहि गच्छम्ह। परिणदो दिअहो। [ हञ्जे आरण्यके! कमलसदृशस्य तव वदनस्यायं दोषो यन्मधुकरा एवमपराध्यन्ति। तदेहि, गच्छावः। परिणतो दिवसः। ]

( गमनं नाटयतः। )

आरण्यका। ( कदलीगृहाभिमुखमवलोक्य ) हञ्जे इन्दीरिए, अदिसिसिरदाए सलिलस्स ऊरुत्थम्भो विअ समुप्पण्णो। ता सणिअं सणिअं गच्छम्ह। [ हञ्जे इन्दीवरिके, अतिशिशिरतया सलिलस्योरुस्तम्भ इव समुत्पन्नः। तच्छनैः शनैर्गच्छावः। ]

चेटी। तधा। [ तथा ]।

( इति निष्क्रान्ते। )

विदूषकः। भो एहि। णिक्कमम्ह। तं गेण्हिअ एसा दासीए सुदा इन्दीवरिआ गदा। [ भो एहि। निष्क्रामावः। तां गृहीत्वैषा दास्याः सुता इन्दीवरिका गता। ]

( तथा कुरुतः । )

राजा । ( निःश्वस्य ) कथं गता ! सखे वसन्तक ! न खल्वविघ्नमभिलषितमधन्यैः प्राप्यते । ( विलोक्य ) सखे पश्य पश्य ।

आबद्धमुखमपीदं कण्टकितं कमलकाननं तस्याः ।
सुकुमारपाणिपल्लवसंस्पर्शसुखं कथयतीव ॥

( निःश्वस्य ) सखे क इदानीमुपायस्तां द्रष्टुम् ।

विदूषकः । भो तुमं जेव्व पुत्तलिअं भञ्जिअ इदाणिं रोदसि । ण मे मुक्खस्य वम्हणस्स वअणं करेसि । [ भोस्त्वमेव पुत्तलिकां भङ्क्त्वेदानीं रोदिषि । न मे मूर्खस्य ब्राह्मणस्य वचनं करोषि । ]

राजा । किं मया न कृतम् ?

विदूषकः । तं दाणिं विसुमरिदं जं तुण्हिक्को भविअ उवसप्पत्ति मए भणिदं । अदिसंकडे भवं पविसिअ अलिअपण्डिच्चदुव्विअड्ढदाए अयि विसृज विषादं ति एदेहिं अण्णेहिं च कड्अवअणेहिं णिब्भच्छिअ सम्पदं किं रोदसि ? पुणो वि उवाअं पुच्छसि । [ तदिदानीं विस्मृतं यत् तूष्णीको भूत्वोपसर्पेति मया भणितम् । अतिसंकटं भवान् प्रविश्यालीकपाण्डित्यदुर्विदग्धया अयि विसृज विषादमित्येतैरन्यैश्च कटुकवचनैर्निर्भर्त्स्य साम्प्रतं किं रोदिषि ? पुनरप्युपायं पृच्छसि । ]

राजा । कथं समाश्वासनमपि निर्भर्त्सितमिति भणितं मूर्खेण ।

विदूषकः । जाणिदं जेव्व को एत्थ मुक्खोत्ति । ता किमेदिणा । अत्थमआहिलासी भअवं सहस्सरस्सी । ता एहि, अब्भन्तरं जेव्व पविसम्ह । [ ज्ञातमेव कोऽत्र मूर्ख इति । तत् किमेतेन । अस्तमयाभिलाषी भगवान् सहस्ररश्मिः । तदेहि, अभ्यन्तरमेव प्रविशावः । ]

राजा । ( विलोक्य ) अये परिणतप्रायो दिवसः । सम्प्रति हि—

हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता
रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते ।
चक्राह्वोऽहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे
सञ्जाताः सहसा ममेव भुवनस्याप्यन्धकारा दिशः ॥

( इति निष्क्रान्ताः सर्वे । )

# कपोलो वा कपालो वा ?

[ भट्टपल्लीवास्तव्य-श्रीविष्णुपद-भट्टाचार्यकृतः संस्कृतानुवादः ]

उरुश्रुतं गुरुं प्राप्य विद्या-दिग्गज-नामकम् ।
वन्दित्वा चरणौ तस्थौ निरानन्दो गवेश्वरः ॥१॥
"कथं विषण्ण-चित्तस्त्वं ? निषण्णः पुरतो भव ।"
इति सूक्तं गुरोः श्रुत्वा मुक्तकण्ठं रुरोद सः ॥२॥
तमभ्यभाषतैवञ्च "जातः परिभवो नवः ।
तवोपदेशबीजानां दृश्यते नाङ्कुरोद्भवः ॥३॥
प्रश्नोऽतिसरलः कश्चित् कृतो हि सुहृदा मम ।
अयच्छतोत्तरं तस्य हन्त मूकायितं मया ॥४॥
विद्यादिग्गजशिष्यस्त्वं सर्वतः पण्डितायसे ।
श्लोकांशोऽयमुपन्यस्तस्तदर्थं शंस सत्वरम् ॥५॥
इत्युक्त्वा व्याजहारासौ श्लोकपादमिमं पुनः ।
'कपोलः प्लावितस्तूर्णं बालेन नयनाम्बुभिः' ॥६॥
'कपोलो' नाम किं वस्तु नाहं जानामि तत्त्वतः ।
ऊर्ध्वश्वासं ततस्तेऽहं देवान्तिकमुपागतः" ॥७॥
निमीलिताक्षस्तच्छ्रुत्वा प्राह स्म विद्यादिग्गजः ।
"शब्दोऽयमतिदुर्बोधः सृजत्येव शिरोरुजाम् ॥८॥
मन्येऽपपाठ एवायं रसनाजाड्यसम्भवः ।
पाणिनेः शब्दशास्त्रेऽपि व्युत्पत्तिर्नास्य दृश्यते ॥९॥
वैधेयोऽकालकूष्माण्डः काण्डज्ञानविवर्जितः ।
नूनं 'कपाल'-शब्दं ते 'कपोलो'-कृतवान् सखा" ॥१०॥
शिष्येणोक्तं "न मे देव ! बुद्धि-ग्राह्यमिदं पुनः ।
कपालः संस्थितो मूर्ध्नि तदधश्च विलोचने ॥११॥
कथं वा प्लावितोऽसौ स्याद् गलद्भिर्नयनाम्बुभिः ।
न जातूर्ध्वंचरं नीरं न धूमो जातु निम्नगः" ॥१२॥
विहस्याभाषताचार्यः "स्वल्पविद्या भयङ्करा ।
श्लोकैकदेशमाकर्ण्य जातस्त्वं बोधविक्लवः ॥१३॥
श्रुते कृत्स्नतया श्लोके ज्ञातायाञ्च परिस्थितौ ।
संशयस्ते लयं गच्छेत् तमःस्तोम इवाहनि ॥१४॥

पित्रा वेत्राहतो रोषाद् बालः कश्चिदनाश्रवः ।
कदम्बवृक्षमारुह्य तत्रैवासीत् सुदुःखितः ॥१०॥

ततस्तेन मनःखेदाद् यदध्यवसितं तदा ।
श्लोकेन वक्ष्यमाणेन तदेवास्ति प्रपञ्चितम् ॥१६॥

'उन्नीतचरणाश्लिष्ट-नीपशाखा-विलम्बिना ।
कपालः प्लावितस्तूर्णं बालेन नयनाम्बुभिः' ॥१७॥

ऊर्ध्वपादस्य मूर्धा हि विपर्येति निसर्गतः ।
कपालोऽश्रुप्लुतोऽपि स्यात् किमत्र विस्मयावहम् ॥१८॥

श्रुत्वेदं रूढरोमाञ्चो बुद्धिमान् स गवेश्वरः ।
अब्रवीद् "धन्य एवाहं त्वदङ्घ्रि कमलाश्रितः ॥१९॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जन-शलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः" ॥२०॥

---

# भूतकरणः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सहृदयाः, विज्ञापितमेवास्माभिर्व्यतीते मासे यद् वैदिकभाषायामावेस्ताभाषायां ग्रीसीय-भाषायां च भूतकरणो बाहुल्येन प्रयुज्यते, न सर्वत्र । Iliadकाव्ये (i. 34) कविचक्रवर्तिना होमरमहोदयेन bē d'akeōn para thīna poluphloisboio thalessēs* इत्यत्र bē पदे भूतकरणो न योजितः । एवे इति लेखनीये वे इति लिखितम् । अत एव केनचन कविनोक्तम्—होमरकविना सर्वे भूतकरणाः सागराम्भसि विसर्जिता इति ।

Poluphloisboisterous Homer of old
Threw all his augments into the sea,
Although he had often been courteously told
That perfect imperfects begin with an *e*.
But the Poet replied with a dignified air,
What the Digamma does any one care ?

---

*de (and) bē (he went) akeōn (silent) para (along) thīna (the shore) poluphloisboio (of the much-roaring) thalassēs (sea).

## त्रिवर्षीण आरक्षिकपुरुषः

Sunday Statesman पत्रे (August 30, 1959, p. 9, col. 4) दृष्टम्—Mr. Oscar Lawrence Burrell (35)...Mr. Burrell is with the Madras Police for the last 32 years इति। पञ्चत्रिंशद्वर्षीयो बारेल् महोदयो द्वात्रिंशतं वत्सरान् मद्राजदेशीयारक्षिकविभागे वर्तते इति। तर्हि बारेल् महोदयेन त्रिवर्षीयेणारक्षिकविभागे प्रविष्टमिति स्फुटम्।

---

## प्रमादाः प्रशंसनीया न पुनः प्रदर्शनीया न वा प्रहसनीया न वा परिशोधनीयाः

He (Dr. Colbatch) was summoned to appear before the Court of King's Bench in order to explain his pamphlet. The judge was old and testy; he misquoted Horace—'Jura negat sibi nata, nihil non abrogat'; '*Arrogat*, my Lord!' said Dr. Colbatch. A little later the judge once more returned to the quotation, making the same error. '*Arrogat*, my lord!' cried Dr. Colbatch for the second time. Yet once again, in the course of his summing-up, the judge pronounced the word 'abrogat'. '*Arrogat*, my lord!' screamed, for the third time, Dr. Colbatch. The interruptian was fatal. The unhappy man was fined £50 and imprisoned for a week *** He was old, haggard, dying. Tossing on his bed at Orewell, he fell into a delirium; at first his mutterings were inarticulate; but suddenly starting up, a glare in his eye, he exclaimed with a strange emphasis, to the utter bewilderment of the bystanders. '*Arrogat*,—my lord!' and immediately expired. LYTTON STRACHEY.

Horace-कवेः Ars Poetica (१२२) प्रबन्धे दृश्यते—

Jura neget sibi nata, nihil non arroget armis इति। अस्य च Conington कृत आङ्गलानुवादः—

All laws, all covenants let him disown,<br>
And test his quarrel by the sword alone. इति।

# Bhakti in the Priyādigaṇa

[ Kshitish Chandra Chatterji ]

Bahuvrīhi compounds like दृढभक्ति, विदितभक्ति, दर्शितशिष्यभक्ति, विकासिभक्ति etc. are of fairly frequent occurrence in Sanskrit literature, but they have caused headache to grammarians and commentators for centuries. In a Bahuvrīhi compound consisting of two feminine words, the first as a rule drops its feminine suffix according to the principle of economy of effort. An exception is made in those cases where the second member is a word belonging to the प्रियादि · list. Now since the word भक्ति is read in this list, दृढा भक्तिर्यस्य सः should yield दृढाभक्तिः and not दृढभक्तिः. Similarly दृष्टभक्तिः, विकासिभक्तिः etc. ought to be दृष्टाभक्तिः, विकासिनीभक्तिः etc., but nowhere in literature do we come across these monstrosities. Vāmana, the joint author of the Kāśikā, would appear to have been the first to cut the Gordian knot and put forward the view that दृढभक्तिः is not a compound of दृढा and भक्ति but of दृढ and भक्ति—दृढं भक्तिर्यस्य सः ! ! ! Here no stress is laid on the gender of दृढ, it merely means 'not not-दृढ' and according to Bhāṣyakāra's dictum नपुंसकं लिङ्गसर्वनाम 'gender in general is denoted by the neuter', the colourless neuter is used here. This is the height of absurdity, but a drowning man will catch at a straw. And later grammarians have clung to this solution of Vāmana with all their strength. Following in the footsteps of Haradatta, Bhaṭṭoji goes so far as to assert that when the gender of the adjective is emphasised and we compound दृढा and भक्ति the form will undoubtedly be दृढाभक्तिः ! ! !

The correct explanation of this apparent anomaly has been supplied by Bhojarāja and quoted by Vardhamāna in his Gaṇaratnamahodadhi and by Mallinātha in his three Sañjīvanī's and Sarvaṅkaṣā. Bhojarāja has framed the rule भक्तौ च कर्मसाधनायाम् ( Sarasvatī-Kaṇṭhābharaṇa vi. 2. 46 ) according to which in a Bahuvrīhi compound of which भक्ति formed in कर्मवाच्य is the final member, the previous member does not drop its feminine suffix. Thus when *bhakti* means 'an object of devotion', पुंवद्भाव or the substitution of the masculine form

for the feminine is barred, but when it means devotion, पुंवद्भाव is allowed.

The reason for this restriction is not far to seek. When भक्ति is formed in the भाववाच्य and means 'devotion', there is not the least likelihood of any confusion arising even when the previous member drops its feminine suffix, but when it is formed in the कर्मवाच्य and means 'the object of devotion' it will be absolutely impossible in many cases to find out whether the object of devotion is a male or a female. Thus if we say गिरितनयभक्तिः or उपाध्यायभक्तिरियं बाला it is not clear if the object of devotion is गिरितनय or गिरितनया, उपाध्याय or उपाध्याया. Thus it is only with a view to avoid confusion that पुंवद्भाव is barred in such cases. Economy of effort is allowed to have its way, so long as it does not interfere with intelligibility. With all the deference due to Bhaṭṭoji we assert and maintain that दृढाभक्तिः in the sense of 'one whose devotion is steadfast' is absolutely incorrect. This is why Vāmana, the author of the Kāvyālaṁkārasūtravṛtti, says दृढभक्तिरिति सर्वत्र and regards it as correct, though श्लिष्टप्रिय, वृद्धकान्त etc. are deemed incorrect. Since the other words in the list प्रिया, सुभगा, दुर्भगा etc. denote concrete things, भक्ति must also be taken in the sense of something concrete. Cf. संयोगो विप्रयोगश्च साहचर्यं विरोधिता etc.

There is another point which commentators appear to have overlooked. Pāṇini uses the word भक्ति by itself in an important rule in the Taddhita section (iv. 3. 95) in the कर्मवाच्य. Since the word underwent a change of meaning after Pāṇini, later grammarians generally changed this rule Thus in the Cāndra Vyākaraṇa we have तत्र भक्तिर्महाराजाट्ठञ् iii. 3. 63 where तत्र has been inserted to show भक्ति means devotion and that the suffix is to be added to the word denoting the object of devotion. In the Saṅkṣiptasāra we find तद्दैवते iv. 167 and in the Supadma सेव्यः v. 3. 125. Thus, there is not the slightest doubt about the fact that the word भक्ति read in the प्रियादि group is not a late interpolation and that it means not 'devotion' but 'the object of devotion.'

A very good example of the absence of पुंवद्भाव in connexion with भक्ति is found in the Mahābhāṣya. It is क्रोष्ट्रीभक्तिः (under

vii. 1. 96) which is explained thus क्रोष्ट्री भक्तिरस्येति बहुव्रीहिः। भक्ति-शब्दस्य प्रियादिषु पाठात् पुंवद्भावाभावः। Nāgeśa says: क्रोष्ट्री सेव्यास्य. Another good example is समुद्रतनयाभक्तिः* found in the Bṛhat-Pārāśarī Horā. Hemacandra gives the example गिरितनयाभक्तिः in his Bṛhadvṛtti.

Some examples of पुंवद्भाव are quoted below :

दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः।
निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित्॥ रामायण २।१।२४

दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः स्तम्भचापल्यवर्जितः संप्रियो वैराणामपकर्तेत्यमात्यसम्पत्॥ कौटिल्य १।५

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत्॥ रघुवंशः १२।१९
मान्यभक्तिरथवा सखीजनः सेव्यतामिदमनङ्गदीपनम्।
इत्युदारमभिधाय शङ्करस्तमपाययत पानमङ्गनाम्॥ कुमार० ८।७७
पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजोऽभिनवजपापुष्परक्तं दधानः।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या॥ मेघदूत १।३९
सा खलु विदितभक्तिं मां महर्षेः कथयिष्यति। शाकुन्तल १
मुदितैस्तदेति दितिजन्मनां रिपावविनीयसम्भ्रमविकासिभक्तिभिः।
उपसेदिवद्भिरुपदेष्टरीव तैर्ववृते विनीतमविनीतशासिभिः॥शिशु० १३।२४

We give below the views of grammariamns :

पाणिनिः। स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४।

काशिका। कथं गर्भिभार्यः प्रसूतभार्यः प्रज्ञातभार्य इति? कर्तव्योऽत्र यत्नः।... दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयम्।

काशिकाविवरणपञ्चिका। यदि समानायामाकृतौ यो भाषितपुंस्कस्तस्य पुंवद्भाव उच्यते, एवञ्च गर्भिभार्य इत्यादौ पुंवद्भावो न प्राप्नोति। गर्भप्रभृतीनां शब्दानां

* शुक्रेण संयुते केतौ कारकांशे व्ययस्थिते।
समुद्रतनयाभक्तिर्जायतेऽसौ सुबुद्धिमान्॥

भिन्नायामाकृतौ भाषितपुंस्कत्वादित्यभिप्रायः। अनवयवभूतान्तर्वर्तिवस्तुविशेषसम्बन्धे हि सति स्त्री गर्भिणीत्युच्यते। व्रीहिस्त्वन्तर्वर्त्यवयवस्तु विशेषसम्बन्धे सति गर्भीत्युच्यते। तस्मात् पुंसि स्त्रियाञ्च वर्तमानस्य गर्भिशब्दस्य प्रवृत्तिनिमित्तं भिद्यते। प्रसूतप्रजातशब्दयोरपि प्रवृत्तिनिमित्तं क्रियाकृतिर्भिन्ना। स्त्रियां हि वर्तमानौ तौ गर्भविमोक्षणं प्रवृत्तिनिमित्तमुपादाय वर्तेते, पुंसि तु गर्भाधानम्। कर्तव्योऽत्र प्रयत्न इति। केचिद् व्याचक्षत उपसंख्यानं कर्तव्यमिति। अपरे पुनराहुः स्त्रियाः पुंवदिति योगविभागः कर्तव्यः। अथवा कर्तव्योऽत्र प्रयत्न इत्यनेनेदं दर्शयति। यद्यपि स्त्रियां व्रीहौ च गर्भत्वभेदस्तथापि स नाश्रयितव्यः। यत् तु तत्रावयवानवयवभेदमुत्सृज्य सामान्येनान्तर्वर्तिवस्तुविशेषसम्बन्धमात्रं तदेवाश्रयितव्यम्। अतस्तदपेक्षया स्त्रियां व्रीहौ च वर्तमानगर्भिशब्दस्य तुल्यमेव प्रवृत्तिनिमित्तमिति। एवं प्रसूतप्रजातशब्दयोरप्यपत्याधानविमोक्षणभेदं त्यक्त्वायमपत्यवान् इयमपत्यवतीत्यपत्यवत्सम्बन्धमात्रमाश्रितमित्येतद् व्याख्यानमिति प्रयत्नः कर्तव्य इति।...

अथ दृढभक्तिः शोभनभक्तिरित्यादौ कथं पुंवद्भावः? यावता प्रियादित्वात् प्रतिषेधेन भवितव्यमित्याह—दृढभक्तिरित्येवमादिष्वित्यादि। अस्त्रीवाचिनः पूर्वपदस्य विवक्षितत्वाद् दृढभक्तिरित्येवमादि लक्ष्यं सिद्धमित्येवं समाधेयम्। द्वेष्यं परिहर्तव्यमित्यर्थः। दृढशब्दोऽत्रादार्ढ्यनिवृत्तिपरः प्रयुक्तः। अत्रादार्ढ्यनिवृत्तिपरायां चोदनायां लिङ्गविशेषोपादानमनुपकारकमेवेति। अतः स्त्रीत्वमिह न विवक्षितम्। तस्मादस्त्रीलिङ्गस्य दृढशब्दस्यायं प्रयोग इत्यभिप्रायः।

पदमञ्जरी। कथमित्यादि। अनवयवभूतगर्भसम्बन्धः स्त्रियां गर्भिणीशब्दस्य प्रवृत्तिनिमित्तम्, पुंसि त्ववयवभूतगर्भसम्बन्धः। प्रसूतप्रजातशब्दयोरपि स्त्रियां गर्भमोचनं [प्रवृत्ति-]निमित्तं पुंसि तु गर्भाधानम्। कर्तव्योऽत्र यत्न इति। अन्तर्वर्तिवस्तुसम्बन्धमात्रं गर्भिणीशब्दस्य प्रवृत्तिनिमित्तम्, अवयवत्वानवयवत्वे न तन्त्रम्। एवं प्रसूतप्रजातशब्दयोरपि आधानविमोचनत्यागेनापत्यसम्बन्धमात्रं निमित्तमाश्रीयत इत्ययमत्र यत्नः।

अथ दृढभक्तिः शोभनभक्तिरित्यत्र कथं पुंवद्भावः, यावता प्रियादिषु भक्तिशब्दः पठ्यत इत्यत आह—दृढं भक्तिरित्येवमादिष्विति। स्त्रीवाचित्वं पूर्वपदस्याविवक्षितमतो दृढभक्तिरित्येवमादिसिद्धिरित्येवं चोद्यसमाधानं कर्तव्यमित्यर्थः। दृढशब्दोऽत्रादार्ढ्यनिवृत्तिपरः। तत्रादार्ढ्यनिवृत्तिपरायां चोदनायां स्त्रीलिङ्गोपादानमकिञ्चित्करमिति भावः। न चैवं सूत्रस्यानारम्भणीयत्वम्, लिङ्गविशेषविवक्षायां दर्शनीयभार्य इत्याद्यनिष्टप्रसङ्गात्।

भाषावृत्तिः। कथं दृढभक्तिः? दृढं भक्तिरस्येति। पूर्वपदस्यास्त्रीत्वविवक्षितत्वात्। श्लिष्टप्रियः विमुक्तकान्त इत्यादयस्तु चिन्त्याः।

प्रक्रियाकौमुदी। प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामना वामा बाला तनया॥ दृढभक्तिरित्यादौ भजनादेर्दार्ढ्यमात्रं विवक्षितं न तु स्त्रीत्वम्।

प्रसादः। अथ दृढभक्तिरित्यादौ कथं पुंवत्त्वम्? यतो भक्तिशब्दः प्रियादिरिति निषेधेन भाव्यम् इत्याशङ्क्याह—दृढभक्तिरित्यादि। दृढशब्दो ह्यत्रादार्ढ्यनिवृत्तिमात्रपरः प्रयुक्तः। तत्रादार्ढ्यनिवृत्तिपरायां चोदनायां लिङ्गविशेषोपादानमनुपयोग्येवेति स्त्रीत्वमिह न विवक्षितम्। तस्मादस्त्रीलिङ्गदृढशब्दस्यायं प्रयोग इत्यभिप्रायः।

दुर्घटवृत्तिः। कथं दृढभक्तिश्च शूरश्चेति चाणक्ये, भक्तिशब्दस्य प्रियादिषु पाठान्निषेधात्? अस्त्रीपूर्वपदस्य विवक्षितत्वादिति वृत्तिः। दृढं भक्तिरस्येति वाच्यं पदसंस्कारेण।

शब्दकौस्तुभः। कथं तर्हि शरदः कृतार्थतेत्यादीति चेत्, सामान्ये नपुंसकमिति गृहाण। एषैव भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः [ शाकुन्तल ४ ] इत्यादौ तत्रापि गतिः। क्रियाशब्दतया त्वत्पक्षेऽप्यस्य गुणत्वाभावात्। तथा च परः सन्निकर्षः संहितेति [ १।४।१०९ ] सूत्रे एकवर्णवर्तित्वाद्वाच इति भाष्यं कैयटो व्याख्यत् —सामान्योपक्रमात् स्त्रीप्रत्ययाभाव इति। प्रसिद्धा च दृढभक्तिरित्यादावेषैव गतिः। अत एव स्त्रियाम् [ ४।१।३ ] इति सूत्रे व्यापिनीत्वात् प्रवृत्तेरिति कैयटः, पुंयोगात् [ ४।१।४८ ] इति सूत्रे स्त्रियाः संविधात्रीत्वादिति कैयटश्च संगच्छते। अत एव पत्युर्नो यज्ञसंयोगे [ ४।१।३३ ] इति सूत्रे पत्न्याः फलप्रतिग्रहीतृत्वादिति वृत्तिग्रन्थमुपादाय हरदत्त आह—कर्तृत्वमात्रं विवक्षितं न तु स्त्रीत्वमिति ङीब् न कृत इति। ४।१।४४।

सिद्धान्तकौमुदी। प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामा अबला तनया॥ सामान्ये नपुंसकम्। दृढं भक्तिर्यस्य स दृढभक्तिः। स्त्रीत्वविविक्षायां तु दृढाभक्तिः।

तत्त्वबोधिनी। अदार्ढ्यनिवृत्तिमात्रपरत्वेनात्र दृढशब्दप्रयोगान्न लिङ्गविशेषविवक्षेति भावः। लिङ्गविशेषविवक्षायां तु दृढाभक्तिरित्यादिसिद्धये प्रियादिषु भक्तिशब्दपाठः।

लघुशब्देन्दुशेखरः। अदार्ढ्यनिवृत्तिमात्रपरत्वेन लिङ्गविशेषविवक्षा नेति भावः। तद्विवक्षायां दृढाभक्तिरित्यादिसिद्धये प्रियादिषु तत्पाठः।

चन्द्रकला। सामान्यविवक्षामुपपादयति—अदार्ढ्यनिवृत्तिमात्रपरत्वेनेति।

बालमनोरमा। ननु भक्तिशब्दस्य प्रियादिषु पाठे दृढा भक्तिर्यस्य स दृढभक्तिरित्यत्र

कथं पुंवत्त्वमित्यत आह—सामान्ये नपुंसकमिति। आश्रित्येति शेषः। दृढमिति। पदसंस्कारपक्षे सामान्यपरत्वमाश्रित्य दृढशब्दो नपुंसकलिङ्गो व्युत्पाद्यः। ततस्तस्य भक्तिशब्देनान्वये पूर्वप्रवृत्तं नपुंसकत्वं नापैति, लिङ्गविशेषस्याविवक्षितत्वात्, वेदाः प्रमाणमितिवत्। अत्र चार्थे पस्पशाह्निकभाष्ये शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुमिति प्रयोगो लिङ्गम्। नन्वेवं सति प्रियादिषु भक्तिशब्दपाठो व्यर्थ इत्यत आह—स्त्रीत्वविवक्षायां त्विति। वाक्यसंस्कारपक्षे विशेष्यानुसारेण स्त्रीत्वप्रतीतेर्नियमादिति भावः।

कातन्त्रम्। पुंवद्भाषितपुंस्कादनूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे। चतुष्टय २७६।

वृत्तिः। आदिग्रहणात् कल्याणीप्रियः। प्रिया मनोज्ञा सुभगा दुर्भगा भक्ति सचिवा स्वसा कान्ता क्षान्ता समा बाला दुहिता वामना इति।

दुर्गटीका। भक्तिशब्दः पूरण्यादौ पठ्यते। दृढभक्तिरित्यपि विवक्षया भवति।

पञ्जी।०।

कविराजव्याख्या। पूरण्यादिगणमाह—प्रियेत्यादि। तर्हि कथं "दर्शितशिष्यभक्तिः" [ रघु० ५ ] दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः" [ रघु० १२ ] इत्यादिषु भक्तिशब्दे पुंवत् स्यात्? सत्यं भक्तिशब्दो हि द्विविधः—कर्मसाधनो भावसाधनश्च। तत्र च सुभगादिशब्दस्य द्रव्यवाचिनः साहचर्याद् भक्तिशब्दोऽत्र कर्मसाधनो द्रव्यवाची गृह्यते। अत एव कुलचन्द्रोऽपि भज्यत इति भक्तिः। कर्मण्येव पूरण्यादिरित्याह। आदिशब्दस्य व्यवस्थावाचित्वादित्यन्ये। टीकाकृता तु दृढभक्तिरिति विवक्षयेत्युक्तम्। तस्याप्ययमाशयः—विशेषोक्तमिति विवक्षया पुनः कर्मसाधनं व्याख्यायेत्यर्थस्य कर्तव्यत्वात्।

जैनेन्द्रः। ४।३।१८८।०।

चन्द्रः। स्त्रियाः पुंवदुक्तपुंस्कादनूङेकार्थे स्त्रियामपूरणीप्रियादौ।

वृत्तिः। प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा वामना।

सरस्वतीकण्ठाभरणम्। भक्तौ च कर्मसाधनायाम्। प्रिया-मनोज्ञा-कल्याणी-सुभगा-स्वा-क्षान्ता-कान्ता-वामा-वामना-समा-सचिवा-चपला-बाला-तनया-दुहितृषु। ६।२। ४६-४७।

हैमानुशासनम्। नाप्प्रियादौ ३।२।५३।

बृहद्वृत्तिः। प्रियादि। कल्याणी प्रिया अस्य कल्याणीप्रियः। एवं भव्याप्रियः। भव्यामनोज्ञः। प्रियाकल्याणीकः। प्रियासुभगः। कल्याणीदुर्भगः। कल्याणीस्वः।

प्रियाक्षान्तः। दर्शनीयाकान्तः। प्रियावामनः। दर्शनीयासमः। प्रियासचिवः। प्रियाचपलः। प्रियाबालः। कल्याणीतनयः। कल्याणीदुहितृकः। कल्याणीभक्तिः। गिरितनया भक्तिरस्य गिरितनयाभक्तिः। एवं दृढभक्तिः। अस्त्रीपूर्वपदस्य विवक्षितत्वात्।

लघुन्यासः। गिरितनयाभक्तिरित्यत्र कर्मणि क्तिः। भज्यते सेव्यतेऽसौ। गिरितनया भक्तिः सेव्या यस्य। अस्त्रीपूर्वपदस्येति। ननु चात्र भक्तौ स्त्रियां विशेष्यायां गुणवचनानामाश्रयतो लिङ्गवचनानीति दृढादिभिः स्त्रीलिङ्गैर्भाव्यम्। सत्यम्। दृढादिशब्दोऽत्रादार्ढ्यादिनिवृत्तिपरः प्रयुज्यते। तत्र चादार्ढ्यादिनिवृत्तिपरायां नोदनायां लिङ्गविशेषोपादानस्यानुपकारित्याद् भक्तेः स्त्रीत्वविवक्षामन्तरेणापि दार्ढ्यादिमात्रविवक्षयाप्यदार्ढ्यादिनिवृत्तेः सिद्धत्वात् स्त्रीत्वमत्र न विवक्षितम् इत्यौत्सर्गिकं नपुंसकत्वमेव भवति। कल्याणी भक्तिरित्यादौ तूत्तरपदसामानाधिकरण्याभिव्यक्त्यर्थं पूर्वपदे स्त्रीत्वमुच्यते। विवक्षाद्वयसम्भवे हि यथाकामं प्रयोगो भवतीति समाधानार्थः।

शाकटायनव्याकरणम्। प्रियादौ २।२।५१।

वृत्तिः। दृढभक्तिरिति। दृढं भक्तिरस्येति नपुंसकं पूर्वपदम्।

गणरत्नमहोदधिः। प्रियाकान्तामनोज्ञाख्याकल्याणीभक्तिदुर्भगाः।

सचिवावामनाक्षान्ताचपलानिचितासमाः ॥२।१३९

सुभगा दुहिता बाला वामाथ तनया तथा।

कुक्कुटाण्डमृगक्षीरकाकशावादयस्तथा ॥१४३

वाग्देवताभक्तिः। कथं दृढभक्तिः? दृढं भक्तिरस्येति नपुंसकमत्र पूर्वपदम्। भोजस्तु भक्तौ च कर्मसाधनायामित्यनेन सूत्रेण भवानीभक्तिरित्यादि भवति, भावसाधनायां तु स्थिरभक्तिर्दृढभक्तिर्भवान्येत्यादि भवतीत्याह। भद्रेश्वराचार्यस्तु। ( क्रमशः )

---

# आयुर्वेदस्य प्राचीनत्वम्

[ श्रीराधाकुमुद-मुखोपाध्यायः ]

सहृदयाः, साम्प्रतं वयं प्रायेण स्वदेशाभिमानशून्याः स्वजात्यभिमानशून्याश्च संवृत्ताः। एतत् कदापि न हिताय कल्पते। द्वित्राणि पाश्चात्यभाषामयपुस्तकानि सन्दृश्यैव कुक्कुटमिश्रायमाणैरस्माभिर्वेदचतुष्टयस्य तथा वेदाङ्गादीनां कालो निरूप्यते। सर्वं चैतन्न समीचीनम्। अद्यास्माभिरायुर्वेदस्य प्राचीनत्वमधिकृत्य किञ्चिद् विवरीष्यते।

प्राचीनतमे ग्रन्थे ऋग्वेदे पुरुषस्यायुः शतं शरद इत्युपवर्णितम्। भिषज्-भिषक्तम-भेषजशब्दानामपि तत्रोल्लेखो दृश्यते। तथा च द्वितीयमण्डलस्य त्रयस्त्रिंशत्तमे सूक्ते

श्रूयते—उन्नो वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमीति। नवममण्डलस्य द्वादशाधिकशततमे सूक्ते ऋषीणां भिषक्कर्मणि व्यापृतत्वं दृश्यते। अथर्ववेदे च बहूनां रोगाणां तत्प्रशमकानां मन्त्राणामोषधीनां चानेकश उल्लेख उपलभ्यते। अत्र च मनुष्यशरीरगतास्थ्नां यथार्थं परिसंख्यानं परिदृश्यते।

विनयपिटकादिषु बौद्धशास्त्रेष्वपि भेषजगतानि सुबहूनि महार्घ्याणि तथ्यान्युपलभ्यन्ते। विनयपिटकः प्रायेण बुद्धस्य समकालक एवं, अस्य च प्रणयनसमयः खीस्तपूर्वपञ्चमशतकप्रारम्भ इति विभाव्यते। चरकसंहिता खीस्तीये द्वितीयशतके विरचिता, सुश्रुतसंहिता च चतुर्थशतक इति प्रत्नतत्त्वविद आशेरते। यथा तथा वा भवतु सुप्राचीनेष्वपि बौद्धग्रन्थेषु भेषजगतानि बहूनि तथ्यानि विलसन्तीति नास्माभिर्विस्मर्तव्यम्। बुद्धस्य कालः ६२३-५४३ खीः पूः। सम्राजा बिम्बिसारेण नियुक्तेन बुद्धस्य चिकित्सकेन भिषक्प्रवरेण जीवकेनौषधसम्पृक्तं कमलमाघ्राप्य तस्य बद्धमलरोगो दूरीकृतः। अपरेऽपि बहवः श्रीलाश्चाधिकारिणश्च जीवकेन निरामयतां नीताः। तस्य च शुल्कमासीत् षोडशसहस्रकार्षापणानि ( १६,००० रूप्यकाणि )।

सम्राजाशोकेन खी० पू० २६०अब्दे योरोपेऽपि जनानां व्याधिजदुःखप्रशमनाय चिकित्सकसङ्घः सम्प्रेषितः। एतस्य विवरणं वारान्तरे वाचकमहाभागानां पुरत उपस्थापयिष्यते।

---

# पाश्चात्त्यदेशेष्वार्यमनीषिणः

[ श्रीसुनीतिकुमारचट्टोपाध्यायः ]

अवरतः खीः पूः पञ्चमशतकादारभ्य केचन भारतीया मनीषिणः सन्न्यासिनश्च ( प्रायेण सर्व एवेमे यायावरप्रकृतयस्तृणीकृतविपद्व्राताश्चासन् ) पाश्चात्त्यान् देशान् पर्यटितुं प्रतिष्ठन्ते स्मान्ते च ग्रीसप्रदेशं प्राप्नुवन्ति स्म। विपश्चितश्चेमे विदेशेषु सहृदयैः समानधर्मभिर्जिज्ञासुभिश्च मिलन्ति स्म, आध्यात्मिकान् दार्शनिकान् वा विषयानधिकृत्य स्वामेव विचारसरणिं च प्रवर्तयन्ति स्म। ईदृशस्यावरत एकस्य भारतीयदार्शनिकस्य समुल्लेखं ग्रीसीयसाहित्ये समुपलभामहे। अयं खलु खीः पूः ४००तः पूर्वमेवाथेन्स-नगरीमगच्छत्। ग्रीसीयमनीषिणा सोक्रतिसेन च साकमस्य साक्षात्कारः सञ्जातः।

दिग्विजयी वीराग्रणीरलीकसुन्दरः (Alexander) भारतवर्षात् स्वदेशं प्रत्यावर्तमानः कल्याण (Kalanos)-नामानं कञ्चन भारतीयं सुधीवर्यं स्वसमभिव्याहारेण नीतवान्।

अयं पुनः पण्डितो बाबिलन्प्रदेशपर्यन्तं गत्वा तत्राग्निप्रवेशेन शरीरं विससर्ज। महाराजः प्रियदर्श्यशोकः खीः पूः तृतीयशतके दक्षिणपूर्वयुरोपेऽन्तिकप्राच्यस्य च केषुचिद्देशेषु—सिरियायां माखिडने एपिरसे मिसरे च—श्रमणान् प्रचारकान् प्रेषितवान्। इमे प्राज्ञा भारतीयदार्शनिकविचारशैलीमधिकृत्य मौखिकमुपदेशं वितरन्ति स्मेति सम्भाव्यते।

---

# लावण्यमयी

## प्रथमः परिच्छेदः

### कुत्र गता सरला ?

अस्ति किल वङ्गेषु हरिपुराभिधानः कश्चन क्षुद्रो ग्रामः। तत्र च श्रीमान् रमेशचन्द्रो नाम गरीयान् श्रीलः प्रतिवसति। आसीच्चास्य विशालतमं हृदयहारि संख्यातिगामिना परिजनेन समुद्भासमानं सौधम्। अभूवंश्च भूयस्यो गोशालाश्च मन्दुराश्चैतस्य। आसंश्च कियत्यश्चिद्विपणयोऽप्यस्मिन्नायत्ताः। इत्थमखिलेनापि वैभवेन समुद्भासितं सदनं श्रीमतो रमेशचन्द्रमहाभागस्य केवलमपत्यशून्यतया शून्यमिव बभूव। अपरं हि भूषणं च वैभवं च गेहस्यापत्यं नामेति। न किल न प्रजाता सहधर्मिणी रमेशचन्द्रस्य। किन्तु प्रजातायामेवास्यामपत्यं व्ययुज्यत प्राणैः। द्विश्चैवं संवृत्ते समाचरितानि श्रीमता रमेशमहोदयेन सह सहधर्मिण्या व्रतानि नैकविधानि। समासेवितानि पुण्यपुण्यानि तीर्थानि। जप्तानि जप्यानि। श्रुतानि च पावनतमानि पुराणानि। गृहिण्याऽप्यस्य नासत्यकल्पैर्भिषक्प्रवरैः प्रदत्तानि भेषजान्यासेव्यन्त। एवं समाश्रितेष्वप्येतेष्वभ्युपायेषु नैकोऽपि फलोन्मुखत्वमापेदे।

अथैकस्यां निशीथिन्यां रमेशचन्द्रमहोदयः सह भार्ययाऽन्तःपुरे पयोधिफेनपाण्डुरे शयनीये कृतपदः प्रस्वापसुखमनुबभूव। समयः किलायं प्रावृषः। अवसरेऽस्मिन् पयोदपटलप्रावृततया गगनस्य सर्वतः सूचीभेद्यं तमः प्रससार। वितेनुर्भुवनभीषणं स्तनितमम्भोदाः। अन्तरान्तरा च दुर्जनसंपदमिवानुकुर्वती व्यद्योतत क्षणदृष्टनष्टालोकप्रसरा विद्युत्। सातत्येन च प्रावृतद् वृष्टिः, ववौ च सावेगं प्रचण्डतमः प्रभञ्जनः। कालेऽस्मिन्निपुणमपि पिहितेषु भवनद्वारेषु व्याकुलीचकार स्तेन इवाविदितमेवान्तःप्रविष्टः शीतलशीतलः समीरो मध्येगृहं प्रसुप्तान्मानुषाञ्छैत्यातिशयेन। अत एव च नातिस्थूलेन कुसुमसुकुमारेण नीशारेण सर्वतः प्रावृत्य गात्रं प्रसुप्त इदानीं रमेशमहाभागः। प्रस्वपंश्च कमप्यतिमात्रमनोरमं स्वप्नमद्राक्षीत्। एतावता समयेन रमेशचन्द्रमहोदयस्य गृहिण्यपत्यमेकं प्रासूत। शिशुरयमतिमात्रं मनोहराकारः समभूत्। हैयङ्गवीन-

सुकुमारं चासीद्गात्रमेतस्य। अधरे चास्य विनैव निमित्तमुन्मिषतो विललास च्छवि-निदर्शनमनोहारिणो हसितस्य। कुमारमेनं कराभ्यामादायाङ्कशय्यामारोपयन् दिव्यमिव कमपि सुखातिशयं निरविंशद्रमेशचन्द्रमहाभागः। किन्तु कुमारोऽयमसहमान इव करस्पर्शमदसीयं रोदितुं प्रावर्तिष्ट। नानाविधैश्च क्रीडनकैः प्रलोभ्यमानस्यापि रमेश-महोदयेन नांशतोऽपि व्यरंसीद्रुदितमेतस्य। आकर्णयन्नेव तु निरन्तरप्रवृत्तं रुदितमेतस्य भग्नप्रस्वापः प्राबोधि श्रीमान् रमेशमहाभागः। रुदितध्वनिः पुनर्नायं विरराम। प्रत्युत स्वप्न इव जागरितेऽपि समारुरोहैव श्रवणपथम्। प्रबुद्धस्य करतलाभ्यां चात्मनो नयनद्वयं परिमृंजतः सुदूरमपससार स्वप्न एतस्य, रुदितध्वनिस्तु यथापूर्वमेव श्रवण-सरणिमनुससार। ततश्च किं नामैतत् स्यादिति विचिन्तयन्नेव भीतभीत इवोत्थाय सहधर्मिणीमाचक्रन्द रमेशचन्द्रमहाभागः 'प्रेयसि! प्रेयसि! समुत्थीयतां तावत्' इति।

सहधर्मिणी किलास्य सरलादेवी नाम समभूत्। उपरिनिर्दिष्टया रीत्या द्विस्त्रिः संबोधयताऽपि गृहिणीं नाधिगतं प्रतिवचो रमेशमहाभागेन। अवसरेऽस्मिन् गाढं प्रसुप्ततया गृहवर्तिनामशेषाणां शून्यमिव स्तिमितमिव वाऽऽसीत् सर्वतः सौधं रमेश-महाभागस्य। गर्भागारवर्तिनश्च निर्वाणोन्मुखस्येव प्रदीपस्य प्रकाशो मन्दतरत्वमापेदे। किमधिकं समयेऽस्मिन्नैवासीद् गर्भागारे प्रदीपप्रकाशलेशोऽपि किन्तु गाढं तम एव समुपाचीयतेति चेदुच्येत नैतदतिशयोक्तिकोटिमाटीकेत। शिशुजनरुदितध्वनिश्रवणेन विस्मयस्तिमित इव रमेशो मुहुर्मुहुः सहधर्मिणीं शब्दयति स्म। न पुनरवाप्तवान् प्रतिवचनम्। मन्दत्वात् प्रदीपार्चिषो दुर्निरूपे गर्भागारे मुहुर्मुहुः करतलाभ्यां पस्पर्श शयनीयतलं सहधर्मिणीं प्रबोधयितुमीहमानो रमेशमहाभागः। किन्तु नाध्यगच्छत् सहधर्मिणीं नाम। यदा तु निपुणमपि गवेष्यमाणा भूयोभूयश्च प्रणयपेशलमाहूयमानापि नालम्भि सहधर्मिणी न चापि विरराम चिराय प्रवृत्तो रुदितरवो बालस्य तदा किल परां काष्ठा-मारूढो विस्मयस्य रमेशचन्द्रमहाभागः, समाक्रान्तं च तदात्व एव भीत्यापि हृदयमेतस्य। ततश्च सरभसमुत्थाय विकासयामास प्रभां प्रदीपस्य रमेशमहाभागः। एवं च दूरीभूते तमसि शयनीयतले दृष्टिं निक्षिपता भार्यायाः शय्यातले पराजयमानेव सौन्दर्यातिशयेन दिव्यकन्यकां प्रदीपयन्तीव शरीररोचिषा वासगृहं व्यलोकि काऽपि मासजाता कन्यकाऽनेन। विलोकमानस्य चैनां निस्तरलतारकस्य नांशतोऽपि पर्यतृप्यन्नयनयुगं रमेशमहाभागस्य। अवसरे चास्मिन् प्रस्यन्दितुमिवारभत हृदयतोऽस्य वात्सल्यम्। समुपसृत्य च साह्लादं बालिकामेनां तदात्व एवात्मनोऽङ्कमारोपयामास रमेशमहाभागः। अहो नु खलु भोः सैवेयं दारिका यां खलु स्वप्ने प्रत्यक्षीकुर्वाणस्य पस्पर्श ब्रह्मानन्दः हृदयमेतस्य। रमेश-महोदयेनाङ्कमारोपिता च दारिकेयं प्रशान्तरुदितध्वनिः कान्तिविशेषशालिना नयनयुगलेन

तमेनमश्रान्तं निरीक्षमाणा तस्थौ । समयेऽस्मिन् भूयोभूयः प्रेयसि प्रेयसीति शब्दायमानो रमेशमहाभागः 'क नु खल्वियमिदानीं गता स्यात्' इत्येवमालोचयन्नासीत् ।

यत्सत्यं निष्फलः खल्वयं प्रेयसीं प्रत्याह्वानध्वनिः श्रीमतो रमेशमहाभागस्य । तदा हि न किल मन्दिरेऽस्मिन् सन्निहिता सरला । तत् कथं नामैषा संभावयत्वेनं प्रतिवचनप्रदानेन ? अनवगततद्वृत्तान्तस्तु रमेशः सप्रमोदोन्मेषमवलोकमानः कन्यकां क्रियासमभिहारेण सरलामाह्वयति स्म । स ह्यमंस्त मन्दिर एव कुत्रापि प्रदेशे सरलया भवितव्यमिति । यदा तु भूयोभूयः समाहूयमानाऽपि न प्रत्यवदत् सरला तदा समुद्घाट्य गर्भगृहद्वारकपाटं चेटीं काञ्चिदाजुहाव श्रीमान् रमेशमहाभागः । संप्रवृत्ते चैवंविधे संरम्भे प्रलीनस्वापाः परिजनाः सरभसमुत्थाय गर्भागारमुपतस्थुः । किन्तु सरला नाम नासीन्नयनगोचर एतेषाम् ।

कन्यकायां पुनरस्यां संक्रान्तदृष्टयः सर्वेऽप्यमी सपद्येवागृह्णन्त हृदि विस्मयातिशयेन । किमेतदिति पृष्टस्तु प्रत्याह श्रीमान् रमेशमहाभागो यद् 'गाढं प्रसुप्तोऽहमवितर्कित-प्रवृत्तेन बालिकाया अस्या रुदितध्वनिना प्राबोधिषि । ततश्च यावत् कुतो न्वयमिति जिज्ञासाकुलो विकिरामि तत इतो दृष्टिं, तावदेवोपागतवती चक्षुर्गोचरतां हृदयहारिणी दारिका सेयम् । एतावत् पुनर्नावगम्यते केन नामेयमत्रोपानीतेति' इति ।

प्रेक्षमाणेषु पुनस्तनयामिमां न कश्चिदपि प्राभवत् प्रतिवक्तुमनुयोगं श्रीमतो रमेश-महोदयस्य, केन नामेयमत्र दारिकाऽऽनीतेति । सर्वेऽपि समपावृत्य द्वाराणि तत इतः सप्रयासमेव गवेषयामासुः । किन्तु न क्वापि प्रत्यक्षीचकार सरलां कोऽपि । न चापि व्यज्ञायि केनेयं बालिकाऽऽनीतेति । तदेतदालोचयतः सपदि गृहीतं साध्वसेन हृदयं श्रीमतो रमेशमहाभागस्य । प्रादुरासीच्च हृदि वेपथुरेतस्य । आरूढानेकतर्कश्च व्याकुलता-मिवोपजगाम हृदयमेतस्य । आसीच्चास्य मनसि, कुत्र वा गतवती श्रीमती सरला ? किमियमात्मानमेव घातयेत् ? न पुनरेतत् सम्भवति । एवं हि कलेवरमपि तावदस्या नयनविषयत्वमापद्येत । न पुनरासन्नम् । किं च निवासभूमिरेषा पातिव्रत्यायाः । तत् किं न्वेतत् ? केन चेयमिहोपहृता बाला ? एतच्चान्यच्च विचिन्तयता भूयिष्ठमनुसंहितं रमेशमहाभागेन । नैव पुनः किञ्चिदपि विज्ञातम् । ततः परं च मासमेकमविश्रान्तं मार्गिता श्रीमती सरला, किन्तु प्रयासोऽयमेकान्ततो निष्फलीभूतः । एवंभूते च व्यतिकरे परित्यक्तः स्वास्थ्येन श्रीमान् रमेशचन्द्रमहाभागः । सरलैकगतमानसश्च विसस्मार बालिकामेनाम् । स्थाने चैतत् । न हि प्रध्वनति जलधरस्तनितघोरध्वनौ पटहे श्रवण-सरणिमारोहत्येकतन्त्रीनिनादः इति ।

इति लावण्यमय्यां प्रथमः परिच्छेदः ।

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अध्यापकः। वत्से विप्लविके! किमिदं त्वया विलिखितम्—पातालपुर्यामभिनवं यन्त्रमुद्भुतं येन जना यथेच्छमूर्धे महाशून्ये विचरिष्यन्तीति ? अत्र वर्णाशुद्धयो बहवो वर्तन्ते।

विप्लविका। आर्य, निपुणं विचार्याप्येकामप्यशुद्धिमत्र नोपलभे।

अध्यापकः। उद्भूतमित्यत्र दीर्घ ऊकारोऽपेक्ष्यते, ऊर्ध्वे इत्यत्र वकारः, शून्ये इत्यत्र च दन्त्यो नकारः।

विप्लविका। आर्य! ज्यैष्ठमासस्य चतुर्दशदिवसे (२४ ज्यैष्ठ, १३६६) "युगान्तर"पत्रिकायाः प्रथमपृष्ठे सुबृहद्भिरक्षरैरेते शब्दा एवमेव मुद्रिताः। सुप्रसिद्धे पत्रे सुमुद्रिताः शब्दाः कथं वाशुद्धा भवेयुः।

अध्यापकः। तत्तु न जानामि, परमेषामशुद्धत्वे लेशतोऽपि संशयो नास्ति।

विप्लविका। आर्य, अद्भुतशब्दस्योकारो ह्रस्वो वा दीर्घो वा ?

अध्यापकः। ह्रस्व एव।

विप्लविका। तर्हि कथं वोद्भूतशब्दस्योकारो दीर्घः स्यात् ?

अध्यापकः। एकत्र क्तप्रत्ययः, अपरत्र डुतच्-प्रत्ययः, अत एव विभेदः।

विप्लविका। आर्य, अर्धशब्दे वकारो वर्तते वा ?

अध्यापकः। नास्त्येव।

विप्लविका। तर्हि कथं वोर्ध्वशब्दे वकारोऽनुप्रविशेत् ?

अध्यापकः। शब्दद्वयं पृथगेव, अत एव वर्णानामपि पार्थक्यम्।

विप्लविका। आर्य, पूर्णशब्दस्यानुनासिको मूर्धन्यो वा दन्त्यो वा ?

अध्यापकः। मूर्धन्य एव।

विप्लविका। तर्हि कथं शून्यशब्दे दन्त्यो नकारः पदं कुर्यात् ?

अध्यापकः। उभयत्र प्रकृतिप्रत्ययौ विभिन्नौ।

विप्लविका। आर्य, वयं तावत् साम्ये दीक्षिताः, नैवंविधान् भेदान् कथमप्यनुमन्यामहे। सर्वेषां भेदानां मूले कुठारार्पणाय गृहीतव्रता वयम्। इत ऊर्ध्वम् अर्धे वकारो नास्तीत्यूर्ध्व-शब्दोऽपि निर्वकारो लेखनीयः, अद्भुतस्योकारो ह्रस्व इति कृत्वोद्भूतशब्दस्याप्युकारो ह्रस्वो विधातव्यः, पुण्यशब्दे पूर्णशब्दे च णकारो मूर्धन्य इति कृत्वा शून्यशब्दस्य नकारे-णापि नतिः स्वीकरणीया। एवं साम्यापादनेन संस्कृतभाषाया अभ्युन्नतिः स्यात् संस्कृतं च राष्ट्रभाषा स्यात्। भवन्त इदानीं वानप्रस्थमवलम्बन्ताम्।

अध्यापकः। भवतु। शुभं ते भूयात्।

---

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

November, 1959. | १८८१-शकीयाग्रहायणस्य १४श-वर्षस्य तृतीय-संख्या | Vol. XIV No. 3

## आभाणकादीनि

Idleness travels very slowly, and Poverty soon overtakes her. HUNTER.

अलसता शनैःशनैः प्रसर्पति, दरिद्रता च नचिरादेव तामनुप्रपद्यते ।

To be proud of learning is the greatest ignorance. JEREMY TAYLOR.

विद्यामदः परा काष्ठा मौर्ख्यस्य ।

Lovely flowers are the smiles of God's goodness.

रम्याणि कुसुमानि नाम परमेश्वरस्यानुकम्पायाः स्मितानि ।

The greatest man is he who chooses right with the most invincible resolution; who resists the sorest temptation from within and without; who bears the heaviest burdens cheerfully; who is calmest in storms, and most fearless under menaces and frowns; whose reliance on truth, on virtue, and on God is most unfaltering.

स एव हि महिष्ठो मानवो यः खलु द्रढिष्ठेन सङ्कल्पेन धर्ममेव वृणोति, यः खल्वन्तरतो बाह्यतश्च प्रबलतमानि प्रलोभनानि प्रतिहन्ति, यः खलु गुरुतमानपि भारान् सानन्दं वहति, यः खलु वात्यासु शान्ततमो भ्रूभङ्गेषु विभीषिकासु च निर्भीकतम एवावतिष्ठते, सत्ये पुण्ये परमेश्वरे च यस्य निर्भरोऽप्रकम्प्यतमः ।

बुद्ध्यैवोक्रमः श्रेयान् फलनिष्पत्तये सदा

( कामन्दकीयनीतिसार १२।२६-२९ )

सहसोत्पत्य दुष्टेभ्यो दुष्करं सम्पदार्जनम् ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तदन्तिनः ॥
न किञ्चित् क्वचिदस्तीह वस्त्वसाध्यं विपश्चिताम् ।
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥
वाह्यमानमयःपिण्डं महच्चापि न कृन्तति ।
तदल्पमपि धारावद्द्रवतोप्सितसिद्धये ॥
लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ।
उपायोपगृहीतेन तत्तेनैव विशोष्यते ॥

[ वह्निनाधस्तात् प्रतप्यमानया स्थाल्या तद्गतं वारि शोष्यते । जयमङ्गला ]

---

## वाक्पारुष्यम्

वाक्पारुष्यं परं लोक उद्वेजनमनर्थकम् ।
न कुर्याद्विप्रियां वाचं प्रकुर्याज्जनमात्मसात् ॥
अकस्मादेव यः कोपात्परुषं बहु भाषते ।
तस्मादुद्विजते लोकः सस्फुलिङ्गाद्दवानलात् ॥
हृदये वागसिस्तीक्ष्णो मर्मच्छिन्निपतन्मुहुः ।
तेजस्विनं दीपयति स दीप्तो याति वैरिताम् ।
नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग्भवेत् ।
प्रायेण प्रियवाक्कर्मा कृपणोऽपि हि सेव्यते ॥

---

## सारस्वतव्याकरणतः

तस्-प्रत्यये क्वचित् षष्ठी ।

दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । क्वचित्तस्प्रत्ययव्यतिरिक्तेऽपि षष्ठी । उपरि ग्रामस्य । अधो ग्रामस्य । अवधिविवक्षायां पञ्चम्यपि । अधो गलादित्यादि ।

---

# लावण्यमयी

## द्वितीयः परिच्छेदः

### नामकरणम् ।

अतिक्रान्तप्रायो मास एकः प्रथमपरिच्छेदनिर्दिष्टस्य वृत्तान्तस्य। अथैकदा सौधपुरोवर्तिनि प्रच्छायशीतले प्रमदवने दुर्निवारचिन्तागृहीतेन चेतसा समुपविष्टे श्रीमति रमेशचन्द्रमहाभागे मूर्तिमतीमिव सौन्दर्याधिदेवतां बालिकां तामुपादाय तैस्तैर्विनोदनोपायैर्विनोदयन्ती काऽपि धात्रेयिका नातिदूर एव परिचक्राम। तस्याश्च करतलविहारिणीं कन्यकामिमामवेक्षमाणः प्रत्यभिज्ञातवान् रमेशमहाभागः सैवेयं बालिकेति। सरलाविप्रयोगसमाक्रान्ततया मनसः प्राथमिकादेव दिवसात् प्रभृति विस्मृतिपथमुपारूढा बालिकेयमिदानीमस्य स्मरणसरणिमारोहत्। तदनु चाहूय धात्रेयिकां निस्तरलतारकेण चक्षुषा दारिकायास्तस्या मुखमवेक्षाञ्चक्रे श्रीमान् रमेशमहाभागः। आदाय चैनामात्मनः करतले सवात्सल्यमस्याः शिरः समाजिघ्रत्। चुचुम्ब च बालभास्वत्सुकुमारेऽस्याः कपोलतले। अपि नाम संवदत्यस्या आकृतिः सरलायाः शरीरेणेति जिज्ञासमानश्च सुचिरमेवैनां सुनिपुणमालोकयामास। किन्तु नासीन्नयनगोचरः सरलासादृश्यमेतस्याम्। आसीच्चास्य मनसि। कुतो वा समुपस्थितेयं दारिकेति कालमेतावन्तमननुसन्दधानेन न किल मया युक्तमन्वष्ठायि। अन्याय्यो ह्येवंविधेषु विषयेष्वनाश्रित्य युक्ततरमभ्युपायं तूष्णीम्भावसमालम्बः। तदवश्यमनुसन्धातव्यं मया केयं कुतश्चेयमस्मदीयं सदनमुपप्राप्तेति। किं चैवमनुतिष्ठता कदाचिदनुकूलतया दैवस्यास्या एवोपगमवृत्तान्तानुसन्धाने सम्बन्धवशात् सरलाया अपि प्रवृत्तिर्विज्ञायेत। इत्थं च विचिन्त्य कुमारिकायास्तस्या आगमप्रवृत्तिमनुसन्धातुमारेभे रमेशमहाभागः। स किल गर्भगृहे संवृत्तं व्यतिकरमशेषमपि वृत्तान्तपत्रिकासु प्रकाशयामास। प्रतिश्रुतवांश्च तत्प्रवृत्तिनिवेदकेभ्य उपहारान्। ग्रामे ग्रामे च वृत्तमेतदाघोषयामास। प्रैरिरच्च दूतांस्तेषु तेषु देशेषु। किन्तु व्यतिगतेऽपि बहुतिथे समये नाध्यगच्छत् काञ्चिदप्यनुकूलां प्रवृत्तिं नाम। न चाप्यधिगतः कोऽपि बान्धवो दारिकाया एतस्याः। अत एव च परित्यज्यानुसन्धानव्यापारं तूष्णीं बभूव श्रीमान् रमेशमहाभागः।

यदा तु नोपस्थितो भूयसाऽपि समयेन दारिकायास्तस्याः कोऽपि बान्धवो नाम तदा किल रमेशमहोदय एवास्या अनुचिन्तयँल्लावण्यातिशयं लावण्यमयीत्येव नाम चकार। अमंस्त चैनां तनयामेव स्वीयाम्। निरवर्तयच्च समहोत्सवं नामकरणमिवान्नप्राशनविधिमप्येतस्याः। प्रत्यहं च समधिकमेव जगामोपचयं तद्गतममुष्य प्रेम। निर्मर्यादमिव च प्रववृधे वात्सल्यमस्यैतस्यां येन किल न कश्चिदपि व्यज्ञासीत् कथंचिदपि नेयं रमेशचन्द्रमहोदयस्य तनयेति। स्तनन्धयावस्थायां वर्तमाना तु तपस्विनी लावण्यमयं

बुद्ध्यैवोक्रमः श्रेयान् फलनिष्पत्तये सदा

( कामन्दकीयनीतिसार १२।२६-२९ )

सहसोत्पत्य दुष्टेभ्यो दुष्करं सम्पदार्जनम् ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तदन्तिनः ॥
न किञ्चित् क्वचिदस्तीह वस्त्वसाध्यं विपश्चिताम् ।
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥
वाह्यमानमयःपिण्डं महच्चापि न कृन्तति ।
तदल्पमपि धारावद्भवतोप्सितसिद्धये ॥
लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम् ।
उपायोपगृहीतेन तत्तेनैव विशोष्यते ॥

[ वह्निनाधस्तात् प्रतप्यमानया स्थाल्या तद्गतं वारि शोष्यते । जयमङ्गला ]

---

## वाक्पारुष्यम्

वाक्पारुष्यं परं लोक उद्वेजनमनर्थकम् ।
न कुर्याद्विप्रियां वाचं प्रकुर्याज्जनमात्मसात् ॥
अकस्मादेव यः कोपात्परुषं बहु भाषते ।
तस्मादुद्विजते लोकः सस्फुलिङ्गाद्दवानलात् ॥
हृदये वागसिस्तीक्ष्णो मर्मच्छिन्निपतन्मुहुः ।
तेजस्विनं दीपयति स दीप्तो याति वैरिताम् ।
नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग्भवेत् ।
प्रायेण प्रियवाक्कर्मा कृपणोऽपि हि सेव्यते ॥

---

## सारस्वतव्याकरणतः

तस्-प्रत्यये क्वचित् षष्ठी ।

दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । क्वचित्तस्प्रत्ययव्यतिरिक्तेऽपि षष्ठी । उपरि ग्रामस्य । अधो ग्रामस्य । अवधिविवक्षायां पञ्चम्यपि । अधो गलादित्यादि ।

---

# लावण्यमयी

## द्वितीयः परिच्छेदः

### नामकरणम् ।

अतिक्रान्तप्रायो मास एकः प्रथमपरिच्छेदनिर्दिष्टस्य वृत्तान्तस्य। अथैकदा सौधपुरोवर्तिनि प्रच्छायशीतले प्रमदवने दुर्निवारचिन्तागृहीतेन चेतसा समुपविष्टे श्रीमति रमेशचन्द्रमहाभागे मूर्तिमतीमिव सौन्दर्याधिदेवतां बालिकां तामुपादाय तैस्तैर्विनोदनोपायैर्विनोदयन्ती काऽपि धात्रेयिका नातिदूर एव परिचक्राम। तस्याश्च करतलविहारिणीं कन्यकामिमामवेक्षमाणः प्रत्यभिज्ञातवान् रमेशमहाभागः सैवेयं बालिकेति। सरलाविप्रयोगसमाक्रान्ततया मनसः प्राथमिकादेव दिवसात् प्रभृति विस्मृतिपथमुपारूढा बालिकेयमिदानीमस्य स्मरणसरणिमारोहत्। तदनु चाहूय धात्रेयिकां निस्तरलतारकेण चक्षुषा दारिकायास्तस्या मुखमवेक्षाञ्चक्रे श्रीमान् रमेशमहाभागः। आदाय चैनामात्मनः करतले सवात्सल्यमस्याः शिरः समाजिघ्रत्। चुचुम्ब च बालभावसुकुमारेऽस्याः कपोलतले। अपि नाम संवदत्यस्या आकृतिः सरलायाः शरीरेणेति जिज्ञासमानश्च सुचिरमेवैनां सुनिपुणमालोकयामास। किन्तु नासीन्नयनगोचरः सरलासादृश्यमेतस्याम्। आसीच्चास्य मनसि। कुतो वा समुपस्थितेयं दारिकेति कालमेतावन्तमननुसन्दधानेन न किल मया युक्तमनुष्ठायि। अन्याय्यो ह्येवंविधेषु विषयेष्वनाश्रित्य युक्ततरमभ्युपायं तूष्णीम्भावसमालम्बः। तदवश्यमनुसन्धातव्यं मया केयं कुतश्चेयमस्मदीयं सदनमुपप्राप्तेति। किं चैवमनुतिष्ठता कदाचिदनुकूलतया दैवस्यास्या एवोपगमवृत्तान्तानुसन्धाने सम्बन्धवशात् सरलाया अपि प्रवृत्तिर्विज्ञायेत। इत्थं च विचिन्त्य कुमारिकायास्तस्या आगमप्रवृत्तिमनुसन्धातुमारेभे रमेशमहाभागः। स किल गर्भगृहे संवृत्तं व्यतिकरमशेषमपि वृत्तान्तपत्रिकासु प्रकाशयामास। प्रतिश्रुतवांश्च तत्प्रवृत्तिनिवेदकेभ्य उपहारान्। ग्रामे ग्रामे च वृत्तमेतदाघोषयामास। प्रैरिच्च दूतांस्तेषु तेषु देशेषु। किन्तु व्यतिगतेऽपि बहुतिथे समये नाध्यगच्छत् काञ्चिदप्यनुकूलां प्रवृत्तिं नाम। न चाप्यधिगतः कोऽपि बान्धवो दारिकाया एतस्याः। अत एव च परित्यज्यानुसन्धानव्यापारं तूष्णीं बभूव श्रीमान् रमेशमहाभागः।

यदा तु नोपस्थितो भूयसाऽपि समयेन दारिकायास्तस्याः कोऽपि बान्धवो नाम तदा किल रमेशमहोदय एवास्या अनुचिन्तयंल्लावण्यातिशयं लावण्यमयीत्येव नाम चकार। अमंस्त चैनां तनयामेव स्वीयाम्। निरवर्तयच्च समहोत्सवं नामकरणमिवान्नप्राशनविधिमप्येतस्याः। प्रत्यहं च समधिकमेव जगामोपचयं तद्गतममुष्य प्रेम। निर्मर्यादमिव च प्रववृधे वात्सल्यमस्यैतस्यां येन किल न कश्चिदपि व्यज्ञासीत् कथंचिदपि नेयं रमेशचन्द्रमहोदयस्य तनयेति। स्तनन्धयावस्थायां वर्तमाना तु तपस्विनी लावण्यमयी

रमेशमहोदयमेवात्मनः पितरं धात्रीमेव च मातरमाकलयामास। किं पुनरितोऽप्य-परमवगम्यतामनया ? अनभिज्ञं हि सर्वथा शैशवं नामेति।

गच्छता च कालेन शुक्लपक्षीयेव सुधांशुकला लावण्यमयी शनैःशनैर्वृद्धिमापेदे। अवाप्ता चेयमष्टनववर्षदेशीयत्वम्। प्रवर्धमानं चास्या वपुरतिक्रम्यैव ववृधे लावण्यं येन किल दिव्येनेव ज्योतिषा समुद्भासितमिवाभवन्मन्दिरं रमेशमहाभागस्य।

इति लावण्यमय्यां द्वितीयः परिच्छेदः।

---

## तृतीयः परिच्छेदः

## सौहार्दप्ररोपणम्।

अथैकदा गगनतलचरमार्धवर्तिनि भगवति दिवसाधिनायक एकाकिन्येव श्रीमती लावण्यमयी स्वीयमन्दिरपक्षद्वारसन्निहिते निष्कुटप्रदेशे कुसुमान्यवचिनु कुसुमपतङ्गमाननु-धाव कोमलकोमलानि वीरुधां शाखाग्राण्यवनमयेत्येवं[1] शिशुभावसहजं क्रीडितुमारेभे। तथाविधां चैनां नातिदूरवर्तिनी काचन तापसी षोडशवर्षदेशीयश्चापरः कोऽपि कुमार इति मानुषद्वितयमेतदवेक्षमाणमवतस्थे। अथ दारिकामेनां साङ्गुलिनिर्देशं प्रदर्श्य समादिदेश कुमारं तापसी 'वत्स सुधाकर! संभाव्यतां कुमारिकेयं सहक्रीडनेन' इति।

अनतिक्रान्तबालभावस्तु कुमारः सुधाकरो नेदमनाहूतोपस्थानं न्याय्यं विशेषतश्चासंस्तुत-पूर्वायाः कुलकन्याया इत्याकलयन्न किञ्चिदप्यनुष्ठातुं प्रबभूव। किन्तु भूयोभूयः प्रवर्त्तयामासैनं तापसीत्यनन्यगतेः कथं कथमप्युपसर्पणोन्मुखत्वमापेदे हृदयमेतस्य। कुमारिकाप्यसौ क्रीडावशात्तत इतः परिभ्रमन्ती दैववशादितोमुख्येव प्रातिष्ठत। कियन्तिचित् पुनः पदान्यतिक्रान्तवत्या एतस्या अवितर्कितमेव समासजदंशुकाञ्चलः कस्याश्चित् कण्टकिनस्तरोः शाखायाम्। ततश्च स्खलितगतिः प्रत्यावृत्य यथा यथेयमञ्चल-मुन्मोचयितुं प्रायतत तथा तथा सोऽयं समधिकमेव समासजच्छाखायाम्। एवमनेकशः समास्थितस्यापि वसनाञ्चलोन्मोचनप्रयासस्य वैफल्यमवलोकमानाया दारिकायाः प्रावर्त्तन्त बालानामन्तिमाभ्युपायभूतान्यनुबद्धधाराणि सुकुमारतमं कपोलतलं निष्प्रभयन्त्यश्रूणि। ततश्च साहाय्यायेव स्पृहयन्ती यावद्विकिरतीतस्ततः सन्त्रस्तकुरङ्गमविलोचनविडम्बिनीं दीनदीनां दृष्टिं तावदेवायमेवोपसर्पणावसर इत्याकलयन्नुपससर्पैनां सुधाकरमहाभागः। तापसी पुनरनयो रोहिणीशशाङ्कयोरिव कुमारिकाकुमारयोस्तथाविधेन समागमेन कमपि कमप्यानन्दमनुविन्दन्ती महीरुहान्तरिता व्यापारमनयोरालोकयन्त्यासीत्।

---

[1] अवचिनु...अनुधाव...अवनमय—क्रियासमभिहार एषु लोट्।

लावण्यमयीमुपगतस्तु सुधाकरः सलीलमादाय करमेतस्याः सस्मितमभाषिष्ट ।

सुधाकरः । अये किमेतत् संवृत्तम् ?

लावण्य० । महाभाग ! क्रीडावशात्तत इतः परिभ्रमन्त्याः किल मे समासक्तोऽयमुत्तरीयाञ्चलोऽस्यां कण्टकिनस्तरोः शाखायाम् । तदपि नाम मोचयेदेनं महाभागः ?

सुधाकरः । धिग् भीरु ! किमेतावतैवाश्रूणि मुच्यन्ते । एष इदानीं मोचयामि ते वसनाञ्चलम् । त्वं पुनर्यथावस्थितमेव स्थिरपदमवतिष्ठस्व । मा किल समधिकमेव समासाङ्क्षीदेषः ।

लावण्य । यथाज्ञापयति महाभागः । न किल पदात् पदमपीतः प्रचलिष्यामि ।

एतदाकर्ण्य सुधाकरः शनैःशनैर्वसनाञ्चलमस्या उन्मोचयितुमारेभे ।

लावण्य । महाभाग ! तथा किलावधीयतां यथा नासौ विदीर्येत । विदीर्णे ह्यस्मिंस्ताडयिष्यति मां धात्री देवी ।

सुधाकरः । भीरु ! कासौ धात्री नाम ?

लावण्य । अपि नाम नेयं ते विदिता ? सा किल मे धात्रीदेवी ययाऽस्या जन्मनः परिपोषिता च संवर्धिता च ।

सुधाकरः । अये ! तत् किमु नास्ति ते जननी ?

लावण्य । सेयमेव मदीया जननी । अपि नाम नास्ति ते धात्रीदेवी ?

सुधाकरस्तु प्रश्नमेनमेतस्याः प्रत्युत्तरयितुमप्रभविष्णुः प्रत्याह 'भद्रे ! एवमिदम् । नास्ति खलु मे धात्रीदेवी' इति ।

लावण्य । ( मनागिव पाटितमुत्तरीयाञ्चलमालोक्य ) धिग् भद्रमुख ! पाटितो मे वसनाञ्चलः । अनिपुणः खल्वसि ।

सुधाकरः । ( सलज्जमिव ) भद्रे ! कच्चित्ताडयति त्वां ते धात्रीदेवी ?

लावण्य । नातिमात्रम् । अनुष्ठिते तु चापलातिशये स्तोकमिव ताडयति । अन्यदा पुनरात्मनः प्राणेभ्योऽपि मां लालयति ।

अथावलोक्य साकल्येनोन्मोचितमंशुकाञ्चलं पुनरप्यसौ सुधाकरमभाषिष्ट ।

लावण्य । अपि समुपागच्छेत् सह मया मन्दिरं नो महाभागः ?

सुधाकरः । भद्रे ! अनाहूतोपस्थिताय नूनं कोपिष्यन्ति मह्यं ते सदनवासिनः । तत् स्वीयमेवेदानीं भवनं गन्तुकाम आपृच्छे श्रीमतीम् ।

लावण्य । कुत्र ते भवनम् ?

सुधाकरः । इतो नातिदूरवर्त्तिनि कुसुमोद्याने ।

लावण्य । कच्चिदस्माकमिवातिमात्रमेव रमणीयं सदनं भवदीयमपि ?

सुधाकरः। भद्रे ! निष्किञ्चनाः खलु वयम्। कुतो नाम रमणीयं सदनमस्माकम् ?

लावण्य। तत् किमिति नास्मदीयमेव मन्दिरमधिष्ठीयते महाभागेन ?

सुधाकरः। अपि नाम समनुमन्येरन्नस्मदीयां वसतिं भवत्सदनवर्त्तिनः पुरुषाः।

लावण्य। किमिति वा नानुमन्येरन् ? एहि तावदहमेव पितृपादान्विज्ञापयिष्यामि।

इत्यभिधाय च जग्राह पल्लवमृदुना करेणास्य करं लावण्यमयी। सुधाकरस्तु विस्मारयितुमेनां प्रत्याह। 'एहि भद्रे ! कुसुमानि तेऽवचित्य दास्यामि।' इति।

लावण्य। ( सानन्दम् ) अलं तावत् कुसुमैः, कुसुमपतङ्गमं तु मह्यमेकं वितर।

समयेऽस्मिन् परिभ्रमन्ति स्म कुसुमात् कुसुमं नैकविधवर्णसमुल्लसिताः प्रसूनपतङ्गमाः। हृदयहारि खल्वेषां रामणीयकमासीत्। कुसुमान्यपि न किल न मनोज्ञानि। किन्तु कुसुमेष्वनुपलभ्यमानं चैतन्यमेव तान् सविशेषं विभूषयामास। किं च प्रतिपदं किल सुलभानि कुसुमानि। कुसुमपतङ्गमाः पुनः सुतरामेव दुष्प्रापाः, विशेषतश्च लावण्यमयीसदृशीभिः कुमारिकाभिः। अत एव च स्पृहयति स्म तेभ्यो लावण्यमयी। निसर्ग एव ह्यसौ प्राणिनां यदेते सुदूरमपहाय सुप्रापं वस्तु दुष्प्रापेष्वेव प्रायेण बध्नन्त्यनुरागमिति।

अथ समादातुकामः समन्वधावत् कुसुमपतङ्गमान् सुधाकरः किन्तु नैकोऽपि पतङ्गमः समाससाद करतलमेतस्य। आशा हि नाम प्रायेण नाविलम्बितमेवाभीष्टं फलति। तद्यथा यथानुधावति स्म सुधाकरस्तथा तथा प्रसूनपतङ्गमा अप्यपहायाधिष्ठितपूर्वां लतिकां लतान्तरमनुव्रजन्ति स्म। समयेऽस्मिल्लाँवण्यमय्यपि सुधाकरमनुव्रजन्त्यासीत्। सप्रयासमनुधावन्नपि पुनः सुधाकरो नैकमपि पतङ्गमं ग्रहीतुं प्रबभूव। एवं च निष्फलीभवन्तमालोक्य प्रयत्नमेतस्य विजहास लावण्यमयी। ततश्च व्रीडित इव सुधाकरः पुनरपि द्विगुणितोत्साहः पतङ्गमाननुदधाव, नैव पुनः प्रबभूव ग्रहीतुं पतङ्गमेकमपि। इत्थं च पुनः पुनः प्रयतमानस्य व्यत्यगाद्धोरामात्रः समय एतस्य।

लावण्यमयी त्वेनमनुधावन्ती सप्रमोदं प्राह—विलोक्यतां तावन्मयैव ननु गृहीतोऽयं पतङ्गमो न तु महाभागेनेति। अथास्याः कौतुकरसग्रथितेनेव वचसा समुपजातव्रीडस्येव परावर्त्य वदनमवेक्षमाणस्यासीन्नयनगोचरः सुधाकरस्य नवकिसलयसहोदराभ्यामिवाङ्गुलिभ्यां तया गृहीतः प्रत्यग्रकुसुमसच्छविः प्रसूनपतङ्गः। अवेक्ष्य चैतत् प्रत्याह सविस्मयमेनाम्।

सुधाकरः। अये ! कथं नाम गृहीतोऽयं श्रीमत्या ?

लावण्य। किमुच्यते कथमिति ? एष किल स्वयमेव समध्यतिष्ठन्मे गात्रम्। ( सानन्दोत्साहम् ) भद्रमुख ! अवश्यमचिरादेव भविष्यत्यथो ममोद्वाहः।

सुधाकरः। कथमिवैतत् प्रतीतं श्रीमत्या? कच्चिद्गात्रलतामधिष्ठिते कुसुमपतङ्गमे परिणयो भवति?

लावण्य। अथ किम्। एवं किल ब्रवीति मे धात्री देवी। मन्ये नैतद्भवतो विदितमिति।

इत्थमालपन्त्येव लावण्यमयी यावद् गृहीतप्रसूनपतङ्ग व पलायितुमारभते तावदेव करे गृहीत्वैनां प्राह स्म सुधाकरमहाभागः।

सुधाकरः। भद्रे! नाद्यापि निवेदितं श्रीमत्याऽस्मीयं नाम।

लावण्य। अपि नाम नैतद्विदितं महाभागस्य? नामग्राहमेव ननु मामाह्वयन्ति जना निखिलाः।

सुधाकरः। स्यादेतत्। मया पुनर्न कस्यापि वदनतः समाकर्णितं ते नाम।

लावण्य। कथमेतत्?

सुधाकरः। ह्य एव नन्वत्रानुप्राप्ताः स्मः।

लावण्यमयी। तदाकर्णयतु महाभागः। मम किल नाम 'लावण्यमयी' इति। श्रीमतः पुनः?

सुधाकरः। भद्रे! मम तु 'सुधाकर' इति।

लावण्य। किमात्थ सुधाकर इति। अहो मधुरिमा नामाक्षराणाम्!

सुधाकरः। कच्चित् स्यात् पुनस्ते समागमः?

लावण्य। अहमपि नन्वेतदेव प्रष्टुमभिलष्यन्त्यासम्। श्रीमता किल प्रत्यहमस्यामेव वेलायामत्रोपस्थातव्यम्। अहं किल कुसुममालिकां संग्रथ्य कण्ठे तु आमोचयिष्यामि।

सुधाकरः। भवतु।

लावण्य। तन्मुच्यतां तावन्मे पाणिर्यावदापृच्छ्य धात्रीदेवीं प्रत्यागमिष्यामि।

इत्येवमभिधाय च स्वभावसरलान्तरङ्गा समुदञ्चितस्मिता बालिका लावण्यमयी मन्दं मन्दं ततो निश्चक्राम। प्रत्याजगाम चानतिक्रान्तबालभावः सुधाकरः सकाशं तापस्याः। प्रत्यागतं चैनं सकौतुकं च सप्रसादं च सपरितोषं च सवात्सल्यं च परिष्वज्य मूर्ध्नि चोपाघ्राय तापसी सह तेन नातिदूरवर्तिनीं वृक्षवाटिकां प्रविवेश।

इति लावण्यमय्यां तृतीयः परिच्छेदः।

# रामानुजीयसत्ख्यातिखण्डनम्

[ श्रीसीतानाथ गोस्वामी ]

रामानुजीयैः सत्ख्यातिरुररीक्रियत इति विदितमेतत् सर्वेषां विदुषाम्। शुक्तौ रजतभ्रमस्तै रामानुजीयैरेवमुपपाद्यते—शुक्तौ पञ्चीकरणप्रक्रियया रजतांशोऽपि वर्तत एव। पञ्चीकरणप्रक्रिया च सर्ववेदान्ताचार्यैरङ्गीक्रियते। यथा पृथिव्या अर्धमपरेषाञ्च चतुर्णां भूतानामेकैकस्याष्टमांशं परिगृह्य स्थूला पृथिवी निष्पद्यत इति सम्प्रदायविदां राद्धान्तस्तथैव शुक्तावपि शुक्त्यंशो यथा स्यात् तथा शुक्तीतररजतांशोऽपि भवेदेवेति रामानुजीयानामाशयः। इदं रजतमिति शुक्तौ रजतभ्रमे दोषवशात् शुक्तिगतारजतांशाग्रहणात् शुक्तिस्थितरजतांशमात्रग्रहणे सति रजतार्थिनः प्रवृत्तिर्भवति। शुक्तौ रजतार्थिनः प्रवृत्तिर्विसंवादिन्येव। तथा च प्रदर्शितां सत्ख्यातिमुपादाय विसंवादिप्रवृत्तिसमर्थनं रामानुजाचार्येण कृतम्। शुक्तौ विद्यमानस्य रजतांशमात्रस्य ग्रहणादस्याः ख्यातेः सत्ख्यातिरित्याख्या समभवत्।

यद्यपि ख्यातिरियं सत्ख्यातिरिति बहुलं प्रचलिता तथापि सूक्ष्मतो विचार्यमाणे अस्या अख्यातित्वमेवोपपन्नं भविष्यति। यथा प्राभाकरसम्मतेऽख्यातिवादे स्मृतिप्रत्यक्षयोर्ज्ञानयोर्विवेको न गृहीत इत्यग्रहणस्यैव विसंवादिप्रवृत्तिजनकत्वं भवति, ख्यातिश्चासौ विवेकख्यातिरित्यभिधया संक्षेपतोऽख्यातिरिति नाम्ना परिगृहीता, तथैव रामानुजमतेऽपि अरजतांशाग्रहणाद् अग्रहणमेव विसंवादिप्रवृत्तिजनकमित्यख्यातिरेव स्यात्। अख्यातेरेव सत्ख्यातिरिति संज्ञान्तरकरणं न किञ्चिन्महत् कौशलम्।

पञ्चीकरणप्रक्रियया शुक्तौ रजतांशसमर्थनं सर्वथा ह्युन्मत्तप्रलपितमेव। श्रुतौ त्रिवृत्करणमुपलभ्यते। त्रिवृत्करणं खलु पञ्चीकरणस्याप्युपलक्षणमिति कृत्वा पञ्चीकरणस्यापि श्रुतिसिद्धत्वम्। पञ्चीकरणं महाभूतानामेव, न तु भौतिकानां घटपटादीनामपि। घटपटादीनामपि भौतिकानामेकस्मिन्नन्येषामंशस्वीकारे पञ्चीकरणं न स्यात् किन्तु अनन्तीकरणमेव प्रसज्येत, यतोऽनन्ताः खलु भौतिकाः पदार्थाः। अनन्तानां भौतिकानां परस्परसमावेशकल्पने कथं पञ्चीकरणम्? पञ्चानामेव महाभूतानां परस्परसम्मेलने पञ्चीकरणं स्यात्। किञ्च, अनन्तानामपि भौतिकानां सम्मेलनकल्पनमुन्मत्तकल्पनमेव। एतच्च श्रुतिविरुद्धं युक्तिविरुद्धमनुभूतिविरुद्धञ्च।

किञ्च, अवयवावयविवृत्तिजातिप्रकारकभ्रमे स्यादप्यस्याः सत्ख्यातेः कथञ्चिदुपपत्तिः, परमवयविमात्रवृत्तिजातिप्रकारकभ्रम एतन्मतस्य सर्वथाऽनुपपत्तिरेव। रजतत्वं यथावयविवृत्ति तथावयववृत्त्यपि। एवञ्च शुक्तौ रजतभ्रमे भ्रमस्य रजतत्वप्रकारकत्वे शुक्तौ पञ्चीकरणेन ( अथवानन्तीकरणेन ) रजतावयवसत्त्वात् तत्रापि रजतत्वस्य सत्ता

अङ्गीकर्त्तुं पार्यते, तेन च शुक्तौ रजतभ्रमोऽपि कथञ्चिद् व्याख्येयः। किन्तु यदा वल्मीकस्तूपे घटभ्रान्तिस्तदा वल्मीकस्तूपे पञ्चीकरणेन ( अथवानन्तीकरणेन ) घटावयव-सत्त्वस्वीकारेऽपि घटत्वसामान्यस्यावयविमात्रवृत्तित्वाद् ,घटावयवे घटत्वस्यासत्त्वात् पञ्चीकरणप्रक्रियावलम्बनेऽपि न निस्तारः, सर्वथा घटप्रतीतेर्दुर्घटत्वम् ।

किञ्च, रामानुजीयसत्ख्यातौ बाधोऽप्यनुपपन्नः। नेदं रजतं, नात्र रजतमित्येव हि बाधस्याकारः। शुक्तौ रजतावयवसत्त्वात्, अत एव च रजतसत्त्वात्, नात्र रजतमित्युक्तिर्विरोधमावहति ।

अतो भ्रान्तिबाधयोरुभयोरप्यनुपपन्नत्वात् सर्वथातितुच्छमिदं रामानुजीयसत्ख्याति-समर्थनम् ।

अत्रेदं वक्तव्यं यद्रामानुजीयसम्प्रदायेऽपि केचन वेङ्कटनाथादयः सत्ख्यातावपरितुष्टा अन्यथाख्यातिं परिजगृहुः।

---

## सुसमीचीनम्

Sunday Amrita Bazar Patrika (September 20, 1959 पृः २ स्त० १ ) पत्रिकायां Like Ice Heart Melts Too समाख्यायां कथायां दृष्टम्—"Please hide there", she whispered to her *financee* pointing out the place इति। मुद्रणालयपिशाचेन fiancé शब्दं financee विदधता सुयुक्तमेवानुष्ठितम्। यद्यपि financee शब्दोऽभिधानकोशेषु न दृश्यते तथापि one who finances इत्यर्थकोऽयं शब्दः ! यस्मै पाणिः प्रतिश्रूयते तेनावश्यमेव सर्वो व्ययो निर्वोढव्यः, सत्येव च प्रयोजनेऽर्थः प्रदातव्य इति कस्य वा न विदितम् ?

बहोः कालात्पूर्वं कलिकाता-विश्वविद्यालये बी०ए० परीक्षायां प्रश्न आसीत्—Account for the samāhāra in वधूवरम् इति। एकेनच्छात्रेण लिखितम्—येषां च विरोधः शाश्वतिक इति समाहार इति !!!

---

## सन्-प्रत्ययस्यार्थः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"शारदीय उल्टोरथ" पत्रे ( १८८१, पृः ३९७ ) दृष्टम्—

एकदा रवीन्द्रनाथेनादिष्टम् शान्तिनिकेतनगतैश्छात्रवृन्दैः पाणिनिव्याकरणं पठितव्य-मिति। आश्रमस्थानां सर्वेषामध्यापकानामपि पाणिनिव्याकरणमवश्यपाठ्यतया निर्दिष्टम् ।

# रामानुजीयसत्ख्यातिखण्डनम्

[ श्रीसीतानाथ गोस्वामी ]

रामानुजीयैः सत्ख्यातिरुररीक्रियत इति विदितमेतत् सर्वेषां विदुषाम्। शुक्तौ रजतभ्रमस्तै रामानुजीयैरेवमुपपाद्यते—शुक्तौ पञ्चीकरणप्रक्रियया रजतांशोऽपि वर्तत एव। पञ्चीकरणप्रक्रिया च सर्वैर्वेदान्ताचार्यैरङ्गीक्रियते। यथा पृथिव्या अर्धमपरेषाञ्च चतुर्णां भूतानामेकैकस्याष्टमांशं परिगृह्य स्थूला पृथिवी निष्पद्यत इति सम्प्रदायविदां राद्धान्तस्तथैव शुक्तावपि शुक्त्यंशो यथा स्यात् तथा शुक्तीतररजतांशोऽपि भवेदेवेति रामानुजीयानामाशयः। इदं रजतमिति शुक्तौ रजतभ्रमे दोषवशात् शुक्तिगतारजतांशाग्रहणात् शुक्तिस्थितरजतांशमात्रग्रहणे सति रजतार्थिनः प्रवृत्तिर्भवति। शुक्तौ रजतार्थिनः प्रवृत्तिर्विसंवादिन्येव। तथा च प्रदर्शितां सत्ख्यातिमुपादाय विसंवादिप्रवृत्तिसमर्थनं रामानुजाचार्येण कृतम्। शुक्तौ विद्यमानस्य रजतांशमात्रस्य ग्रहणादस्याः ख्यातेः सत्ख्यातिरित्याख्या समभवत्।

यद्यपि ख्यातिरियं सत्ख्यातिरिति बहुलं प्रचलिता तथापि सूक्ष्मतो विचार्यमाणे अस्या अख्यातित्वमेवोपपन्नं भविष्यति। यथा प्राभाकरसम्मतेऽख्यातिवादे स्मृतिप्रत्यक्षयोर्ज्ञानयोर्विवेको न गृहीत इत्यग्रहणस्यैव विसंवादिप्रवृत्तिजनकत्वं भवति, ख्यातिश्चासौ विवेकाख्यातिरित्यभिधया संक्षेपतोऽख्यातिरिति नाम्ना परिगृहीता, तथैव रामानुजमतेऽपि अरजतांशाग्रहणाद् अग्रहणमेव विसंवादिप्रवृत्तिजनकमित्यख्यातिरेव स्यात्। अख्यातेरेव सत्ख्यातिरिति संज्ञान्तरकरणं न किञ्चिन्महत् कौशलम्।

पञ्चीकरणप्रक्रियया शुक्तौ रजतांशसमर्थनं सर्वथा ह्युन्मत्तप्रलपितमेव। श्रुतौ त्रिवृत्करणमुपलभ्यते। त्रिवृत्करणं खलु पञ्चीकरणस्याप्युपलक्षणमिति कृत्वा पञ्चीकरणस्यापि श्रुतिसिद्धत्वम्। पञ्चीकरणं महाभूतानामेव, न तु भौतिकानां घटपटादीनामपि। घटपटादीनामपि भौतिकानामेकस्मिन्नन्येषामंशस्वीकारे पञ्चीकरणं न स्यात् किन्तु अनन्तीकरणमेव प्रसज्येत, यतोऽनन्ताः खलु भौतिकाः पदार्थाः। अनन्तानां भौतिकानां परस्परसमावेशकल्पने कथं पञ्चीकरणम्? पञ्चानामेव महाभूतानां परस्परसम्मेलने पञ्चीकरणं स्यात्। किञ्च, अनन्तानामपि भौतिकानां सम्मेलनकल्पनमुन्मत्तकल्पनमेव। एतच्च श्रुतिविरुद्धं युक्तिविरुद्धमनुभूतिविरुद्धञ्च।

किञ्च, अवयवावयविवृत्तिजातिप्रकारकभ्रमे स्यादप्यस्याः सत्ख्यातेः कथञ्चिदुपपत्तिः, परमवयविमात्रवृत्तिजातिप्रकारकभ्रम एतन्मतस्य सर्वथाऽनुपपत्तिरेव। रजतत्वं यथावयविवृत्ति तथावयववृत्त्यपि। एवञ्च शुक्तौ रजतभ्रमे भ्रमस्य रजतत्वप्रकारकत्वे शुक्तौ पञ्चीकरणेन (अथवानन्तीकरणेन) रजतावयवसत्त्वात् तत्रापि रजतत्वस्य सत्ता

अङ्गीकर्तुं पार्यते, तेन च शुक्तौ रजतभ्रमोऽपि कथञ्चिद् व्याख्येयः। किन्तु यदा वल्मीकस्तूपे घटभ्रान्तिस्तदा वल्मीकस्तूपे पञ्चीकरणेन (अथवानन्तीकरणेन) घटावयव-सत्त्वस्वीकारेऽपि घटत्वसामान्यस्यावयविमात्रवृत्तित्वाद्, घटावयवे घटत्वस्यासत्त्वात् पञ्चीकरणप्रक्रियावलम्बनेऽपि न निस्तारः, सर्वथा घटप्रतीतेदुर्घटत्वम्।

किञ्च, रामानुजीयसत्ख्यातौ बाधोऽप्यनुपपन्नः। नेदं रजतं, नात्र रजतमित्येव हि बाधस्याकारः। शुक्तौ रजतावयवसत्त्वात्, अत एव च रजतसत्त्वात्, नात्र रजतमित्युक्तिर्विरोधमावहति।

अतो भ्रान्तिबाधयोरुभयोरप्यनुपपन्नत्वात् सर्वथातितुच्छमिदं रामानुजीयसत्ख्याति-समर्थनम्।

अत्रेदं वक्तव्यं यद्रामानुजीयसम्प्रदायेऽपि केचन वेङ्कटनाथादयः सत्ख्यातावपरितुष्टा अन्यथाख्यातिं परिजगृहुः।

---

# सुसमीचीनम्

Sunday Amrita Bazar Patrika (September 20, 1959 पृः २ स्त० १) पत्रिकायां Like Ice Heart Melts Too समाख्यायां कथायां दृष्टम्—"Please hide there", she whispered to her *financee* pointing out the place इति। मुद्रणालयपिशाचेन fiancé शब्दं financee विदधता सुयुक्तमेवानुष्ठितम्। यद्यपि financee शब्दोऽभिधानकोशेषु न दृश्यते तथापि one who finances इत्यर्थकोऽयं शब्दः! यस्मै पाणिः प्रतिश्रूयते तेनावश्यमेव सर्वो व्ययो निर्वोढव्यः, सत्येव च प्रयोजनेऽर्थः प्रदातव्य इति कस्य वा न विदितम्?

बहोः कालात्पूर्वं कलिकाता-विश्वविद्यालये बी०ए० परीक्षायां प्रश्न आसीत्—Account for the samāhāra in वधूवरम् इति। एकेनच्छात्रेण लिखितम्—येषां च विरोधः शाश्वतिक इति समाहार इति !!!

---

# सन्-प्रत्ययस्यार्थः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"शारदीय उल्टोरथ" पत्रे (१८८१, पृः ३९७) दृष्टम्—

एकदा रवीन्द्रनाथेनादिष्टम् शान्तिनिकेतनगतैश्छात्रवृन्दैः पाणिनिव्याकरणं पठितव्य-मिति। आश्रमस्थानां सर्वेषामध्यापकानामपि पाणिनिव्याकरणमवश्यपाठ्यतया निर्दिष्टम्।

प्रमथनाथस्तदानीं छात्ररूपेण शास्त्रिमहोदयस्य पादमूले पाणिनिव्याकरणमधीते स्म।

मध्याह्ने रवीन्द्रनाथश्छात्रानाङ्गलसाहित्यमध्यापयति स्म। एकस्मिन् दिने तेन dying-शब्दस्य प्रतिशब्दतया मुमूर्षुरित्युक्तम्, परं छात्रेण प्रमथनाथेन तत्र विप्रतिपन्नम्।

रवीन्द्रनाथः। तर्हि किं वा स्यात्?

प्रमथनाथः। म्रियमाणः। [ मूलप्रबन्धे म्रियमान इति वर्तते, तन्मुद्रणालय-पिशाचस्य प्रसादत इति प्रतीयते। ]

रवीन्द्रनाथः। ( विस्मयविमूढः ) केन वैतच्छिक्षितं रे?

प्रमथनाथः। स्वयं भगवता पाणिनिना।

एतच्छ्रुत्वा रवीन्द्रनाथः प्रतिपत्तिमूढः सञ्जातः।

प्रमथनाथेन व्याख्यानव्यपदेशेनोक्तम्—इच्छार्थे सन्-प्रत्ययो भवति। जनस्य तु मरण इच्छा नासीत्। अत एव मुमूर्षुर्न स्यात्, म्रियमाण इत्येव स्यात्। [ अत्रापि मूले म्रियमान इति वर्तते। ]

रवीन्द्रनाथः कियन्तं चित् कालं तूष्णीमवस्थायावदत्, अहो अत्याहितम्! वङ्गभाषापि त्वया विस्मृता संस्कृतमपि नाधिगतमिति स्पष्टम्। इति।

बालस्य प्रमथनाथस्य वचनं काशिकाकौमुद्याद्यनालोचनमूलकम्। काशिकायां जयादित्येनोक्तम्—आशङ्कायामुपसंख्यानम्। शङ्के पतिष्यति कूलम्। पिपतिषति कूलम्। श्वा मुमूर्षति। इति। सिद्धान्तकौमुद्यां भट्टोजिभट्टेनोक्तम्, आशङ्कायां सन् वक्तव्यः। श्वा मुमूर्षति। कूलं पिपतिषति। इति।

सर्वस्यैतस्य मूलं महाभाष्यम्। तत्र वर्तते।

वार्त्तिकम्। आशङ्कायामचेतनेषूपसंख्यानम्।

भाष्यम्। आशङ्कायामचेतनेषूपसंख्यानं कर्तव्यम्। अश्मा लुलुठिषते। कूलं पिपतिषति।

कि पुनः कारणं न सिध्यति?

एवं मन्यते चेतनावत एतद् भवतीच्छेति। कूलं चाचेतनम्।

अचेतनग्रहणेन नार्थः, आशङ्कायामित्येव। इदमपि सिद्धं भवति—श्वा मुमूर्षतीति।

[ शुनश्चैतन्येऽति जीवितस्य प्रियत्वाद् व्याध्याद्यभिभवेऽपि तिर्यक्त्वान्मर्तुमिच्छा नास्ति। प्रदीपः ]

वा०। न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः।

भाष्यम्। न वा वक्तव्यम्।

किं कारणम्?

तुल्यकारणत्वात्। तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने।

किं कारणम्?

इच्छाया हि प्रवृत्तित उपलब्धिर्भवति। योऽप्यस्यौ कटं चिकीर्षुर्भवति नासावाघोषयति कटं करिष्यामीति।

किं तर्हि?

सन्नद्धं रज्जुकीलपूलपाणिं दृष्ट्वा तत इच्छा गम्यते॥ कूलस्यापि पिपतिषतो लोष्टाः शीर्यन्ते, भिदोपजायते, देशान्तरमुपसंक्रामति॥ श्वानः खल्वपि मुमूर्षव एकान्तशीलाः शूनाक्षाश्च भवन्ति॥ इति।

---

## वयस्विनी

"शारदीय उल्टोरथ" (१८८१) पत्रे (पृः १९० अग्निसाक्षीत्याख्याने) दृष्टम्—"वयस्विनी एक महिला" इति।

मनस्विनी सीमन्तिनी निर्वर्णिता, पयस्विनी सौरभेय्यपि प्रत्यक्षीकृता, स्रोतस्विनी सागरगामिन्यपि समवलोकिता, परं वयस्विनी महिला कदापि न गता नः श्रवणगोचरम्। अस्मायामेधास्रजो विनिरिति विनिप्रत्ययेन साधितोऽयं शब्दः।

१९९ पृष्ठे दृष्टम्—"रमेन वसे रइल विमूढ एकटा स्थानु पिण्डेर मत" इति। स्थाणुगतो णकारो मूर्धन्यः। विमूढं स्थाणुपिण्डमिवेत्यत्र विमूढमिति विशेषणं न लगति, सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदित्युक्तेः। स्थाणुशब्देनैव गतार्थत्वात् पिण्डशब्दोऽत्रातिरिक्तः।

---

## अनुत्तमं शास्त्रज्ञानम्

युगान्तरपत्रे प्रकाशिताच् श्रीमत्याः शेफालिकायाः पत्रादवगम्यते "निषिद्धदेश ओ निषिद्धकथा" पुस्तके दृश्यते "कवि यरत्क्रतु ओ नागी यरत्क्रतुर सम्पर्क" इति, "महाभारतेर उद्योगपर्वे गलभेर ये उपाख्यान" इति च। यकारजकारयोः कारुक्रत्वोर्गलभगालवयोश्च भेदोऽवश्यमेव दूरीकरणीयः। सुक्रतु-सक्रतु-शतक्रतु-कविक्रतु-विभुक्रतु-प्रभृतिषु शब्देषु क्रतुशब्दो देदीप्यते, अत एव जरद्यकृतोः सङ्करेण निष्पन्ने यरत्छब्देऽपि क्रतुशब्देन स्थातव्यम्। गलभशब्दः पाश्चात्त्येषु श्रद्धाजाड्यं सूचयति। तर्हि Galava इति लिख्यते। अतोऽस्माभिरपि तत्पदाङ्कानुसारिभिस्तदवबोद्धुमक्षमैर्गलभ इत्येव लेखनी! गग

---

प्रमथनाथस्तदानीं छात्ररूपेण शास्त्रिमहोदयस्य पादमूले पाणिनिव्याकरणमधीते स्म।

मध्याह्ने रवीन्द्रनाथश्छात्रानाङ्गलसाहित्यमध्यापयति स्म। एकस्मिन् दिने तेन dying-शब्दस्य प्रतिशब्दतया मुमूर्षुरित्युक्तम्, परं छात्रेण प्रमथनाथेन तत्र विप्रतिपन्नम्।

रवीन्द्रनाथः। तर्हि किं वा स्यात्?

प्रमथनाथः। म्रियमाणः। [ मूलप्रबन्धे म्रियमान इति वर्तते, तन्मुद्रणालय-पिशाचस्य प्रसादत इति प्रतीयते। ]

रवीन्द्रनाथः। ( विस्मयविमूढः ) केन वैतच्छिक्षितं रे?

प्रमथनाथः। स्वयं भगवता पाणिनिना।

एतच्छ्रुत्वा रवीन्द्रनाथः प्रतिपत्तिमूढः सञ्जातः।

प्रमथनाथेन व्याख्यानव्यपदेशेनोक्तम्—इच्छार्थे सन्-प्रत्ययो भवति। जनस्य तु मरण इच्छा नासीत्। अत एव मुमूर्षुर्न स्यात्, म्रियमाण इत्येव स्यात्। [ अत्रापि मूले म्रियमान इति वर्तते। ]

रवीन्द्रनाथः कियन्तं चित् कालं तूष्णीमवस्थायावदत्, अहो अत्याहितम्! वङ्गभाषापि त्वया विस्मृता संस्कृतमपि नाधिगतमिति स्पष्टम्। इति।

बालस्य प्रमथनाथस्य वचनं काशिकाकौमुद्याद्यनालोचनमूलकम्। काशिकायां जयादित्येनोक्तम्—आशङ्कायामुपसंख्यानम्। शङ्के पतिष्यति कूलम्। पिपतिषति कूलम्। श्वा मुमूर्षति। इति। सिद्धान्तकौमुद्यां भट्टोजिभट्टेनोक्तम्, आशङ्कायां सन् वक्तव्यः। श्वा मुमूर्षति। कूलं पिपतिषति। इति।

सर्वस्यैतस्य मूलं महाभाष्यम्। तत्र वर्तते।

वार्त्तिकम्। आशङ्कायामचेतनेषूपसंख्यानम्।

भाष्यम्। आशङ्कायामचेतनेषूपसंख्यानं कर्तव्यम्। अश्मा लुलुठिषते। कूलं पिपतिषति।

किं पुनः कारणं न सिध्यति?

एवं मन्यते चेतनावत एतद् भवतीच्छेति। कूलं चाचेतनम्।

अचेतनग्रहणेन नार्थः, आशङ्कायामित्येव। इदमपि सिद्धं भवति—श्वा मुमूर्षतीति।

[ शुनश्चैतन्येऽति जीवितस्य प्रियत्वाद् व्याध्याद्यभिभवेऽपि तिर्यक्त्वान्मर्तुमिच्छा नास्ति। प्रदीपः ]

वा०। न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः।

भाष्यम्। न वा वक्तव्यम्।

किं कारणम्?

तुल्यकारणत्वात्। तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने।

किं कारणम्?

इच्छाया हि प्रवृत्तित उपलब्धिर्भवति। योऽप्यस्यौ कटं चिकीर्षुर्भवति नासावाघोषयति कटं करिष्यामीति।

किं तर्हि?

सन्नद्धं रज्जुकीलपूलपाणिं दृष्ट्वा तत इच्छा गम्यते॥ कूलस्यापि पिपतिषतो लोष्ठाः शीर्यन्ते, भिदोपजायते, देशान्तरमुपसंक्रामति॥ श्वानः खल्वपि मुमूर्षव एकान्तशीलाः शूनाक्षाश्च भवन्ति॥ इति।

---

# वयस्विनी

"शारदीय उल्टोरथ" (१८८१) पत्रे (पृः १९० अग्निसाक्षीत्याख्याने) दृष्टम्—"वयस्विनी एक महिला" इति।

मनस्विनी सीमन्तिनी निर्वर्णिता, पयस्विनी सौरभेय्यपि प्रत्यक्षीकृता, स्रोतस्विनी सागरगामिन्यपि समवलोकिता, परं वयस्विनी महिला कदापि न गता नः श्रवणगोचरम्। अस्मायामेधास्रजो विनिरिति विनिप्रत्ययेन साधितोऽयं शब्दः।

१९९ पृष्ठे दृष्टम्—"रमेन वसे रइल विमूढ एकटा स्थानु पिण्डेर मत" इति। स्थाणुगतो णकारो मूर्धन्यः। विमूढं स्थाणुपिण्डमिवेत्यत्र विमूढमिति विशेषणं न लगति, सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदित्युक्तेः। स्थाणुशब्देनैव गतार्थत्वात् पिण्डशब्दोऽत्रातिरिक्तः।

---

# अनुत्तमं शास्त्रज्ञानम्

युगान्तरपत्रे प्रकाशिताच् श्रीमत्याः शेफालिकायाः पत्रादवगम्यते "निषिद्धदेश ओ निषिद्धकथा" पुस्तके दृश्यते "कवि यरत्क्रतु ओ नागी यरत्क्रतुर सम्पर्क" इति, "महाभारतेर उद्योगपर्वे गलभेर ये उपाख्यान" इति च। यकारजकारयोः कारुकत्वोर्गलभगालवयोश्च भेदोऽवश्यमेव दूरीकरणीयः। सुक्रतु-सक्रतु-शतक्रतु-कविक्रतु-विभुक्रतु-प्रभृतिषु शब्देषु क्रतुशब्दो देदीप्यते, अत एव जरद्यूक्तोः सङ्करेण निष्पन्ने यरत्छब्देऽपि क्रतुशब्देन स्थातव्यम्। गलभशब्दः पाश्चात्त्येषु श्रद्धाजाड्यं सूचयति। तर्हि Galava इति लिख्यते। अतोऽस्माभिरपि तत्पदाङ्कानुसारिभिस्तदवबोद्धुमक्षमैं गलभ इत्येव लेखनी! यम्

---

स्मर्यमाणमनुमानं स्यादिति ॥१।२।२५

किञ्च—"यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः॥"

इति स्मर्यमाणं पारमेश्वरं रूपं मूलभूतां श्रुतिमुपकल्पयेत्, श्रौत एवार्थः स्मृतावुक्त इति। अपि च—

"द्यां मूर्द्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता॥ इति।२५

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न, तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते चैके ॥१।२।२६

एवमपि न वैश्वानरस्य परमात्मत्वं यतः 'स एषोऽग्नि वैश्वानर" इति शब्दो वैश्वानरस्याग्निरूपतामभिधत्ते। "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय" इति वैश्वानरस्य हृदयादिस्थानत्रयस्थस्याग्नित्रितयत्वं कल्पितम्। "तद् यद् भक्तं प्रथममागच्छेत् तद्धोमीयम्" "स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहा" इति। प्राणाहुत्याधारत्वं च वैश्वानरस्य ज्ञायते। तथा "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति पुरुषेऽन्तः प्रतिष्ठानं च श्रूयते इति हेतुत्रितयाद् वैश्वानरस्य जाठराग्नित्वं ज्ञायते न परमेश्वरत्वमिति चेन्न। कुतः? तथा दृष्ट्युपदेशात्। यतो जाठराग्नौ परमात्मदृष्टिरूपमत्रोपासनमुपदिश्यते, अन्यथा जाठरस्य "मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूप" इत्यादि विशेषणमसम्भवं स्यात्, नहि जाठरस्य द्यौर्मूर्द्धा स्यात्, विश्वरूपः सूर्यो वा चक्षुः स्यात्, परमात्मनस्तु सर्वविकारकारणस्य तत् सम्भवति। एके वाजसनेयिनश्चैनं वैश्वानरं पुरुषमप्यधीयते "स एषोऽग्नि वैश्वानरो यत् पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे"ति। न च जाठरस्य पुरुषत्वं सम्भवति परमात्मनस्तु "पुरुष एवेदं सर्वमि"ति पुरुषत्वं श्रुत्यैव समर्थितम्॥२६॥

अत एव न देवता भूतं च ॥१।२।१७

अत एव वैश्वानरस्य द्युमूर्द्धत्वादिदर्शनादेव न स देवता भूताग्नि र्वा, तयोर्द्युमूर्द्धत्वाद्यसम्भवात्॥२७॥

साक्षादप्यविरोधं जैमिनिः ॥१।२।२८

अग्नौ परमात्मदृष्टिकल्पनेन प्रागुपपादितं, जैमिनिस्तु साक्षादप्यविरोधमाह। यथाहि वैश्वानरशब्दो विश्वात्मकत्वान्निखिलनरात्मकत्वाच्च ब्रह्मणः परमात्मपरः "नरे

संज्ञायामि"ति दीर्घभावः, राक्षसवायसादिवत् स्वार्थे तद्धितप्रत्ययः, तथाग्निशब्दोऽपि अग्रणीत्वादिगुणयोगाद् यथा वह्नेर्वाचको निप्रत्ययान्ताद् गत्यर्थादगेर्धातो निष्पन्नत्वात्, तथा अङ्गयति प्रापयति कर्मफलमिति व्युत्पत्त्या शुभाशुभफलदाता परमात्माप्यग्निरुच्यते इत्यविरोध इत्यर्थः ॥२८॥

## अभिव्यक्तेरित्याश्मरथ्यः ॥१।२।२९

कथं सर्वगतस्य ब्रह्मणः प्रादेशमात्रत्वमुपपद्यते ? तत्राचार्यान्तरसिद्धान्तमाह— अभिव्यक्तेरिति। अपरिसीमापि परमात्मा उपासकानुग्रहार्थं द्युमूर्द्धत्वादिरूपेण प्रादेशमात्रत्वेनाभिव्यज्यते इति प्रादेशमात्रश्रुतिरित्याश्मरथ्य आचार्यो मन्यते ॥२९।

## अनुस्मृतेर्बादरिः ॥१।२।३०

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति निरन्तरस्मरणरूपमुपासनमत्र विधीयते, निरवधिकस्य च ब्रह्मणः सर्वथा स्मरणासम्भवात् प्रादेशमात्रश्रुतिरिति बादरेर्मतम् ॥३०॥

## सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥१।२।३१

प्रादेशमात्रसम्पत्त्यर्थं प्रादेशमात्रश्रुतिरिति जैमिनिराचार्यो मन्यते। तथाहि उपासकस्य मूर्द्धादिचुबुकान्तदेहावयवेषु वैश्वानरस्य व्यापिनो मूर्द्धादिपादान्तान् सम्पादयितुं प्रादेशमात्रमिति श्रुतिः। यतः श्रुतिरेव तथा दर्शयति "प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्ना स्तथातु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामी"ति। अश्वपते राज्ञः प्राचीनशालादीन् प्रतीयं प्रतिज्ञा ॥३१॥

## आमनन्ति चैनमस्मिन् ॥१।२।३२

अस्मिन्नुपासकदेहे मूर्द्धादिचुबुकान्ते प्रादेशपरिमिते एनं वैश्वानरमामनन्ति च श्रुतयः। तथाहि राजा तथा प्रतिज्ञाय स्वस्य मूर्द्धादिचुबुकान्ते देहांशे करेण वैश्वानरस्य मूर्द्धादिपादान्तमुपदिशन्नुवाच "एष वा अतिष्ठा वैश्वानर" इति। चक्षुषी उपदिशन्नुवाच"एष वै सुतेजा वैश्वानर" इति। नासिके उपदिशन्नुवाच"एष वै पृथग्वर्त्मात्मा वैश्वानर" इति। मुख्यमाकाशमुपदिशन्नुवाच"एष वै बहुलो वैश्वानर" इति। मुख्या अप उपदिशन्नुवाच"एष वै रयिर्वैश्वानर" इति। चुबुकमुपदिशन्नुवाच"एष वै प्रतिष्ठा वैश्वानर" इति। इत्यपरिच्छिन्नस्यापीश्वरस्य प्रादेशमात्रत्वं सङ्गच्छते। तस्मात् सिद्धं परमात्मैव वैश्वानर इति ॥३२।

मत्स्योऽपि तत एव गृहीताभिधान इति तर्कयामि, परन्तु तादृशसुदर्शनमीनस्य कथं रूपाननुरूपमभिधानं तन्न जाने। आङ्गलभाषायां पुनः स एव शब्द आद्यक्षरलोपेन विकटाकारमत्स्यविशेषवाचकः ( Devil ) सञ्जातो वा ? यद्वा तद्वा भवतु सेमिटिक-भाषासु तदेव वैदिकं पदम् Eblis अथवा Iblis रूपेण गृहीतमिति तु सुनिश्चितम्। तस्यार्थश्च दुष्टदैत्य इत्यादि (wicked genie)। महम्मदीयैरिदं पदं स्वोकपरिवर्त्तितं शास्त्रादिषु गृहीतमिति निर्विवादम्। पुनश्चाङ्गलाद्यासु पाश्चात्यभाषासु दुष्टवेताल-भूताद्यर्थे प्रयुज्यमानानि 'Elf'-शब्दबहुवचनविशेषणरूपाणि 'Elves' 'Elfish' Elvish, तथा Devilish ( ग्रीकपदं 'Diabolos' ) इत्यादिपदानि तदेव वैदिक-पदमनुवर्त्तन्त इति शब्दसारूप्यादर्थसादृश्याच्च प्रतीयते। कथमन्यथा वैदिकसेमिटिक-टिउटनिकदेवतत्त्वानामियदद्भुतमानुरूप्यं व्याख्येयम् ? मन्ये पक्षपातरहिता विद्वांसो न कथमप्यन्यथा तर्कयितुं शक्नुयुरस्मिन् विषये। यदि पुनः पाश्चात्यास्तौलनिकभाषाविज्ञान-परिशीलिनोऽन्यथैवास्मिन् प्रसङ्गे प्रतिपिपादयिषेयुस्तर्हि प्रायो मिथ्याभिमानग्रहग्रस्त-त्वस्यैव तद् दुर्विलसितं स्यादित्यलं पल्लवितेन।

---

## विचित्रम्

"रविवासरीयानन्दबाजारपत्रिका"यां ( ३रा आश्विन १३६६, पृः १, स्तम्भ २-३ ) सुबृहदक्षरैर्मुद्रितं दृष्टम्—ताप्तीर जल विपदसूचक स्तर हइते ह्रास ( ताप्त्या जलं विपद्-सूचकस्तरात् ह्रासः ) इति।

विपद्+अनुमापक=विपदनुमापक ∴ विपद्+सूचक = विपदूसूचक !!!

जलह्रास इति समस्तं पदं साधु, अत एव जल…ह्रास इत्यस्य साधुत्वमभ्युपगम्य वैषम्यस्य मूले कुठारोऽर्पणीयः।

वस्तुत एव विपत्सूचक-विपज्ज्ञापक-विपदनुमापक-प्रभृतिषु शब्देषु बहुरूपत्वेन निरन्तर-मेवानुभूयमानाया विपदो भाषायामपि विश्वरूपदर्शनं कस्य वा सचेतसश्चेतो न समुद्व-जयेत् ?

---

## Bhakti in the Priyadigaṇa

[ Kshitish Chandra Chatterji ]

( ५९-पृष्ठतोऽनुवर्तते )

ग० म०। किञ्च स्वा दुर्भगा कान्ता क्षान्ता च निचिता समा।
सचिवा चपला भक्तिर्बालेति स्वादयो दश॥

इति स्वादयो वेत्यनेन विकल्पेन पुंवद्भावं मन्यते ।

संक्षिप्तसारम् । पुंवन्न प्रियादौ ७।४२९ ।

वृत्तिः । तरुणीप्रियः । प्रिया मनोज्ञा सुभगा कल्याणी भक्ति सचिवा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामना । दृढभक्तिरित्यादि त्वविवक्षितस्त्रीत्वात् पूर्वपदस्य । आर्षत्वादिति भागवृत्तिः ।

टीका । भक्तिशब्दस्यापि प्रियादौ पाठात् पुंवद्भावनिषेधे दृढभक्तिरिति न प्राप्नोतीति चोद्य आह—दृढभक्तिरित्यादि । पूर्वपदस्य दृढशब्दस्य स्त्रीत्वमेव न विवक्षणीयम् । स्त्रीत्वस्याभावात् पुंवद्भावस्यैवायमविषयः, किं प्रतिषेधनिरूपणेनेत्यभिप्रायः । दृढशब्दो ह्यत्रादार्ढ्यनिवृत्तिपरः प्रयुक्तः, तदनु प्रयुक्तस्य लिङ्गविशेषोपादानमनुपकार्येवेति स्त्रीत्वमिह न विवक्षितम् । आर्षत्वादिति भागवृत्तिरिति सिद्धान्तान्तरम् । न ह्यार्षपदं स्वसिद्धौ प्रमाणभूतं लक्षणमपेक्षते इत्यभिप्रायः ।

टिप्पनी । ननु विशेषणस्य दृढशब्दस्य कथं विशेष्यलिङ्गाविवक्षा सम्भवतीत्यत आह—दृढशब्दो हीत्यादि । तथाच न्यासः—अदार्ढ्यनिवृत्तिपरायां चोदनायां लिङ्गविशेषोपादानमनुपकारकमेव । इति । यथा जात्यन्तरव्यवच्छेदाय प्रयुक्ते मृगमांसादौ न लिङ्गविशेषविवक्षेति । एतेन विशेष्यनिघ्नत्वाभावेन स्वातन्त्र्ये अदार्ढ्यनिवृत्तिः प्राधान्येन बोध्येति भावः । एवं सति भवति विरलभक्तिर्म्लानपुष्पोपहार इति रघुः । शिष्टप्रयोगे आश्लिष्टप्रिय विमुक्तकान्त इत्यादयश्चिन्त्या इति भाषावृत्तिः । प्रियमाश्लिष्टः कान्तया विमुक्त इति राजदन्तादित्वादिति वयम् ।

प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा समा ।
भक्तिः स्वसा तथा कान्ता सचिवा चाथ वामना ।
चपला दुहिता क्षान्ता प्रियादौ हि प्रकीर्तिताः ॥

मुग्धबोधम् । पूरणी प्रिया मनोज्ञा सुभगा दुर्भगा क्षान्ता कान्ता वामना वामा चपला बाला समा सचिवा तनया दुहितृ स्वा कल्याणी भक्तौ । ३३०

वृत्तिः । एषु परेषु पुंवन्न स्यात् ।

तर्कवागीशटीका । अन्ये ( =संक्षिप्तसारकाः ) तु क्षान्तातनययोः स्थाने क्षमातरुण्यावाहुः, बालावामाशब्दौ च नाहुः । इह द्रव्यार्थप्रियादिसाहचर्याड् ढत्यान्तस्य ( =कर्मप्रत्ययान्तस्य) भज्यमानद्रव्यार्थस्य भक्तिशब्दस्य ग्रहणाद् भावत्यान्ते (=भावप्रत्ययान्ते) न निषेधः । यथा मेघदूते दृष्टभक्तिर्भवान्या इति, रघौ दृढभक्तिरिति । कान्ता-शब्दं परे ( =पाणिनीयाः) नाहुः ।

दुर्गादासटीका । भक्तिशब्दोऽत्र कर्मविहितक्तिप्रत्ययान्तो बोद्धव्यः, भावसाधिते

तु पुंवत् स्यादेव। दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुख इति रघुः। प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता इति तु प्रसूतं तनयया यस्या इति व्यधिकरणबहुव्रीहिः।

सुपद्मम्। स्त्री पुंवद् भाषितपुंस्कानूङ् तुल्यार्थे स्त्रियामपूरणीप्रियादिषु ४।४।२६।

वृत्तिः। ..प्रियादौ कल्याणीप्रिया मनोज्ञादुहिता विदुषीकान्तः मानिनीदुहितृकः। प्रिया कान्ता सुभगा दुर्भगा वामना दृढा विदुषी भक्ति क्षमा समा दुहिता चपला इत्यादि।

सुपद्मविवरणपञ्जिका। मासीनदुहितृक इति। मासं भूतेति। मासाद्वयसि येनणौ [ ५।३।३३९ ] इतीनण्।

सुपद्ममकरन्दः। प्रियादेर्भक्तौ पुंवन्निषेधात् कथं "दृढभक्तिरिति ज्येष्ठे" "दृष्ट-भक्तिर्भवान्या" इत्यादि? अविवक्षितस्त्रीत्वात् पूर्वस्येत्येके। अन्ये तु भक्तिशब्दोऽत्र प्रियादिसाहचर्याद् धर्मिवचनः कर्मसाधनो गृह्यते। तेन भवानी भक्तिरस्येति भवानी-भक्तिः। तथा भक्तौ च कर्मसाधनायामिति भोजः [ ६।२।४६ ] पठति।

प्रयोगरत्नमाला। पुंवद्भाषितपुंस्काः स्त्रीलिङ्गा ऊङन्तवर्जिताः।
स्त्रीलिङ्गतुल्यार्थपदे स्त्रीपूरण्यादिवर्जिते॥

वृत्तिः। प्रिया मनोज्ञा सुभगा दुर्भगा चपला सुधा।
कान्ता भक्तिसमा माता दुहिता वामनोपला॥ इत्यादि।...अयमेवमाराध्य इति विशुद्धाभिसन्धानं भक्तिः। तदर्थकभक्तिशब्दे न पुंवत्। यथा महतीभक्तिनानेन नूनमाराधितो हरिरिति। अनुलेपनादिसम्भक्त्यर्थे तु पुंवत्। भवति विरलभक्तिर्म्लान-पुष्पोपहारः [ रघु० ५।७४ ] इति। दृढभक्तिरिति [ रघु० १२।१९ ] गणोक्तस्या-नित्यत्वादित्याहुः। अपि च सामान्योपक्रमान्नपुंसकम्। दृढं किं तत्? इत्याकाङ्क्षायां भक्तिरित्यन्वयः। इत्थं दृढं भक्तिर्यस्य स दृढभक्तिः। एवं शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या [ १।३७ ] इति मेघे। यद्वा मन्तुलोपो दृष्टः। भक्तिर्भक्तिमानिति नास्त्यनुपपत्तिः॥१।९३६

प्रभाप्रकाशिका। अयमेव ममाराध्य इति विशुद्धाभिप्रायार्थकभक्तिशब्दस्य पूरण्या-दित्वात् तस्मिन् परे न पुंवत्। तेन महती भक्तिर्यस्य तेन महतीभक्तिना इत्यत्र न पुंवत्। नूनं निश्चितम्। अनुलेपनादीनां चन्दनादीनां सम्भजनार्थकभक्तिशब्दस्य पूरण्यादिभिन्नत्वात् तस्मिन् परे पुंवदेव। विरला भक्तिर्यत्रेति विरलभक्तिः। पुंवद्भाव आ-निवृत्तिः। भवतीत्यादि। स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः। अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्तामनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः॥ इति रघौ। ननु दृढा भक्तिर्यस्य स दृढभक्तिरित्यत्रायं ममाराध्य इति विशुद्धाभिसन्धानार्थक-भक्तिशब्दे पूरण्यादौ परे कथं पुंवत्? इत्याह—दृढ इति। नञागमगणोद्दिष्टाः

संज्ञापूर्वा अनित्यगा इति न्यायाद् भक्तिशब्दस्य पूरण्यादिगणमध्यपाठात् तद्विधेरनित्यतया पूरण्यादावपि क्वचित् पुंवदित्याहुः। नन्वनन्यगतिकत्वे सत्येव न्यायाङ्गीकार इत्यस्वरसादाह—अपि चेति। अव्यक्तगुणसन्दोह एकता क्लीबलिङ्गता इत्यनेन सामान्योपक्रमे लिङ्गभेदाव्यक्तेः क्लीबत्वम्। तेन दृढमित्युक्ते किन्तदित्याकाङ्क्षायां भक्तिरित्युत्तरिते आकाङ्क्षावशात्पदार्थद्वयस्य परस्परान्वय इतिप्रकारेण दृढं भक्तिर्यस्येति सिद्धौ पुंवद्भावाप्रसक्ते र्न कोऽपि दोषः। एवमिति। गणोक्तविधेरनित्यत्वात् सामान्योपक्रमे दृढमिति क्लीबत्वाद्वेत्यर्थः। शान्तोद्वेगस्तिमितनयनं यथा स्यात् तथा भवान्या दृष्टाऽदृष्टाऽन्या भक्तिर्यस्य स इत्यर्थः। ननूत्थाप्याकाङ्क्षत्वात् सामान्योपक्रमात् क्लीबत्वमपि जघन्यमित्यस्वरसादाह—यद्वेति। मन्त्वादेर्गुणवाचिभ्यो लुगित्यनेन भक्तिशब्दान्मतुब्लोपः। भवान्या दृष्टश्चासौ भक्तिर्भक्तिमांश्चेति कर्मधारये दृष्टभक्तिरिति न काचिदनुपपत्तिरत्रास्तीति मन्तव्यम्। मुदितैस्तदेति दितिजन्मनां रिपावविनोयसम्भ्रमविकाशिभक्तिभिः। उपसेदिवद्भिरुपदेष्टरीव तैर्ववृते विनीतमविनीतशासिभिः॥ इति माघः [१३।२४]।

गूढप्रकाशिका। पूरण्यादिगणपठितभक्तिपदार्थं निर्वक्ति—अयमिति। अयं ममाराध्य इति विशुद्धाभिसन्धानं निर्दोषाभिप्रायो भक्तिः। तद्भक्तिशब्दे परे न पुंवत्। तेन महती भक्तिर्यस्य तादृशेन अनेन नूनं निश्चितं हरिराराधितः सेवितः। आङ् पूर्वाद् राध संसिद्धौ इत्यस्मात् कर्मणि क्तः। इट्। पुंवद्भावे महाभक्तिनेति स्यात्। भक्तिर्विभागे सेवायां स्त्रियामिति मेदिनी। अनुलेपनादीति। अनुलेपनादीनां चन्दनादीनां सम्भक्त्यर्थं म्रक्षणार्थे। भक्तिर्निषेचने भावे रचनायामिति शब्दार्णवः। रचना म्रक्षणादिः। तुशब्दो भेदे। तेन तस्मिन् भक्तिशब्दे परे पुंवदित्यर्थः। पुंवद्भावं दर्शयति—यथेति। विरला अल्पा भक्तिश्चन्दनाद्यनुलेपो यत्र। पुंवद्भाव आ-निवृत्तिः। म्लानश्च तत्पुष्पश्चेति तदेवोपहारः इति विग्रहौ। इदं प्रभातवर्णनायां प्रयुक्तम्। ननु दृढा भक्तिर्यस्य स इति दृढभक्तिरित्यत्रायं ममाराध्य इत्यभिसन्धानार्थकभक्तिशब्दे परे कथं पुंवत् तस्य पूरण्यादिगणपाठादित्यत आह—दृढभक्तिरिति। गणोक्तस्येति। नञागमगणोद्दिष्टसंज्ञापूर्वा अनित्यगाः। समासान्तोदिताश्चैव परिभाषाश्रितास्तथा॥ इति न्यायाद् भक्तिशब्दस्य पूरण्यादिगणपाठात् गणोक्तस्य विधेरनित्यत्वात् पूरण्यादावपि क्वचित् पुंवदित्याहुः। शिष्टा इति शेषः। ननु गत्यन्तरसम्भवे न्यायानुसरणमन्याय्यम् इत्यस्वरसत्वमुद्भाव्याह—अपि चेति। अव्यक्तगुणसन्दोह एकता क्लीबलिङ्गतेत्यनेन सामान्योपक्रमाद् विशेषविशेष्यानुद्देशेन लिङ्गभेदाव्यक्ते र्नपुंसकं क्लीबलिङ्गमित्यर्थः। तेन दृढमिति सामान्यलिङ्गमेव, यद्यपि भक्तिरित्यत्रा-

न्वयस्तथापि प्राक्प्रवृत्तस्यानपहारादिति भावः। एवमिति। दृढभक्तिरित्यत्र यथा सामान्योपक्रमान्नपुंसकं तथा शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्येति मेघदूतपद्येऽपी-त्यर्थः। शान्तोद्वेगस्तिमितनयनं यथा स्यात्तथा भवान्या दृष्टं भक्तिर्यस्य सः। पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः, सान्ध्यं तेजः प्रतिनवजवापुष्परक्तं दधानः। नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छामिति पूर्वपादत्रयम्। अस्यार्थः। पश्चात् सन्ध्याबल्यनन्तरं पशुपतेः शिवस्य नृत्यारम्भे ताण्डवप्रारम्भे प्रतिनवजवापुष्परक्तं प्रत्यग्रजवाकुसुमारुणं सन्ध्यायां भवं सान्ध्यम्। अण् तत्र जातं दृश्यश्च भवं क्षुण्णं समुद्धृतम् इत्यणि वृद्ध्यादि। तेजो दधानो धारयन् उच्चैरुन्नतं भुजा एव तरवस्तेषां वनं मण्डलेन मण्डलाकारेण अभिलीनः अभिव्याप्तः सन्। कर्तरि क्तः। शान्त उद्वेगो गजाजिनदर्शनभयं ययोस्तादृशे स्तिमिते निश्चले नयने यस्मिन् कर्मणि तत् तथोक्तम्। इदं दृष्ट इति क्रियाविशेषणम्। भवान्या भवपत्न्या दृष्टं भक्तिर्यस्य सः। यद्वा दृष्टो भक्तिर्भक्तिमान् दृष्टभक्तिः सन् पशुपतेः आर्द्रं शोणिताद्रं नागाजिनं गजचर्म तत्र इच्छां हर निवर्तय त्वमेव तत्स्थाने भवेत्यर्थः। उद्वेगस्त्वरिते क्लेशे भये मन्थरगामिनीति शब्दार्णवः। अजिनं चर्म कृत्तिः स्त्रीत्यमरः। गजासुरमर्दनानन्तरं भगवान्महादेव-स्तदीयमार्द्राजिनं भुजमण्डलेन बिभ्रत् ताण्डवं चकारेति प्रसिद्धिः। ननूत्थाप्याकाङ्क्षत्वात् सामान्योपक्रमे क्लीबत्वमपि जघन्यमित्यस्वरसमुद्भाव्याह—यद्वेति। मन्त्वादेर्गुण-वाचिभ्यो लुगित्यनेन मन्तुलोपे दृष्टो भक्तिर्भक्तिमानिति कर्मधारये नास्त्यनुपपत्तिरित्यर्थः। दृढभक्तिरित्यत्र तु मतुब्लोपे कृते व्यक्तेरेव दृढत्वमायाति न तु भक्तेरिति तादृशार्थ-स्यातात्पर्यविषयत्वादगत्या सामान्योपक्रमे जघन्यमपि क्लीबत्वकल्पनमिति भावः।

हरिनामामृतम्। वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यां न तूङ् न च पूरणी-प्रियादिषु। ६।२४९

वृत्तिः। प्रियादयस्तु—

प्रिया कान्ता दृढा भक्तिर्वामना दुहिता क्षमा।
सुभगा दुर्भगा तद्वद्विदुषी चपलादयः॥

श्लिष्टप्रियादिषु च पुरुषोत्तमवत्। ६।२५०

वृत्तिः। पूर्वनिषेधापवादोऽयम्। श्लिष्टप्रियः विमुक्तकान्तः दृढभक्तिः प्रियदुहिता (?)।

टीका। श्लिष्टप्रिय इति श्लिष्टा प्रिया येनेति विग्रहः। विमुक्तकान्त इति। विमुक्ता कान्ता येनेति विग्रहः। दृढेति दृढा भक्तिर्यस्येति विग्रहः। प्रियेति। प्रिया दुहिता यस्येति विग्रहः।

रघुवंशसञ्जीवनी। दृढभक्तिरित्यत्र दृढशब्दस्य स्त्रियाः पुंवदित्यादिना पुंवद्भावो

दुर्घटः। अप्रियादिष्विति निषेधात्, भक्तिशब्दस्य प्रियादिषु पाठात्। अतो दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति गणव्याख्याने। दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयमिति वृत्तिकारश्च। अदार्ढ्यनिवृत्तिमात्रपरे दृढशब्दे लिङ्गविशेषस्यानुपकारकत्वात् स्त्रीत्वमविवक्षितमेव, तस्मादस्त्रीलिङ्गस्य दृढशब्दस्यायं प्रयोग इत्यभिप्रायः। न्यासकारोऽप्येवम्। भोजराजस्तु—"कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठाद् भवानीभक्तिरित्यादौ कर्मसाधनत्वात् पुंवद्भावप्रतिषेधः। दृढभक्तिरित्यादौ तु भावसाधनत्वात् पुंवद्भावसिद्धिः पूर्वपदस्य" इत्याह ॥१२।१९॥

मेघदूतसञ्जीवनी। दृष्टभक्तिरिति कथं रूपसिद्धिः दृष्टशब्दस्य स्त्रियाः पुंवदित्यादिना पुंवद्भावस्य दुर्घटत्वात् अपूरणीप्रियादिष्विति निषेधात्, भक्तिशब्दस्य प्रियादिषु पाठात्। तदेतच्चोद्यं दृढभक्तिरितिशब्दमाश्रित्य प्रतिविहितं गणव्याख्याने दृढं भक्तिरस्येति नपुंसकं पूर्वपदम्। अदार्ढ्यनिवृत्तिमात्रपरत्वे दृढशब्दाल्लिङ्गविशेषस्यानुपकारित्वात् स्त्रीत्वमविवक्षितमिति। भोजराजस्तु 'भक्तौ च कर्मसाधनायाम्' इत्यनेन सूत्रेण भज्यते सेव्यत इति कर्मार्थत्वे भवानीभक्तिरित्यादि भवति, भावसाधनायां तु स्थिरभक्तिर्भवान्या इत्यादि भवतीत्याह। तदेतत् सर्वं सम्यग् विवेचितं रघुवंशसञ्जीवन्यां दृढभक्तिरिति ज्येष्ठे इत्यत्र। तस्माद् दृष्टभक्तिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वेन नपुंसकत्वेन च रूपसिद्धिरस्तीति स्थितम् ॥१।३७॥

कुमारसम्भवसञ्जीवनी। ननु मान्यभक्तिरित्यत्र कथं पुंवद्भावः, अप्रियादिष्विति निषेधात्, भक्तिशब्दस्य प्रियादिपाठात्। नैष दोषः, नपुंसकपूर्वपदत्वात्। यथाह वृत्तिकारः—दृढभक्तिरित्यादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धम्" इति। भोजराजस्तु भज्यत इति कर्मसाधनस्यैव प्रियादिपाठतया भवानीभक्तिरिति न तु भजनं भक्तिरिति भावसाधनस्य। अतोऽत्र स्त्रीपूर्वपदत्वेऽपि न दोष इत्याह ॥८।७७॥

सर्वङ्कषा। ननु विकासिभक्तिभिरित्यत्र कथं पूर्वपदस्य पुंवद्भावः। भक्तिशब्दस्य प्रियादिपाठात् स्त्रियाः पुंवदिति पुंवद्भावसूत्रेऽप्रियादिष्विति निषेधात्? इति। विकासिशब्दस्याविकासिनिवृत्तिमात्रपरतयाऽस्त्रीत्वस्य विवक्षितत्वान् नपुंसकपूर्वपदो बहुव्रीहिरिति केचित्। तदेतदभिप्रेत्योक्तं वृत्तिकारेण—दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धिः इति। एतदेव स्पष्टीकृतं गणव्याख्याने—दृढं भक्तिरस्येति नपुंसकं पूर्वपदम्। धात्वर्थविशेषणमात्रपरे दृढशब्दे लिङ्गविशेषस्यानुपकारकत्वात् स्त्रीत्वमविवक्षितम् इति। भोजराजस्तु भक्तौ च कर्मसाधनायाम् इत्यनेन सूत्रेण भज्यते सेव्यत इति कर्मार्थत्वेन भवानीभक्तिरित्यादि भवति, भावसाधनायान्तु दृढभक्तिर्भवत्येवेत्याह। तदेतत् सर्वमस्माभिः कालिदासत्रयसञ्जीविन्यां दृढभक्तिरिति ज्येष्ठ

इत्यादिषु विवेचितम्। तस्माद्दिकासिभक्तिभिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वे नपुंसकत्वे च रूपसिद्धिरस्तीति स्थितम् ॥१३।२४॥

प्रतापरुद्रीयरत्नापणे कुमारस्वामी। आविष्टं भक्तिर्येषामिति लिङ्गसामान्ये नपुंसकपूर्वपदो बहुव्रीहिः। स्त्रीपूर्वपदत्वे भक्तिशब्दस्य प्रियादिपाठादप्रियादिष्विति निषेधेन स्त्रियाः पुंवदित्यादिना पुंवद्भावप्रतिषेधप्रसङ्गात्। अत एवाह वृत्तिकारः—दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदत्वस्याविवक्षितत्वात् समाधेयमिति। भोजराजस्तु कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिषु पाठो न भावसाधनस्य। दृढभक्तिरित्यादौ भावसाधनत्वान्न कश्चिद्विरोध इत्याह। प्रपञ्चितं चैतत् तातपादैः सञ्जीविन्यादौ तत्र तत्रेत्यस्माभिरुपरम्यते। तस्मादत्रापि [ नपुंसकपूर्वपदो वा ] स्त्रीपूर्वपदो वा बहुव्रीहिरनुसन्धेयः।

काव्यालङ्कारसूत्रे वामनः। दृढभक्तिरिति सर्वत्र ॥५।२।७२

वृत्तिः। दृढभक्तिरसौ ज्येष्ठे। अत्र पूर्वपदस्यास्त्रियां विवक्षितत्वात्।

कामधेनुव्याख्या। अत्र भक्तिशब्दस्य प्रियादिपाठात् पूर्वपदस्य पुंवद्भावो दुर्घट इति प्राप्ते पूर्वपदस्य दृढशब्दस्य विग्रहवाक्ये स्त्रीत्वस्याविवक्षितत्वाद् दृढभक्तिरिति सिध्यतीत्याह—अत्रेति। तथा चाह वृत्तिकारः—दृढभक्तिरित्येवमादिषु पूर्वपदस्य स्त्रीत्वस्याविवक्षितत्वात् सिद्धमिति समाधेयमिति। गणव्याख्यानकारोऽपि दृढं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति। न्यासकारोऽपि अदार्ढ्यनिवृत्तिपरे दृढशब्दे लिङ्गविशेषस्यानुपकारित्वात् स्त्रीत्वमविवक्षितमेव। तस्मादस्त्रीलिङ्गस्यैव दृढशब्दस्यायं प्रयोग इत्यभिप्राय इति। भोजराजस्त्वन्यथा समाधत्ते—भक्तौ च कर्मसाधनायाम् [ ६।२।४६ ] इत्यत्र सूत्रे। कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिषु पाठाद् भवानीभक्तिरित्यादौ पुंवद्भावप्रतिषेधः। दृढभक्तिरित्यादौ भावसाधनत्वात् पुंवद्भावे सिद्धेऽस्त्रीपूर्वपदत्वमेव। इति।

माधवीयधातुवृत्तिः। दृढभक्तिरित्यत्र कुक्कुटाण्डादिवत् स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धम्। प्रतिपादितं चैतद् भाष्यादौ ॥१।१७७॥ ( क्रमशः )

---

# वेदार्थविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## ऋघायमाण

नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥१।१०।८

सायणः। ऋघायमाणं शत्रुवधं कुर्वाणम्।..नन् हन्तीति ऋघा। अन्येभ्योऽपि

## ऋघावत्

नाहं तं वेद य इति ब्रवीत्यदेवयून्त्समरणे जघन्वान् ।

यदावाख्यत् समरणमृघावदादिद्ध मे वृषभा प्र ब्रुवन्ति ॥१०।२७।३

सा० । ऋघावत् ऋघावन्तं परस्परं हिंसायुक्तम् । अत्यन्तक्रूरमित्यर्थः ।

## ऋघावा

यदा समर्यं व्यचेदृघावा दीर्घं यदाजिमभ्यख्यदर्यः ।

अचिक्रदद् वृषणं पत्न्यच्छा दुरोण आ निशितं सोमसुद्भिः ॥४।२४।८

सा० । ऋघावा शत्रूणां हिंसक इन्द्रः ।

वे० मा० । हिंसावान् ।

## ऋघावान्

एतच्चन त्वो वि चिकेतदेषां सत्यो मन्त्रः कविशस्त ऋघावान् ।

त्रिरश्रिं हन्ति चतुरश्रिरुग्रो देवनिदो ह प्रथमा अजूर्यन् ॥१।१५२।२

सा० । ऋघावान् हिंसावान् । अनेन वक्ष्यमाणस्य सामर्थ्यस्य सम्भावना प्रतिपादिता भवति ।*

वे० मा० । हिंसावान् ।

इन्द्रः सुशिप्रो मघवा तरुत्रो महाव्रातस्तुविकूर्मिर्ऋघावान् ।

यदुग्रो धा बाधितो मर्त्येषु क्वत्या ते वृषभ वीर्याणि ॥३।३०।३

सा० । ऋघावान् शत्रुविषयहिंसावान् । नृन् हन्तीति ऋघा† । अन्येभ्योऽपि दृश्यन्त इति विच् । दृशिग्रहणान्नलोपो हकारस्य च ‡ घत्वम् । तदस्यास्तीति मतुबर्थे छन्दसीवनिपाविति वनिप् । व्यत्ययेनाद्युदात्तः ।

उत स्मास्य तन्यतोरिव द्योर्ऋघायतो अभियुजो भयन्ते ।

यदा सहस्रमभि षीमयोधीद् दुर्वर्तुः स्मा भवति भीम ऋञ्जन् ॥४।३८।८

सा० । ऋघायतः हिंसतः ।

वे० मा० । हिंसतः ।

---

* अनेन वक्ष्यमाणस्य सामर्थ्यस्य सम्भाविता प्रतिपादिता अभवदित्युक्तम् इति मुद्रितपुस्तकेषु पाठः !!!

† मुद्रितपुस्तकेषु "ऋघाः" इति पाठः !!!

‡ मुद्रितपुस्तकेषु चकारो नास्ति ।

### ऋघायन्त

तव त्विषो जनिमन् रेजत द्यौ रेजद् भूमिर्भियसा स्वस्य मन्योः।
ऋघायन्त सुभ्वः पर्वतास आर्दन् धन्वानि सरयन्त आपः ॥४।१७।२

सा०। सस्यादीनां वृष्टिप्रदानार्थं नियमेन त्वयाबाध्यन्त।

वे० मा०। ऋघायन्ताभिभवार्थम्। ऋघायतिस्तिष्ठत्यर्थः।

सर्वस्यैतस्य पर्यालोचनेन प्रतीयते निघण्टौ धातुपाठे चानुपलभ्यमानः कश्चन ऋघधातुरासीत्। तस्य चार्थः सञ्चलनम् क्रोधेन कम्पनम् भापनमिति प्रतीयते। आवेस्तायां भीषणार्थक ərəghant शब्द उपलभ्यते। ग्रीकूभाषायाम् orkheîsthai धातोरर्थो नर्तनम् orkheîn सञ्चालनम्, orkhēstēr नर्तकः। अत एवानुमीयते ऋघधातोरङि ऋघा-शब्दो निष्पन्नः। स च गुहाशब्द इव वृक्षादित्वादाद्युदात्तः। ऋघा-शब्दान्मतुपि ऋघावदिति वनिपि च ऋघावन्निति निष्पद्यते। ऋघावच्छब्दाल्लोहितादित्वात् क्यषि मतुब्लुकि ऋघायत् ऋघायमाणेति शब्दद्वयं सिध्यति।

---

## शाकुन्तलस्यच्छाया

### प्रियदर्शिकातः

विदूषकः। ( सकौतुकम् ) भो वयस्य, पश्य पश्य। कैषा कुसुमपरिमलसुगन्धवेणिमधुकरावलिर्विद्रुमलतारुणहस्तपल्लवोज्ज्वलत्तनुकोमलबाहुलता सत्यं प्रत्यक्षचरीवोद्यानलता स्त्री दृश्यते।

राजा। ( सकौतुकं विलोक्य ) वयस्य, निरतिशयस्वरूपशोभाजनितबहुविकल्पेयम्। यत्सत्यमहमपि नावगच्छामि, पश्य।

पातालाद् भुवनावलोकनपरा किं नागकन्योत्थिता
मिथ्या तत्खलु दृष्टमेव हि मया तस्मिन् कुतोऽस्तीदृशी।
मूर्ता स्यादिह कौमुदी न घटते तस्या दिवा दर्शनं
केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥२।६

विदूषकः। ( निरूप्य ) एषा खलु देव्याः परिचारिकेन्दीवरिका। तद् गुल्मान्तरितौ भूत्वा पश्यावः।

( उभौ तथा कुरुतः )

चेटी। ( कमलिनीपत्रग्रहणं नाटयन्ती ) आरण्यके, अवचिनु त्वं पत्राणि। अहमप्येतस्मिन्नलिनीपत्रे शेफालिकाकुसुमान्यवचित्य देवीसकाशं गमिष्यामि।

राजा। वयस्य, संलाप इव वर्तते। तदवहिताः श्रृणुमः। कदाचिदित एव व्यक्तीभविष्यति।

( चेटी गमनं नाटयति )

आरण्यका। हला इन्दीवरिके, न शक्नोमि त्वया विनात्रासितुम्।

चेटी। ( विहस्य ) यादृशमद्य मया देव्या मन्त्रितं श्रुतं तादृशेन चिरमेव मया विना त्वयासितव्यम्।

आरण्यका। ( सविषादम् ) किं देव्या मन्त्रितम्?

चेटी। एतत्। "तदैवाहं महाराजेन भणिता, यथा 'यदैषा विन्ध्यकेतुदुहिता वरयोग्या भविष्यति तदाहं स्मारयितव्यः' इति। तत् साम्प्रतं महाराजं स्मारयामि येनास्या वरचिन्तापर्याकुलो भविष्यति।"

राजा। ( सहर्षम् )। इयं सा विन्ध्यकेतोर्दुहिता। ( सानुतापम् ) चिरं मुषिताः स्मो वयम्। वयस्य! निर्दोषदर्शना कन्यका खल्वियम्। विश्रब्धमिदानीं पश्यामः।

आरण्यका। ( सरोषं कर्णौ पिधाय ) तद् गच्छ त्वम्। न त्वयासम्बद्धप्रलापिन्या प्रयोजनम्।

( चेट्यपसृत्य पुष्पावचयं नाटयति )

राजा। अहो सुतरां प्रकटीकृतमाभिजात्यं धीरतया। वयस्य, धन्यः खल्वसौ य एतदङ्गस्पर्शसुखभाजनं भविष्यति।

( आरण्यका कमलावचयं नाटयति। )

विदूषकः। भो वयस्य, पश्य पश्य। आश्चर्यमाश्चर्यम्! एषा सलिल-चलत्-करपल्लव-प्रभा-विस्तृतेनापहसितशोभं करोति कमलवनमवचिन्वती।

राजा। वयस्य, सत्यमेवैतत्। पश्य।

अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशा
याताया विगलत्पयोधरपटाद् द्रष्टव्यतां कामपि।
अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता
नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम्॥२।७।

आरण्यका। ( भ्रमरसम्बाधं नाटयन्ती ) हा धिक् हा धिक्! एते खल्वपरे परित्यज्य कमलिनीं नीलोत्पलवनानि समापतन्तो निपुणतरं बाधमाना आयासयन्ति मां दुष्टमधुकराः। हला इन्दीवरिके, परित्रायस्व माम्। परित्रायस्व माम्। एते दुष्टमधुकराः परिभविष्यन्ति।

विदूषकः। भो वयस्य, पूर्णास्ते मनोरथाः। यावदेव गर्भदास्याः सुता नागच्छन्ति तावदेव त्वमपि तूष्णीको भूत्वोपसर्प। एषापि सलिलशब्दश्रुतेन पदसञ्चारेणेन्दीवरिकागच्छतीति ज्ञात्वा त्वामेवावलम्बिष्यते।

राजा। साधु वयस्य साधु! कालानुरूपमुपदिष्टम्। (इत्यारण्यकासमीपमुपसर्पति।)

---

## प्रथमो वोत्तमो वा

Statesman पत्रे (Friday October 9, 1959 p. 1, col. 7) मुख्यमन्त्रिणः श्रीमतो विधानचन्द्ररायमहोदयस्य वचने दृष्टम्—Except *me*, who also *happens* to be the Chief Minister of the State इत्यादि। me इति सर्वनामास्मच्छब्दनिष्पन्नमुत्तमपुरुषकम्। एतत्परामर्शकं who इति पदमप्युत्तमपुरुषकमेव। अत एव तस्योत्तमपुरुषया क्रियया योगोऽपेक्ष्यते। वचनगतं helps-पदं प्रथमपुरुषकमेव। अपि नाम रायमहोदयः प्रथमोत्तमभेददूरीकरणे गृहीतदीक्षः communist सञ्जातः। अथवा यस्मिन्पत्र इदं मुद्रितं तस्यैवाक्षरग्रथकः सर्वभेदविभञ्जने बद्धपरिकरो वर्तते।

तत्रैव वर्तते—But I was quite a bit amazed at *the* independent and prominent newspaper like The Statesman taking up this cue in its editorial इति। अत्र indefinite article anकारस्थाने definite article theकारः प्रयुक्तः। अनयोर्विभेदश्छात्राणामध्यापकानां च शिरःशूलमुपजनयति, अत एव भेदस्य मूले कुठारमर्पयता युक्तमेवानुष्ठितम्! भाषायां सङ्करस्यापि समीचीनमुदाहरणं वाक्यमिदम्।

Amazed at *an* independent and prominent newspaper like The Statesman + amazed at *the* independent and prominent newspaper The Statesman = amazed at *the* independent and prominent newspaper like The Statesman.

---

## पाणिनीया पद्धतिः

Fred was being sent to a boarding-school.

"Now," said his father, "when you write don't send me pages and pages describing all the pupils, where they come from and what class they are in, because I really shall not have time to read it all."

A few weeks later his father received the following letter: "Dear Father,—S.O.S., L.S.D., R.S.V.P.—Fred."

---

कवीन्द्र-रवीन्द्रनाथस्य

# देवताग्रासः

[ श्रीस्फटिकलाल-दासकृततात्पर्यानुवादः ]

ग्रामेषु सर्वेषु चचार वार्ता मैत्राख्यविप्रो बहुभिः समेतः।
स्नानार्थमेति प्रतिवेशिसार्थैर्गङ्गाब्धिसंयोगपवित्रतीर्थम् ॥१॥
स्त्रियः पुमांसो युवबालवृद्धाः समागताश्चूर्णिनदीप्रतीरम्।
यात्रानिमित्तं च बभूव सज्जं नौकाद्वयं तत्र समुद्रगामि ॥२॥
पुण्यार्थिनी काचन मोक्षदाख्या नारी समेता तमुवाच मैत्रम्।
"त्वयाग्रजन्मन्! विधवातिपापा गच्छाम्यहं सङ्गमपुण्यतीर्थम् ॥"३॥
निर्बन्धशीलां न तु युक्तिवश्यां तां वीक्ष्य मैत्रो भृशमार्तिखिन्नाम्।
उपायशून्यः स्वयमिच्छुकोऽपि न स्थानमस्तीति जगाद वाचम् ॥४॥
तमाचचक्षे विधवाश्रुनेत्रा "गृह्णामि पादौ तव पूज्यदेव।
स्थानं कथञ्चिद् विदधामि पार्श्वे माशाविभङ्गं सदयं कुरुष्व ॥"५॥
श्रुत्वा तदीयं करुणं वचस्तद् बभूव विप्रोऽपि दयार्द्रचित्तः।
द्विधाकुलस्तां स तथाप्यपृच्छद् "बालस्य सूनोस्तव का गतिः स्यात् ॥"६॥
निशम्य सा तं प्रतिवाचमूचे "राखालनामा तनयोऽस्ति यो मे।
स्थाता स्वमातुःष्वसुरन्तिके स स्निह्यत्यमुष्यां नितरां बतासौ ॥७॥
तस्मिन् प्रजाते मम जीविताशा नासीच्चिरं सूतिरुजान्वितायाः।
स्वस्तन्यदानेन तदाम्बदा मे स्वसातियत्नेन शिशुं पुपोष ॥८॥
तदाप्रभृत्येव निरन्तरं स तदन्तिके तिष्ठति मां विहाय।
दुःशासनोऽसौ मयि दण्डदायां पलाय्य मातुःष्वसुरङ्कमेति ॥९॥
स्वसापि सा मे निजपुत्रकल्पं तमीक्षते स्नेहवशं प्रयाता।
अतोऽधिकं शर्म विलप्स्यते स मत्तः प्रियायाः सविधे हि तस्याः ॥"१०॥
प्राप्यैव यात्रानुमतिं द्विजस्य त्वरान्विता सापि गुरून् प्रणम्य।
आपृच्छ्य साश्रूः स्वसखीश्च सर्वाः शय्यादि बद्ध्वा गमनोद्यताभूत् ॥११॥
समेत्य घट्टं ददृशे तया तु राखालनामा स सुतः स्वकीयः।
निःशङ्कमागत्य कुतोऽपि पूर्वं नौकैकपार्श्वे स्थित एव तूष्णीम् ॥१२॥
पप्रच्छ माता गुरुविस्मयेन "समागतोऽरेऽसि किमर्थमत्र।"
चख्यौ स बालो "ननु यामि सिन्धुं," सोवाच "दस्यो! त्वरयावरोह ॥

उन्मील्य नेत्रे स दृढस्वरेण सिन्धुं प्रयामीति जगाद भूयः ।
धृत्वास्य बाहू निचकर्ष माता नौकां च धृत्वा तनयोऽवतस्थे ॥१४॥
सस्नेहवाचा द्विज आचचक्ष "यथेप्सितं तिष्ठतु बालकोऽयम् ।"
सकोपमूचे जननी च पुत्रम् "आयाहि सिन्धौ विसृजामि रे त्वाम् ॥"१५॥
कर्णौ गते स्वे वचने रुरोद वक्षो जनन्या अनुतापविद्धम् ।
निमील्य नेत्रे प्रसभं स्वचित्ते सस्मार नारायणनाम नारी ॥१६॥
अथाङ्कमारोप्य सुतं द्रुतं सा सुस्निग्धहस्तेन ममर्द गात्रम् ।
आहूय तां मैत्र उवाच गुप्तं "न शोभते धिग् वचनं मुखे ते ॥"१७॥
राखालयात्रां जलधौ निशम्य मातुःष्वसास्य द्रुतविक्रमेण ।
आगत्य तीरं निजगाद "वत्स ! प्रतिष्ठसे कुत्र मया विहीनः ॥"१८॥
हसन् बभाषे प्रसभं स बालो "मातुःष्वसर्भो ! उदधिं प्रयामि ।
कार्या मदर्थे न तु कापि चिन्ता प्रत्यागमिष्याम्यचिरेण गेहम् ॥"१९॥
उन्मादिनीव प्रमदाथ विप्रमाहूय चख्यौ "शृणु पूज्यदेव ।
सुचञ्चलोऽयं सुतकल्पबालः का तं नियच्छेद् गतमब्धिकच्छम् ॥२०॥
आजन्म यो न क्षणमास्थितोऽभून्मातुःष्वसारं परिवर्ज्य दूरे ।
तमेव बालं वद नेष्यसि क्व प्रत्यर्प्य तं मे ननु याहि तर्हि ॥"२१॥
राखाल ऊचे "जलधिं विलोक्य प्रत्यागतः स्यामचिरेण भूयः ।"
उवाच विप्रो "मयि वर्तमाने चिन्तां कृथा मा प्रियमन्तरेण ॥२२॥
विराजते सम्प्रति शीतकालो नदीसमुद्रं सकलं हि शान्तम् ।
न यात्रिमध्ये विपदस्ति कापि माभ्यां परं तं पुनराप्स्यसि त्वम् ॥"२३॥
संस्मृत्य दुर्गां शुभलग्नमध्ये नावौ विमुक्ते अथ पोतवाहैः ।
साश्रूणि कृत्वा नयनानि तस्थुः कूले च तूष्णीं रमणीकुलानि ॥२४॥
पुण्याभिषेकं विधिना समाप्य मैत्रादयस्ते सकलाः पराह्णे ।
अपेक्षमाणामुदधिप्रवाहं प्रत्यागताः स्वां तटबद्धनावम् ॥२५॥
कीलाललीलां जलधेर्विलोक्य गते समाप्तिं कुतुके कदाचित् ।
राखालचित्तं सततं गृहोत्कं रुरोद मातुःष्वसुरङ्कमेतुम् ॥२६॥
क्रूरप्रलुब्धासितचिक्कणाङ्गफणीव लक्षं चलजिह्वभोगान् ।
उत्तोल्य नित्यं जलमम्बुराशेर्वाञ्छत्यसून् क्षौणिगतार्भकाणाम् ॥२७॥
हे मृत्तिके ! स्नेहमयी त्वमेका सुश्यामकान्तिः सुकुमारदेहा ।
आनन्दगेहं भुवनस्थितानां सर्वंसहा स्थैर्यवती पुराणी ॥२८॥

यः कोऽपि यत्रैव वितिष्ठतेऽत्र त्वयाङ्ग मुग्धे ! स कियद्‌बलेन ।
आकृष्यतेऽदृश्यभुजो प्रसार्य खं चक्रवालायतशान्तवक्षः ॥२९॥
प्रतिक्षणं चञ्चलबालकोऽसौ पप्रच्छ मैत्रं नितरामधीरम् ।
"आयिष्यते देव कदात्र सिन्धौ स्रोतःप्रवाहो गमनानुकूलः ॥"३०॥
प्रपन्नकालं सहसाजगाम प्रवृद्धरंहोऽचलवारिमध्ये ।
तटद्वयस्या जनतापि सद्यः सञ्जीविताभूत् पुनराशयेव ॥३१॥
नौकामुखं तूर्णमभूद् विवृत्तं तथातता रज्जुरपि प्रशब्दम् ।
विवेश नौका कलशब्दगीतैः सिन्धोर्विजेतेव रथोऽपगां च ॥३२॥
जलोन्नतिं वारिनिधेर्विलोक्य स्मृत्वेष्टदेवांस्तरिकर्णधारः ।
नौकाममुञ्चत् त्वरितं विधाय मुखं हि तस्या दिशि चोत्तरस्याम् ॥३३॥
क्रोशौ गतानां न गतोऽस्तमर्कः क्रमेण वायोर्ववृधे तु वेगः ।
उत्तालमासीत् सरितश्च वक्षः—स्रोतःसमीरौ समरे प्रवृत्तौ ॥३४॥
तारस्वरर्यात्रिगणा निचख्यु "स्तूर्णं तटं भोस्तरणीं नयध्वम् ।"
क्वास्ते तु तीरं ! सकलासु दिक्षु संलक्ष्यते केवलमम्बुराशिः ॥३५॥
उन्मत्तमम्भः शतकोटिहस्तैस्तालं ददौ ताण्डवरुद्रनृत्ये ।
उद्दामफेनोच्छलवीचिघोषैरदत्त गालिं प्रति चान्तरीक्षम् ॥३६
प्रक्षीणवेला वनराजिनीला दृष्टा बभूवैकत एव दूरे ।
तथान्यतो हिंस्रबिलुब्धवारि गर्जद् वितष्ठे क्षुभितं प्रतीच्याम् ॥३७॥
नियन्त्रणाबाह्यदशां प्रयाते कर्णे च नौका नितरां टलन्ती ।
अशान्तमूढासवपानमत्तजनस्य लीलां प्रकटीचकार ॥३८॥
भयोत्थकम्पो हिमवातसङ्गं विलभ्य लोकान् भृशमर्दति स्म ।
कश्चिद् विमूढो हतवाग् वितष्ठे चक्रन्द कोऽपि प्रियमाह्वयंश्च ॥३९॥
स आर्यमैत्रोऽपि विशुद्धवक्त्रो नेत्रे निमील्याजपदिष्टमन्त्रम् ।
क्रोडे च मातुर्वदनं पिधाय राखाल आराद्विरवं चकम्पे ॥४०॥
ततो विपन्नस्तरिकर्णधार आहूय सर्वानिदमाचचक्षे ।
"युष्माकमेकः खलु देवताया आश्रुत्य किञ्चिन्नहि दत्तवांस्तत् ॥४१॥
तस्मादकाले झटिकोद्थितैषा स्रोतस्वती चास्ति करालमूर्तिः ।
प्रतिश्रुतं रक्षतु सोऽधुना तत् क्रीडा न युक्ता सह रुष्टशक्त्या ॥"४२॥
धनं च वस्त्रं च यदेव किञ्चिदासीत् समीपे तरणीस्थितानाम् ।
क्षिप्तं जले तद्व्यविचार्य सर्वैस्तथापि नाभूत्तरिरम्बुशून्या ॥४३॥

स कर्णधारो निजगाद भूयो "निशम्यतां भो अधुनापि मे वाक्।
देवाय देयं वद केन वित्तमदत्तमेव ह्रियते गृहं स्वम् ॥"४४॥
उत्थाय मैत्रः सहसा जगाद व्यावर्त्य वक्त्रं प्रति मोक्षदां सः।
"एषैव देवाय सुतं निवेद्य गृहं पुनः कर्षति चौर्यवृत्त्या ॥"४५॥
ते यात्रिवृन्दा युगपज्जगर्जु-"र्निक्षिप्यतां स त्वरयाम्बुमध्ये।"
उवाच मातास्य भयेन विप्रं "रक्षार्य ! रक्ष प्रसभं सुतं मे ॥"४६॥
एवं समुच्योरसि सा वराकी दधार पुत्रं निखिलात्मशक्त्या।
निर्भर्त्सयंस्तां निजगाद विप्र-"स्त्रातेति किं मामधुना ब्रवीषि ॥४७॥
मात्रा त्वया चेत्तनयो विसृष्टः कथं हि रक्ष्यो वद सोऽधुना मे।
ऋणं ततः शोधय देवताया न सत्यभङ्गं न निमज्जयैतान् ॥"४८॥
आचष्ट नारी "कृतकादमर्षान्मयातिमूर्खाबिलया यदुक्तम्।
तदेव सत्यं किल जातमद्य न मातुरन्तःस्थितवागनुक्ता ॥४९॥
श्रुत्वा तदानीं मुखभाषितं मे मिथ्येति किं हे भगवन्! न बुद्धम्।
एका श्रुता सा बहिरागता वाङ् नाकर्णितं किं हृदयं जनन्याः ॥"५०॥
ते पोतवाहा वचनं ब्रुवत्याः प्रसह्य पुत्रं जगृहुर्मिलित्वा।
निमील्य नेत्रे स च मैत्रविप्रो व्यावृत्तवक्त्रः स्थित एव तूष्णीम् ॥५१॥
निष्पिष्य दन्तैरधरं बलेन दृढं कराभ्यां पिदधौ स कर्णौ।
विवेकविद्युत्कशताड्यमान-स्तस्थौ ज्वलन् वृश्चिकदष्टकल्पः ॥५२॥
मातुःष्वसुर्भो इति जातभीते-राह्वानशब्दोऽन्तिमकालजन्मा।
प्रविश्य रुद्धावपि विप्रबन्धो-र्विव्याध कर्णाविव तप्तशल्यम् ॥५३॥
तां मोक्षदाख्यां रमणीं समीक्ष्य निःसंज्ञदेहां पतितां स्वपादे।
चीत्कृत्य विप्रः सहितुं न शक्तस्तिष्ठेति वाचं करुणं जगाद ॥५४॥
उन्मील्य नेत्रे चकिते स बालो मुहूर्तमात्रं सरिदूर्मिसंस्थः।
उदीर्य मातुःष्वसुरेकनाम घनान्धकारे विलयं जगाम ॥५५॥
उद्भिद्य नद्युच्छलवारिराशिं सकृच्च हस्तौ लघुमुष्टिबद्धौ।
आकाशगात्रे शरणं विचित्य जातावदृश्यौ सलिले हताशौ ॥५६॥
"प्रत्याहरिष्ये पुनरेव रे त्वाम्"—उक्त्वेति विप्रः सलिले पपात।
पुनश्च तस्मान्न समुत्थितोऽभद् गतोऽस्तमर्कौ दिशि पश्चिमायाम् ॥५७॥

# पुस्तक-परिचयः

काव्यसमीक्षा। श्रीनरेन्द्रनाथ चौधुरी, एम् ए, डी-लिट्, काव्यव्याकरणतीर्थेन विरचिता। मोतीलाल बनारसीदासेन बंग्ली रोड जवाहरनगर दिल्ली ६ इत्यतः प्रकाशिता। पृष्ठसंख्या ३०,३४९,८०। मूल्यं विंशती रूपकाः।

अलङ्कारादिशास्त्रेषु कृतभूरिपरिश्रमेण लब्धप्रतिष्ठेनाध्यापकेनायुष्मता नरेन्द्रनाथ-चतुर्धुरीणेन विरचितेयं काव्यतत्त्वसमीक्षा समावर्जयति मानसानि सहृदयानाम्। अत्रालङ्कारशास्त्रप्रस्थानानि विविधप्रामाणिकमतोद्धरणपूर्वकं सुनिपुणं समुपवर्णितानि। समुद्धृतवाक्यानां पाठान्तराण्यपि बहुत्र सन्निविष्टानि। अत्र शब्दार्थध्वनिस्फोटरसानां विस्तरेण विमर्शो विलसति। अन्ते चाङ्गलभाषया मूलस्य सारः सङ्कलितः। पुस्तकमिदं प्रतिपदमेव ग्रन्थकृतो वैदुष्यं च सूक्ष्मदर्शित्वं च प्रत्याययति। चिरं जीवतु श्रीमान् नरेन्द्रनाथचतुर्धुरीणमनीषी चिरं च विरचय्य प्रबन्धानेवंविधान् संसेवतां सुरसरस्वतीम्।

इदानीं समालोचकधर्ममनुपालयद्भिरस्माभिर्दोषा अपि केचन प्रदर्श्यन्ते। चारुतरतरुण्याः कपोलकज्जलमिवैते ग्रन्थस्य रामणीयकं सर्वथा नापाकुर्वन्ति।

ग्रन्थेऽस्मिन् सर्वत्र विराजमानो विसन्धिदोषः सुतरां समुद्वेजयति चेतांसि विपश्चिताम्। १६०तमपृष्ठे वेणीसंहारतः समुद्धृते श्लोके नित्या संहितैकपदवत्पादेष्वर्धान्तवर्जमिति वामनानुशासनं समुल्लङ्घ्य "मथ्नामि कौरवशतं समरे न कोपात् दुःशासनस्य रुधिरं न पिबाम्युरस्तः" इति मुद्रापितम्। २२९तम पृष्ठे तैत्तिरीयोपनिषद उद्धृतम्—"यदेष आकाशे आनन्दो न स्यात्" इति। २५९तम पृष्ठेऽभिनवभारतीतः समुद्धृतम्—किंचिद्जिहासुस्तत्र वैराग्यात् प्रशमं भजते। इति। अत्र च्युतसंस्कृतिदोषः स्फुट एव। सप्तदशपृष्ठेऽप्ययं दोषो जागर्ति। ५६तमपृष्ठे दृश्यते—"अतः आद्यः पक्षः असंभवपराहतः" इति।

आलङ्कारिकशिखामणिनाचार्यदण्डिना विस्पष्टमेवोक्तम्—

न संहितां विवक्षामीत्यसन्धानं पदेषु यत्।
तद् विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम्॥

इति। सहृदयशिरोमणिना जगन्नाथरायेणाप्युक्तम्—स्वेच्छया सन्ध्यकरणं सकृदप्यश्रव्यमिति।

न जानीमः किमिति विग्रहवर्जनविनिबद्धपरिकरेऽपि राष्ट्रे सुदूरं समुत्सारयन्ति सन्धिं साम्प्रतिकाः प्रबन्धार इति।

३०तम पृष्ठे दृश्यते—अर्थस्य व्यञ्जकत्वे तत् शब्दस्य सहकारिता...इत्युक्त्या च स्वकण्ठेनैवोद्घुष्यता मम्मटेन उभयोरविनाभावित्वं परमार्थतस्तुल्यप्राधान्यं चावेदितम्। इति। अत्रोद्घुष्यतेति पदं प्रामादिकं घोषतेर्दैवादिकत्वाभावात्। येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना। स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥ इति शाकुन्तल-श्लोके कर्मणि यक्।

महिम्नः स्तोत्रमित्यत्रैकपदत्वं प्रामाणिकानां सम्मतं न पुनः पृथक्पदत्वम्। महिम्नः पारं ते परमविदुषो यद्यसदृशीत्यादेः स्तोत्रस्य प्रतीकमुपादाय नाम्नः प्रवृत्तेः।

तिलशस्तिलशो वर्णयामास (पृः २३) इत्यत्र तिलशः-पदस्य द्विरुक्तिर्वङ्गभाषा-वासनावासितचित्तत्वं ग्रन्थकृतः संसूचयति। संस्कृतभाषायामेकं तिलश एव पर्याप्तम्। अत एव कविकुलचूडामणिना कालिदासेन कुमारसम्भवे प्रयुक्तम्—तदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् [ ४।२७ ] इति।

३३तमपृष्ठे दृश्यते—[ यथा ] घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामीति। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान् प्रयोक्ष्य इति। अत्र न तद्वच्छब्दान् प्रयोक्ष्यमाण इत्येव पाठः साधीयान्।

२१०तमपृष्ठे दृश्यते—

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किंवाञ्चितभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि॥

इति। शुद्धिपत्रतो विज्ञायते—किंवाञ्चितेत्यत्र किं चाञ्चितेति पठनीयमिति। श्लोकोऽयममरुशतकगतः। तत्र कोपाञ्चितेति सङ्कुचितेति पाठद्वयमुपलभ्यते। सङ्कुचित-भ्रूलतमिति पाठः साधीयानिति प्रतिभाति।

सत्स्वप्येवंविधेषु केषुचिद्दोषेषु काव्यसमीक्षापुस्तकस्य परमोपादेयत्वे नास्ति लेशतोऽपि संशयावकाशः। किं वास्ति जगति वस्तु सर्वथा विनिर्मुक्तं दोषेण? अत एव कविचक्रवर्तिना कालिदासेनोक्तम्—प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिरिति। आशास्यते च पुनर्मुद्रणावसरेऽत्र प्रदर्शितास्तदितरे च दोषा निराक्रियेरन्निति। त्वरन्तां साहित्यशास्त्रस्यच्छात्राश्चाध्यापकाश्च ग्रन्थस्यास्य संग्रहणायेति शम्।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

| | | |
|---|---|---|
| December, 1959. | १८८१-शकीय पौषस्य १४श-वर्षस्य चतुर्थ-संख्या | Vol. XIV No. 4 |

## आभाणकमाला

Success does not come to the sleeper.
Germ. Siegen kommt nicht vom Liegen.
न खलु सुप्तं समुपैति सिद्धिः। न खलु सुप्तः सिद्धिं समधिगच्छति।
"न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।"
French. Loup dormeur ne goûte pas de la chair du mouton.
न खलु निद्राणो वृको मेषमांसं समास्वादयति।
The stone which is rolling gathers no sea-weed.
Greek. Lithos kulindomenos to phūkos ou poieî.
न खल्वावर्तमाने प्रस्तरे समुद्रतृणं संसजति।
Latin. Saxum volutum, non obducitur musco.
A rolling stone gathers no moss.
न खलु पर्यावर्तमानः पाषाणः शैवालं संगृह्णाति।
Latin. Lapis qui volvitur algam non generat.
A rolling stone finds no sea-weed.
French. Pierre qui roule n' amasse point de mousse.
German. Wälzender Stein wird nicht moosig.
Lat. Non fit hirsutus lapis hinc alque inde volutas.
The rolling stone never grows a beard.
न खलु पर्यावर्तमानस्य पाषाणस्य श्मश्रु प्ररोहति।
Latin. Planta quae saepius transfertur non coalescit.
A plant often transplanted does not thrive

न खलु पुनः पुनः स्थानात् स्थानान्तरे रोप्यमाणो वृक्षकः पोषमधिगच्छति।

French. La pierre souvent remuée n'amasse pas volontiers mousse.

न खलु पुनः पुनः स्थानात् स्थानान्तरं नीयमानः पाषाणः सशैवालासङ्गः सञ्जायते।

---

# रासभसरितौ

आस्तां गङ्गातीरे सचलाचलनामानौ रासभौ। ग्रीष्मे तटवर्तीनि तृणान्यूर्ध्वशोषं शुष्काणीति सचलेनोक्तम्, तीरेऽत्र धूलिं सिकताश्च वर्जयित्वा किमपि नास्ति। तदेहि भ्रातः पारेगङ्गं गच्छाव। तत्र सरससरसानि मरकतकल्पानि तृणजालानि मनोहृत्य भोक्ष्यावहे। इति। अचलः पुनः स्वभावसिद्धालस्यात् प्रत्युवाच नाहं गमिष्यामि। किमिति सरित्तरणेनात्मानमार्द्रीकुर्याम्? सर्वथा प्रतीक्षिष्ये। इति।

किं वा प्रतीक्षिष्यसे?

यावत्सलिलमिदं निर्गतं स्यात् तावत् प्रतीक्षिष्ये। इदं च कस्मादपि स्थानादागच्छति। यदा चैतस्य समागमनस्य समाप्तिः स्यात्, लेशतोऽपि सलिलं नावशिष्येत, तदा शुष्केण पथा शफमप्यनार्द्रीकृत्यापरपारं गत्वाकण्ठं तृणं भक्षयिष्यामि।

न खलु तदर्थमहं प्रतीक्षणं समीचीनं मन्ये। वर्षायुतेन वाब्दलक्षेण वा सरिदियं नैव शोषमुपयास्यति। त्वं तावन्मूढधीरलसश्च। आयासमन्तरेणैवावां स्वल्पं सलिलमिदं सन्तरेव, ततश्च कर्णेहत्य सरसतृणानि भक्षयेव। अपि नाम जलाद्भीतोऽसि?

नहि नहि। परं सलिलप्लावनं न मे रोचते। त्वं तावत् प्रतीर्य पारान्तरमुपेहि, अहमत्रैवावसरप्रतीक्षः स्थास्यामि। सहसा विदधीत न क्रियामिति हि नीतिशास्त्रकारा उपदिशन्ति।

भवतु। अहमिदानीमेव प्रतरामि।

कतिपयनिमेषानन्तरं सोऽपरपारे सरसशष्पाणि मनोरथपूरं भुञ्जानोऽदृश्यत। तत्र च प्रभूताः सुमनोहराः सरसा बालवृक्षका आसन्निति प्रतीयते स्म।

अरे मूढ, अत्रागच्छ। अत्याश्चर्यमिदं स्थानम्! इति तेन नद्या अवारपाराद् उच्चैः शब्दायितम्।

रासभसुलभनिर्बन्धपरेण तेनोक्तम्—नाहमागच्छामीति।

ये खलु जीवने नवनवान् प्रयासान् आतिष्ठन्ति, नूतननूतनदेशान् विचरन्ति, विघ्नैः पुनः पुनः प्रतिहन्यमानास्तान् समुत्सारयन्ति त एव सिद्धिं लभन्ते। ये पुनर्दीर्घसूत्रतामेवावलम्बन्ते, कालेन विघ्नाः स्वयमेव दूरीभवन्तीति विभावयन्तो निश्चेष्टमेवावतिष्ठन्ते ते दुःखमेवाप्नुवन्ति।

# Bhakti in the Priyadigaṇa

[ Kshitish Chandra Chatterji ]

In the Naiṣadhacarita occurs the stanza :

यदतिमहतीभक्तिर्भानौ तदेनमुदित्वरं
त्वरितमुपतिष्ठस्वाध्वन्य त्वमध्वरपद्धतेः ।
इह हि समये मन्देहेषु व्रजन्त्युदवज्रता-
मभि रविमुपस्थानोत्क्षिप्ता जलाञ्जलयः किल ॥१९।४१

The first half is thus explained by Mallinātha :

'अध्वरस्य' यज्ञस्य 'पद्धतेः' पथः 'अध्वन्य' नित्यपान्थ ! हे नित्यज्ञानानुष्ठाननिरत महाराज ! 'यत्' यस्मात् 'त्वम्' भवान् 'भानौ' सूर्ये अतिमहती अत्युत्तमा भक्तिः अनुरागविशेषः यस्य स तादृशः असीति शेषः । भक्तिशब्दस्य प्रियादिषु पाठात् पुंवद्भावाभावः । 'तत्' तस्मात् 'उदित्वरम्' उद्यन्तम् 'एनं भानुम्' 'त्वरितम्' 'उपतिष्ठस्व' उपास्स्व ।

I am inclined to regard अतिमहती and भक्तिः as two separate words and construe thus : हे अध्वरपद्धतेः अध्वन्य यत् [ते] भानौ भक्तिः अतिमहती—तत् त्वम् उदित्वरम् एनम् त्वरितम् उपतिष्ठस्व । In this construction the question of पुंवद्भाव does not arise. There is another reading : यदसि महतीभक्तिर्भानौ etc. Here, of course, महतीभक्तिः is a Bahuvrīhi compound qualifying त्वम्.

According to Bhoja's interpretation of Pāṇini's rule, which appears to be the only reasonable interpretation, पुंवद्भाव is not barred here. And where पुंवद्भाव is not barred महती changes into महा. And as उत्तरपदविधि is allowed here अतिमहती will also be changed into अतिमहा.

The Bhāṣyakāra while discussing the advantages and disadvantages of the Paribhāṣā प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् notes the Vārttika महदात्त्वे प्रियादिषु and says : महदात्त्वे प्रियादिष्वतिप्रसङ्गो भवति । आन्महतः समानाधिकरणजातीययोरिति यथेह भवति महान् महाप्रियः एवं महती प्रियास्य महतीप्रिय इत्यत्रापि स्यात् ।

किमुच्यते प्रियादिष्विति ?

यत्र पुंवद्भावः प्रतिषिध्यते। यत्र तु न प्रतिषिध्यते भवितव्यमेव तत्रात्त्वेन।

Kaiyaṭa illustrates the last sentence thus : महाजङ्घेत्यादौ.

Nāgeśa says : महती जङ्घा यस्येति समासे स्त्रिया इति पुंवत्त्वे आत्त्वं भवत्येवेत्यर्थः। ( महती will be first changed into महत् by पुंवद्भाव and महत् will then be changed into महा. )

We have our doubts about the correctness of Nāgeśa's explanation. Since the Vārttika definitely mentions प्रियादिषु we are inclined to think that the Paribhāṣā प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् will apply here and that महती will be changed into महा in one single operation without the intervention of पुंवद्भाव.

Regarding तदन्तविधि Bhaṭṭoji says in his Prauḍhamanoramā :

पदाधिकारे तदन्तस्यापि ग्रहणान्महच्छब्दान्तस्यापि। कथं तर्हि परममहत्परिमाणमिति? परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुष इति वृद्धाः। यत्तु वर्धमानेनोक्तम्—इष्टकेषीकामालानामित्यत्र तदन्तविध्युपसंख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्तीति तद् भाष्यकैयटविरुद्धम्। तथाहि पदाधिकारे प्रयोजनम् इष्टकचितम् पक्वेष्टकचितम् इत्यादि भाष्य उदाहृतम्। कैयटेन च पदशब्देनोत्तरपदं गृह्यत इति व्याख्यातम्। एतदेवार्थतः काशिकायामुपनिबद्धं न त्विष्टकेषीकेत्यत्र स्वतन्त्रमुपसंख्यानमस्ति।

The Tattvabodhinī is more explicit :

इह उत्तरपदाधिकारे पूर्वपदमाक्षिप्यते। तच्च महता विशेषितमिति तदन्तविधिर्लभ्यते। ग्रहणवतेति निषेधस्तु प्रत्ययविधिविषय इत्युक्तत्वात्। तेन महाबाहुवदतिमहाबाहुरिति प्रयोगो भवति। परममहत्परिमाणमित्यत्र तु परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषोऽभ्युपगम्यत इति न तत्रात्त्वप्रसक्तिरिति वृद्धाः। यत्तु वर्धमानेनोक्तम्—इष्टकेषीकामालानामित्यत्र तदन्तविध्युपसंख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्ति, तेन परममहत आत्त्वं नेति तद् भाष्यकैयटविरुद्धम्। तथाहि येन विधिरिति सूत्रे पदाधिकारे प्रयोजनमिष्टकचितं पक्वेष्टकचितमिति भाष्य उदाहृतम्, कैयटेन च पदशब्देनोत्तरपदं गृह्यत इति व्याख्यातम्। एतदेवार्थतः काशिकायामुपनिबद्धं न त्विष्टकेषीकेत्यत्र कात्यायनीयमुपसंख्यानमस्ति।

# वेदार्थविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ऋग्वेदे बहुकृत्व आद्युदात्तोऽरुषीशब्दोऽन्तोदात्तोऽरुषशब्दश्चोपलभ्येते। शब्द-द्वयमिदं भाष्यकृतः सायणाचार्यस्य शिरःशूलमुपजनयति। निघण्टावश्वनामस्वरुष उषोनामसु चारुषी गतिकर्मसु "चारुषतिशब्द आम्नायते। निरुक्ते यास्काचार्येणोक्तम्—अरुषीरारोचनात् [ १२।७ ] इति।

आद्युदात्तोरुश्-शब्दः क्षतार्थकः, अत एवामरसिंहेनोक्तं—व्रणोऽस्त्रियामीर्ममरुरिति। तस्मादच्प्रत्ययेनान्तोदात्तो लोहितार्थकोऽरुष-शब्दो निष्पन्नः। शार्ङ्गरवादित्वान् ङीनि 'अरुषी'शब्द आद्युदात्तः। स्त्रीविषयवर्णाक्षुपूर्वाणाम् [ फि० सू० २।२० ] इति फिट्सूत्रेणापि 'अरुषी'शब्दस्याद्युदात्तत्वं सिध्यति।

युञ्जन्ति ब्रध्नमरुषम् [ ऋ० सं० १।६।१ ] इत्यत्र सायणाचार्येणोक्तम्—अरुषं हिंसकरहिताग्निरूपेणावस्थितम्।...उष [मष ?] रुष रिष हिंसार्थाः। रोषन्तीति रुषा हिंसकाः। इगुपधज्ञाप्रीकिरः क इति कः। प्रत्ययस्वरेणान्तोदात्तः। न सन्ति रुषा यस्यासावरुषः। नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। अमि पूर्वं इति पूर्वरूपे एकादेश उदात्तनोदात्त इत्युदात्तत्वम्। इति। अतिमात्रं क्लिष्टमेतद् व्याख्यानम्।

अत्र स्कन्दस्वामी। रुशतिर्दीप्त्यर्थः रुशद्वत्सा रुशतीति [ ऋ० सं० १।११३।२ ] दर्शनात्। तस्य वा रोचतेर्वा दीप्तिकर्मण आङ्पूर्वस्येदं रूपम्, आङश्च ह्रस्वत्वम्। आरुशम् आरोचमानं दीप्तमित्यर्थः। अरुषत्यार्यतीति गतिकर्मसु पाठादरुषेर्गत्यर्थस्यारुषशब्दो गन्तृवचनः। शत्रून् यज्ञान् वा प्रति गन्तारम्। इति। एतदपि क्लिष्टम्।

युक्ष्वा ह्यरुषी रथे [ ऋ० सं० १।१४।१२ ] इत्यत्र सायणाचार्येणोक्तम्—अरुषीः। ऋ गतौ। ऋच्छन्ति गच्छन्तीत्यरुष्यो वडवाः। ऋहनिभ्यामुषन्। धातोर्गुणो रपरत्वम्। नित्त्वादाद्युदात्तोऽरुषशब्दः। तस्मात् स्त्रियां छान्दसो ङीप्। शसि प्रथमयोः पूर्वसवर्ण इति दीर्घः। इति। अरुषशब्दादन्तानुदात्ताद् अन्यतो ङीष् इति ङीषि प्राप्त छान्दसो ङीप् तेनारुषीशब्दस्याद्युदात्तत्वं निराबाधम् इति भाष्यकृता-माशयः। दुर्भाग्यतः पुनरस्माकम् अरुषशब्दः सर्वत्रैवान्तोदात्त उपलभ्यते। ऋहनिभ्यामुषन् इति सूत्रं पञ्चपाद्याम् ऋहनिभ्यामूषन् इति पठ्यते, दशपाद्यां क्वापि ऋनहिभ्यामुषन् क्वापि ऋनहिभ्यामुषच् इति पठ्यते।

खसारः श्यावीमरुषीमजुष्रन् [ ऋ० सं० १।७१।१ ] इत्यत्र भाष्यकृतोक्तम्—श्यावीं श्याववर्णां रात्रिसम्बन्धात् कृष्णां तत उच्छन्तीं सूर्यकिरणसम्बन्धात् तमो वर्जयन्तीम् अत एवारुषीमारोचमानां यद्वा शुभ्ररूपयुक्तामुषसं न उषोदेवतां गावो रश्मयो यथा सेवन्ते तद्वत्। अरुषीम्। अरुषमिति रूपनाम। ऋ गतौ। ऋहनिभ्यामुषच्। छन्दसीवनिपाविति मत्वर्थीय ईकारः। व्यत्ययेनाद्युदात्तत्वम्। इति।

प्र नीचीरग्ने अरुषीरजानन् [ १।७२।१० ] इत्यत्रापि सायणाचार्येणोक्तम्—नीचीः नितरां सर्वासु दिक्षु गच्छन्तीः अरुषीः आरोचमानाः। यद्वा निर्मलरूपाः।...अरुषमिति रूपनाम। ऋहनिभ्यामुषच् इत्यतेरुषच्। छन्दसीवनिपाविति मत्वर्थीय ईकारः। इति।

उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत [ ऋ० सं० १।९२।२ ] इत्यत्र सायणाचार्येणोक्तम्—स्वायुजः सुखेन रथ आयोक्तुं शक्याः अरुषीः शुभ्रवर्णा गाः अयुक्षत स्वरथेऽयोजयन्। उक्तं च—अरुण्यो गाव उषसाम् [ निघण्टु १।१५।७ ] इति। निघण्ट्वनुसारेण अरुषीः अरुणवर्णा इति व्याख्येयम्।

आ हरयः ससृज्रिरे अरुषीरधि बर्हिषि [ अ० सं० २०।२२।५ ] इत्याथर्वणं मन्त्रं व्याचक्षाणेन सायणेनोक्तम्—अरुषीः अरुष्यः। अरुषमिति रूपनाम। आरोचमानाः। आङ् पूर्वाद्रुचेर्बाहुलकादुषच्। टिलोपः, आङो ह्रस्वश्च। अन्यतो ङीष्। वृषादित्वादाद्युदात्तः। इति। वैयाकरणास्तु अन्यतो ङीष् इति सूत्रे अनुदात्तादित्यनुवर्तयन्ति। अत एव शब्दकौस्तुभे भट्टोजिः—तोपधभिन्नाद् वर्णवाचिनोऽनुदात्तान्तात् प्रातिपदिकात् स्त्रियां ङीष् स्यादिति। अरुषशब्दो ह्यन्तोदात्तः अतोऽत्रान्यतो ङीषिति सूत्रं प्रवृत्तिं नार्हति।

आवेस्तायामरुषशब्दोऽयम् अउरुशरूपेणाविर्भवति, तस्य चार्थः शुभ्रमिति।

---

## वृञ एण्यः [ उ० ३।९८ ]

वरेण्यशब्दः सर्वत्राद्युदात्त उपलभ्यते। तथाचोणादिषु वृञ एण्य इति सूत्रं सन्दृश्यते। स्वायत्ते प्रत्ययविधाने कथं वोणादिसूत्रकार एण्यप्रत्ययं विधाय स्वरार्थं सूत्रान्तरमुपासीत? अत एव वृञ एण्यप् इति वा एण्यन् इति वा पाठः साधीयानिति प्रतीयते। वस्तुतस्तु अर्तेर्निच्च [ उ० ३।१०२ ] इत्यस्यानन्तरम् वृञ एण्यः [ उ० ३।९८ ] इति पठनीयम्। निदित्यनुवृत्तेः सर्वमवदातं स्यात्।

# रवीन्द्रनाथस्य लेखेषु संस्कृतोद्धृतिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( त्रयोदशवर्षतोऽनुवर्तते )

तस्मिन्नेव परिच्छेदे ( र॰ र॰ ४ पृः २८३ ) दृश्यते—यदि च शास्त्रे आछे वटे "स्वनामा पुरुषो धन्यः"—किन्तु उनि अबलाकान्त नामटिर द्वाराइ जगते पौरुष अर्जन करिते व्याकुल नन। ( यद्यपि कामं शास्त्रे वर्तते स्वनामा पुरुषो धन्य इति, परं नासावबलाकान्तेनैव नाम्ना जगति पौरुषमर्जयितुं व्यग्र इति। ) अत्र वङ्गभाषायां यदिच · वटे...किन्तु (.संस्कृतभाषायां यद्यपि · कामम् ·· परम् ) इत्येतेषां सङ्करः परिहर्तव्यः। वङ्गभाषामयवाक्यात् 'यदि च' इति ( संस्कृतानुवादतो 'यद्यपि' इति ) निष्कासनीयमिति प्रतिभाति।

स्वनामा पुरुषो धन्य इति सुप्रसिद्धो वङ्गीयानामाभाणकः। समग्रः श्लोको यथा—

स्वनामा पुरुषो धन्यः पुत्रनामा तु मध्यमः।
अधमः पितृनामा स्यात् पत्नीनामाधमाधमः॥ इति।

अस्मिन्नेव परिच्छेदे दृश्यते—भिन्नरुचिर्हि लोक इति। समग्रः श्लोको रघुवंशस्य षष्ठे सर्ग उपलभ्यते—

अथाङ्गराजादवतार्य चक्षुर्याहीति जन्यामवदत्कुमारी।
नासौ न काम्यो न च वेद सम्यग् द्रष्टुं न सा भिन्नरुचिर्हि लोकः॥

रवीन्द्ररचनावल्याश्चतुर्थखण्डे ( पृः २९२ ) दृश्यते—निकषेर उपर सोनार रेखार मतो इति। एतद् रघुवंशगतं निकषे हेमरेखेवेति [ १७।४६ ] चरणं स्मारयति।

२९३ पृष्ठे वर्तते—'भिक्षु-कक्षे विनिक्षिप्तः किमिक्षुर्नीरसो भवेत ?' इति। समग्रः श्लोकः सुभाषितग्रन्थेषु यथा—

निरवद्यानि पद्यानि यद्यनार्यस्य का क्षतिः।
भिक्षुकक्षविनिक्षिप्तः किमिक्षुर्नीरसो भवेत्॥

इति। भोजप्रबन्धेऽस्य पाठान्तरं सन्दृश्यते—

निरवद्यानि पद्यानि यद्यनाथस्य का क्षतिः।
भिक्षुणा कक्षनिक्षिप्तः किमिक्षुर्नीरसो भवेत्॥ इति।

अस्मिन्नेव पृष्ठे हंसदूतस्य ११५तमं पद्यं दृश्यते—

अलिन्दे कालिन्दीकमलसुरभौ कुञ्जवसतेर्
वसन्तीं वासन्तीनवपरिमलोद्गारचिकुरां।

तदुत्सङ्गे लीनां मदमुकुलिताक्षीं पुनरिमां
कदाहं सविष्ये किसलयकलापव्यजनिनीम् ।

इति। अत्र चिकुराम्। सेविष्ये व्यजनिनी ॥ इति पठनीयम्। हे-पुस्तके (पृः ३९५) किसलयकलापव्यजनिनीति पाठः, रवीन्द्रनाथस्य वङ्गानुवादे स एव पाठोऽनुसृतः।

अस्मिन्नेव परिच्छेदे ( र० र० पृः २९५ ) दृश्यते—

वीथीषु वीथीषु विलासिनीनां मुखानि संवीक्ष्य शुचिस्मितानि,
जालेषु जालेषु करं प्रसार्य लावण्यभिक्षामटतीव चन्द्रः ॥

इति। अत्र "शुचिस्मितानि।" इति मुद्रणीयम्। श्लोकोऽयं सुभाषितग्रन्थ उपलभ्यते।

२९७ पृष्ठ वर्तते—एकश्चन्द्रस्तमो हन्तोति। चाणक्यशतके समग्रः श्लोक उपलभ्यते—

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि।
एकश्चन्द्रस्तमो हन्ति न च ताराः सहस्रशः ॥ इति।

हे-पुस्तके पुस्तकान्तरेषु च "मूर्खशतैरपि" "तारागणैरपि" इति पाठौ।

दशमपरिच्छेदे दृश्यते ( पृः ३०६ )—

वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिनम्।
उभयमेतदुपैत्वथवा क्षयं प्रियजनेन न यत्र समागमः ॥

इति। अमरुशतकगतोऽयं श्लोकः सुभाषितग्रन्थेषूपलभ्यते। "नतु निशैव" इति प्रामादिकम्: "ननु निशैव" इति पठनीयम्। अमरुशतके सुभाषितावलौ च 'प्रियजनेन' इत्यत्र 'प्रियतमेन' इति पाठः।

अस्मिन्नेव परिच्छेदे ( पृः ३०७ ) दृश्यते—

मन्दं निधेहि चरणौ, परिधेहि नीलं
वासः, पिधेहि वलयावलिमञ्चलेन।
मा जल्प साहसिनि, शारदचन्द्रकान्त-
दन्तांशवस्तव तमांसि समापयन्ति ॥

इति। सुभाषितग्रन्थेष्वभिसारिकापद्धतौ सुप्रसिद्धोऽयं श्लोकः। सूक्तिमुक्तावल्यां परिधेहि वासो नीलं पिधेहि वलयावलिमंशुकेन' इति पाठः।

प्रथमद्वितीयचरणयो र्दधातेर्विविधोपसर्गयोगः पण्डितराजजगन्नाथस्य निधानं तीर्थानामिति पद्यं स्मारयति।

३०८-पृष्ठ दृश्यते—"मध्वभावे गुडं दद्यात्" इति। समग्रः श्लोको यथा—

यवाभावे तु गोधूमं मुद्गाभावे तु माषकम्।
मध्वभावे गुडं दद्याद् घृताभावे तु तैलकम्॥

इति। वङ्गीयेष ग्रन्थेषु घटाभाव-पटाभावादिसादृश्येन प्रायेण मध्वाभावे इति मुद्र्यते, अत्र मध्वभावे इति शुद्ध एव पाठ इति कमपि प्रमोदमनुभवामः।

अत्रैव ३११-पृष्ठे हेबारलिनमनुसृत्य लिखितं—

कवीन्द्राणां चेतः कमलवनमालातपरुचि
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीं।
विरिञ्चिप्रेयस्यास्तरुणतरश्रृङ्गारलहरीं
गभीराभिर्वाग्भिर्विदधति सभारञ्जनमयीं॥

कवीन्द्रदेर चित्तकमलवनमालार किरणलेखा ये तुमि, तोमाके यारा लेशमात्र भजना करे ताराइ गभीर वाक्यद्वारा सरस्वतीर सभारञ्जनमयी तरुणलीलालहरी प्रकाश करिते पारे।

आनन्दलहरीगतः षोडशोऽयं श्लोको दुष्टतया मुद्रितः। दुष्टमूलस्यानुसरणेनानुवादोऽपि दुष्टः सञ्जात इति प्रतीयते।

कवीन्द्राणां चेतःकमलवनबालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम्।
विरिञ्चिप्रेयस्यास्तरुणतरश्रृङ्गारलहरी-
गभीराभिर्वाग्भिर्विदधति सभारञ्जनममी॥

इति श्लोकस्य शुद्ध आकारः।

३१३-पृष्ठे दृश्यते—

अपसरति न चक्षुषो मृगाक्षी रजनिरियं च न याति नैति निद्रा। इति।

नलचम्प्वां दृश्यते—

अपसरति न चक्षुषो मृगाक्षी रजनिरियं च न याति नैति निद्रा।
प्रहरति मदनोऽपि दुःखितानां बत बहुशोऽभिमुखीभवन्त्यपायाः॥ इति।

एकादशपरिच्छेदे दृश्यते—"शुष्केन्धने वह्निरुपैति वृद्धिम्" इति। समग्रः श्लोको वानराष्टके (पृः २४५) उपलभ्यते—

शुष्केन्धने वह्निरुपैति वृद्धिं बालेषु शोकश्चपलेषु कोपः।
कान्तासु कामो निपुणेषु वित्तं धर्मो दयावत्सु महत्सु धैर्यम्॥ इति।

तत्रैव वर्तते—सेइ जन्यइ तो 'वृद्धस्य तरुणी भार्या' विपत्तिर कारण (अत एव वृद्धस्य तरुणी भार्या विपत्तेः कारणमिति।) रामायणे वर्तते—स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् (अयोध्या २०।२३) इति।

# भुवः कर्षणम्

[ तृ० कृ० कृष्णस्वामी ]

आहवनीयचयनार्थं भुवः कर्षणमुच्यते ( तै० सं० ४।२।५, वा० सं७ १२।५९-७२ ) ततो लोकोपयोगि किञ्चित्तत्त्वं किञ्चिदाधिदैविकं च तत्त्वं निष्कृष्यते। तत्र द्वावग्नी एक उख्योऽपरो गार्हपत्यः। उख्यः—भूगतः, कृक्ष्यमाणभूमिस्थः, कर्मान्तः, नीवी, व्यवस्थापिका समितिरित्यादिः। गार्हपत्यः—चितः, कृषकाः, बलीवर्दाः, श्रमिकाः, अभिज्ञाः (experts), इन्द्रियजीविनः (technicians), बुद्धिजीविनः (official staff), भृत्याः, अन्ये चोपजीविनः।

एतावग्नी परस्परं संप्रियौ, रोचिष्णू, सुमनस्यमानौ, संवसानौ च कार्यौ, परस्परं विद्वेषं मा कृषाताम् इति। अहमेवाऽऽहुत्याधारो भूयासं न त्वम् इत्येवंरूपो विद्वेषः। छन्दांस्यग्नेः प्रिया तनूः। अतो विद्वेषपरिहाराय छन्दोभिरुभौ संयोजनीयौ। तत्रोख्यः क्षत्रियरूपः, गार्हपत्यो ब्राह्मणरूपः। अनयोः सङ्गमने सति ब्राह्मणो राजन्यवान् भवति, राजन्यो ब्राह्मणवांश्च। तत्रायं विशेषः "संयुक्तयोर्ब्राह्मणक्षत्रिययोः सतोः पश्चाद् ब्राह्मणेन नियन्त्रितः क्षत्रियो विविधं शास्त्रीयं राज्यपरिपालनं प्राप्नोति।"

उखा पृथिवीरूपा, तत्र स्थापितोऽग्निरुख्यः। माता पुत्रमिव पृथिवी स्वस्यां योना उख्यमग्निं बिभर्ति। तस्याग्नेर्विमोचनं विश्वैर्देवैर्ऋतुभिश्चैकमत्यं गतो विश्वकर्मा कारयति। ( विश्वं सृष्टिरूपं कर्म यस्यासौ विश्वकर्मा। )

निर्ऋतिर्देवी ग्रीवासु दाम बध्नाति। तस्यावरोधार्थम् उन्मोचनार्थं वा कृष्णवर्णास्तुषपक्वा इष्टका उपधीयन्ते। तस्या मुखे प्रदररूप इरिणरूपे वेष्टकोपधीयते येन जनास्तां शास्त्रसंस्काररहिता भूमिरिति विदुः, न तु निर्ऋतिर्देवीति। देवयजनान् निष्कृष्य प्रदरादाव् ऋतिः प्राप्तिर्यस्याः सा निर्ऋतिः। यज्ञेऽयं विशेषः। पिता यथा दुःशीलं बालमुपलालनैः स्वाधीनं करोति तद्वन्मन्त्रैः स्तुत्या निर्ऋतिरनुकूला क्रियते, येन सा यज्ञोपद्रवं परिवर्ज्य तत्र जायमानान् स्तेनतस्करान् असुन्वतोऽयजमानांश्च परिगृह्णाति।

"असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि॥"

कर्षणाय लाङ्गलं वज्रवत्तीक्ष्णं क्रियते येन कृषकाणां कर्म सुकरं भवति। लाङ्गलं सुशेवं (सुखेन सेवितुं शक्यं), सुमतित्सरु च भवति। कृषकैः शोभनं मन्यत इति सुमति,

भूमौ निम्नोन्नतत्वेन विच्छिद्य गमनविशेषो यस्य तत् सुमतित्सरु। अनेन कर्षणेन कृषकोऽधिकं फलं प्राप्नोति।*

तत्र लाङ्गलमुखानि ( फालानि ), कृषकाः, बलीवर्दाः, मेघः, शुनासीरौ (वाय्वादित्यौ) च स्वे स्वे व्यापारे वर्तन्ते। कश्चन षड्गवेन कृषति ऋतुप्रामाण्यात्। कश्चन मासप्रामाण्याद् द्वादशगवेन च।

अधुना कर्षणप्रकार उच्यते।

"साकल्येन कृष्टे स्थाने चीयमानोऽग्निर्भूमिमत्यन्तं दहति। तस्माद् अतिदाहाद् अबिभेद् इति सा भूमिस्तमतिदाहं परिहर्तुमुपायं विचार्य कस्मिंश्चित्प्रदेशे कृष्टं कस्मिंश्चिद् अकृष्टम् इत्येवमेतद् द्विगुणम् उभयविधस्थानमुपायत्वेनाऽपश्यत्। लोकेऽपि प्रहारेण च्छिन्नेऽवयवेऽग्निसामीप्येन यावान् सन्तापो न तावान् इतरस्मिन्नवयवे दृश्यते। तस्मात्कृष्टाकृष्टभेदेन द्वगुण्ये सति अग्निश्चितो भूमिं नात्यन्तं दहति। तस्माद् भूमेरनतिदाहाय किञ्चित्कृष्टं किञ्चिद् अकृष्टम् इत्येवं द्विगुणं कुर्यात्।"

गार्हपत्यादुत्तरवेदिं प्रत्यग्निप्रणयनकाले सिकताभिरेकं पात्रमापूर्य तस्योपरि पात्रान्तरेऽग्निं प्रक्षिप्य द्विगुणेन पात्रेणाग्नेरुद्यमनं दृष्टं तद्वदत्रापि कृष्टाकृष्टभेदेन द्विगुणं स्थानम् अग्नेरुद्यमनयोग्यमित्यभिज्ञा आहुः†। तस्माद् उद्यमनाय द्विगुणं कर्तव्यम्।" [ सायणः ]।

कर्षणसमाप्तौ, कर्मान्तेषु च प्रहरेण, प्रहरद्वयेन, अह्ना वा कर्मसमाप्तौ बलीवर्दाः, कृषकाः, श्रमिकाः, कार्यवाहाः, भृत्याः, अन्ये च नाना कर्मोपजीविनः स्वं स्वं गृहमावासं

---

* "Pāṇini knows of deep ploughing. It was effected by driving the plough twice ( द्वितीयाकरोति ) or thrice ( तृतीयाकरोति, V. 4. 58 ). The Arthaśāstra also (II. 24, p. 116) refers to ploughing three times ( त्रीन् कर्षकान् ) in heavy rains. Pāṇini also refers to ploughings done more than three times (संख्यायाश्च गुणान्तायाः V. 4.59). To make cultivation more fruitful and intensive it was the custom to plough the same field over again from one end to the other in a reverse direction. ( शम्बाकरोति, V. 4. 58. अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः। ) The Greeks testify to the careful ploughing habits of the people in this country (Meg. Frag 1)." AGRAWALA, *India as Known to Panini* ( p. 200).

† "द्विगुणं त्वा अग्निमुद्यन्तुमर्हतीत्याहुर्यत्कृष्टं चाकृष्टं च भवत्यग्नेरुद्यत्यै।" ( तै० सं० ५।२।५ )

वा गच्छन्ति। कर्मणो विरतान् एतान् ग्रहीतुम् उपभोक्तुं बन्द्धुं वा बहवश्चेष्टन्ते। पूर्वस्यां दिशि रुद्र एतान् (बलीवर्दान्) गृह्णाति, दक्षिणस्यां पितरो वशीकुर्वन्ति, प्रतीच्यां वरुणप्रेरितानि पाशहस्तानि रक्षांसि हन्तुमवतिष्ठन्ते। अत उदीचीं दिशं प्रत्येत उत्सृज्यन्ते। एषा दिग् बाधकरहितत्वाद् देवानां मनुष्याणां च शान्ता। अस्यां दिशि प्राणरूपमादित्यमनूत्सर्जनं भवति येन सर्वे प्राणवन्तो भवन्ति।

"तस्य चादित्यस्योत्तरदिग्वर्तित्वं पुरुषविशेषापेक्षया द्रष्टव्यम्। मेरुं परितस्तत्तल्लोकेषु तत्तत्प्राणिनो वर्तन्ते। तथा सति मेरुं प्रदक्षिणीकुर्वन्नादित्योऽस्मदपेक्षया योदीची तस्यामप्यागच्छति। तदानीं कस्मिंश्चिन्मेरुपार्श्वेऽवस्थितैरादित्यो विलोक्यते। सोऽयं तेषां प्रत्युदयः। एतत्सर्वमभिप्रेत्य तस्योत्तरदिगुदयमङ्गीकृत्य सा दिक् प्रशस्यते।" (सायणः)

कामदुघा लाङ्गलपद्धतिः।

कर्षणस्याऽऽवर्तनं प्रादक्षिण्येन ...... ...क्षिणभागमवस्थाप्य वामभागस्य परिभ्रमणं प्रादक्षिण्यम्। पुरुषस्य दक्षिणभागे सामर्थ्यसद्भावात् तदेवानुसृत्य पर्यावृत्तिः। किञ्चाऽऽदित्यो मेरुं प्रदक्षिणीकुरुते। तदप्यत्रानुसृतं भवति।" (सायणः)।

"तिस्रस्तिस्रः सीताः कृषति त्रिवृतमेव यज्ञमुखे वियातयति।" (तै० सं० ५।२।५)

"चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते।" (ऋक्० १०।११४।३)

चतुष्कोणा युवतिः शोभनालंकारा घृतप्रमुखहविष्का वेदिः, वयुनानि ज्ञातव्यानि पदार्थजातानि कर्माणि स्तोत्राणि वा वस्ते आच्छादयति।

"तस्य वै (संवत्सरस्य) वसन्तः शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शरद् उत्तरः पक्षः। हेमन्तो मध्यम्।" तै० ब्रा०

---

# बालमनोरमाविमर्शः

उच्चैरुदात्त इत्यत्र सिद्धान्तकौमुद्यां दृश्यत उदाहरणम्—आ ये इति। व्याख्यातश्चेदं बालमनोरमाकारेण वासुदेवदीक्षितेन—आ ये मित्रावरुणेत्यृचि आकार एकारश्च उदात्त इत्यर्थः। इति। परं यथास्माभिर्दृष्टम्—आ ये मित्रावरुणेत्यृगेव गगनकुसुमायते। आ ये तन्वन्ति रश्मिभिः [ऋ० सं० १।१९।८] आ ये तस्थुः पृषतीषु [५।६०।२] आ ये रजांसि तविषीभिः [१।१६६।४] आ ये विश्वा पार्थिवानि [८।९४।९] आ ये विश्वा स्वपत्यानि तस्थुः [१।७२।९] इत्यायेप्रतीका ऋचः। आ येन मित्रावरुणा

[९।१०८।१४ग] इत्युक्पाद उपलभ्यत एव। आ ये विश्वा पार्थिवानि [८।९४।९] इत्यक्षराणि लेखक-प्रमादाद् आ ये मित्रावरुणेति सञ्जातानीति विभाव्यते।

स्वरितस्योदाहरणं मुद्रितबालमनोरमापुस्तकेषु दृश्यते—अर्वाङ् यज्ञः संक्रामतीति। तैत्तिरीय-संहितादिषूपलभ्यत इयं श्रुतिः, अस्याश्च शुद्धः पाठः "अर्वाङ् यज्ञः सं क्रामतु" [ तै० सं० ७।३।११।१, आप० श्रौ० सू० २०।११।७ ] इति।

---

## वेदेष्वलङ्कारः

ऋग्वेदे [ १।२।५ ] श्रूयते—

सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम्।
असदित्ते विभु प्रभु ॥

इति। अस्यार्थः। हे इन्द्र वरेण्यं वरणीयं श्रेष्ठं राधः धनं चित्रं मणिमुक्तादिरूपेण बहुविधम् अर्वाक् अस्मदभिमुखं सं चोदय सम्यक् प्रेरय। भोगाय यावत्पर्याप्तं तावद्विभु-शब्देनोच्यते, ततोऽप्यधिकं प्रभु-शब्देन। तादृशं धनं ते तवैव असत् भवतु। अस भुवि। लेटि रूपम्।

अत्र विभु-प्रभु-शब्दद्वयेन राधस उत्तरोत्तरमुत्कर्षवर्णनात् सारालङ्कारः। तस्य च लक्षणम्—उत्तरोत्तरमुत्कर्षो वस्तुनः सारमिष्यते। इति।

अस्मे देहि श्रवो बृहद् द्युम्नं सहस्रसातमम्।
इन्द्र ता रथिनीरिषः ॥१।९।९

इत्यत्राप्ययमेवालङ्कारो जागर्ति।

---

## भूमिस्मात्-भस्मस्मात्

"दैनिकवसुमती"-पत्रिकायां ( कलिकाता, २२शे कार्त्तिक सोमवार १३६६, पृः ४, स्त० २ ) दृष्टम्—२६, ३८३८ गृह भूमिस्मात् हइयाछे ( गृहाणि भूमिस्माद्भूतानि ) इति। भद्रमुख, किमिदं वस्तु भूमिस्मान्नाम? अरे एतदपि न जानासि? अकस्मा-च्छब्दस्य वैमात्रेयोऽयं भ्राता भूमिस्मादिति। व्याकरणाभ्यासजडाः पुनरेनं भूमिसादित्याचक्षते। गृहाणि प्रायेणाकस्मादेव भूमिसाद् भवन्ति। अत एवाकस्माद्भूमिसातोः सङ्करेण सम्भूतोऽयं शब्दापसदः। अकस्मात्+भूमिसात्=भूमिस्मात्।

अस्य ज्यायान् सहोदरो भस्मस्मादप्यन्तरान्तरा वङ्गीयविद्वज्जनवदनारविन्देषु विहरमाण उपलभ्यते।

कवीन्द्र-रवीन्द्रनाथस्य

# कृपणः

[ श्रीफटिकलाल-दासकृततात्पर्यानुवादः ]

यदाहमन्नं पथि भिक्षमाण-स्त्वां दृष्टवान् स्वर्णरथेन यान्तम् ।
तदेव दृश्यं नयने चकाशे स्वप्नो रजन्यामिव कोऽप्यपूर्वः ॥१॥
अहो विचित्रा तव काप्यभिख्या कीदृश्यपूर्वा तव चाङ्गसज्जा ।
अभावि चित्तेऽपि मया विलोक्य "कोऽयं महाराज इहागतोऽस्ति ॥"२॥
नूनं प्रभाता रजनी ममाद्य शुभे हि लग्ने सुकृतोदयेन ।
भिक्षाटनेन प्रतिगेहमद्य नार्थोऽस्ति कश्चित्तव दृष्टिलाभात् ॥३॥
प्रयाणकाले तव यानगर्भान्मार्गोपरि स्याद् धनधान्यवृष्टिः ।
तत्तद् गृहीत्वोभयमुष्टिपूर्णं भिक्षाप्रसेवं परिपूरयिष्ये ॥४॥
अहो विचित्रं मम सन्निकर्ष गतिं न्यरुन्ध प्रसभं रथः सः ।
सुस्मेरवक्त्र स्त्वमनन्यपूर्वमवातरो मन्मुखबद्धदृष्टिः ॥५॥
प्रपश्यतस्ते वदनं प्रसन्नं सर्वा व्यथा मे प्रशमं प्रयाताः ।
"भो देहि किञ्चिद्" वदतेति वाक्यं प्रसारितः स्वो भवता ततो दोः ॥६॥
देहीति कीदृग् वचनं मुखात्ते ! श्रुत्वा नतास्यः क्षणमेकमस्थाम् ।
राजाधिराजस्य तवास्ति को वा मादृक्षभिक्षोः सविधे ह्यभावः ॥७॥
इदं छलं ते खलु कौतुकोत्थं मत्वेति भिक्षापुटतण्डुलानाम् ।
क्षौदिष्ठतुच्छं कणमेकमात्रं निर्वाच्य हस्ते व्यसृजं तदा ते ॥८॥
गृहागतोऽहं पुटतण्डुलांस्तान् निष्कास्य यावद् भुवि हा न्यरक्षम् ।
अद्राक्षमस्यां कनकाणुमेकं चकासतं स्वप्रभया नितान्तम् ॥९॥
यद् राजभिक्षोरददां करेऽहं प्रत्यागतं मां कनकं भवत् तत् ।
"कथं न दत्तं सकलं ममे"ति वदन्नजाये गलदश्रुनेत्रः ॥१०॥

———

# ऋघायतः

ऋघायतप्रभृतीनाम् आकारान्तऋघा-शब्द-निष्पन्नत्वं पदपाठकारस्याप्यभिमतम् । तथाहि पदपाठे ऋघायत इत्येवानवग्रहः शब्द उपलभ्यते । अकारान्तत्वे पदपाठकार ऋघऽयत इत्येवमकरिष्यत् ।

# मणिकाञ्चन-समन्वयम्

११५

( वङ्गदेशप्रचलितकथामूलकं प्रहसनम्

[ भट्टपल्लीस्थ-श्रीविष्णुपदभट्टाचार्य-विर

अथ पात्रपरिचयः

१। सूत्रधारः
२। शर्शरीकः }
३। दर्दुरकः } धूर्तयुगलम्।
४। चतुरकः—शर्शरीकतनयः।
५। धनपतिः—धनिको नागरिकः।
६। दस्युपतिः
७। ,, तदनुचराः॥

## प्रस्तावना

रूपोज्झितोऽपि निजभक्तजनानुरक्त्या
यः स्वीकरोति बहुशस्तदभीष्ट-रूपम्।
निर्बन्धनोऽपि भजते नरदेहबन्धं
देवः स एव भवतां वरदोऽस्तु विष्णुः ॥१॥

( नान्द्यन्ते ) सूत्रधारः। नमो नमः समागतेभ्यः सामाजिकेभ्यः। अत्रभवतां मनोरञ्जनायैव विरचितमिदं मणिकाञ्चनसमन्वयं नाम स्त्रीभूमिकावर्जितम् अभिनव-प्रहसनं भट्टपल्ली-वास्तव्येन श्रीविष्णुपदारविन्द-मकरन्द-मधुव्रतेन भट्टाचार्योपाह्वेन श्रीविष्णुपददेवशर्मणा। अस्माभिरभिनीयमानं तत् सानुकम्पम् अवलोकन्तां महाभागाः। अलमतिविस्तरेण। ( निष्क्रामति। )

---

## प्रथमोऽङ्कः

( पौरो राजपथः। प्रविशति शर्शरीकः शिरःस्थितां मृन्मयीं हण्डिकां वहन्। समयः—पूर्वाह्णः। )

शर्श०। ( उच्चैःस्वरेण ) मधु, मधु, क्षौद्रकं मधु। एतेत* पुरवासिनः! स्वल्प-मूल्येन मधु गृह्यताम्।

मध्वेतद् विबुधास्वाद्यं सुधास्वादविमोहनम्।
सेवनेन क्षुधावह्नि नूनं निर्वाणमेष्यति ॥२॥

( ततः प्रविशति मृन्मयं कलसं शिरसि धारयन् दर्दुरकः। )

दर्दु०। ( तारस्वरेण ) गुडो गुडः। ऐक्षवो गुडः। सत्वरमापतत भो गृहस्थाः! वारिमूल्येन गुडो विक्रीयते।

---

*"ओमाङोश्च" इति पूर्वरूपैकादेशः। ५२

सुरभिः स्वर्णवर्णश्च सुगन्धिर्मधुरो गुडः ।
सकृदास्वाद्यमानोऽयं प्रयच्छेत् पुरुषायुषम् ॥२॥

शर्श० । अरे रासभकण्ठ ! कस्त्वं भोः ? अपेहि । अपेहि । कथं वाणिज्यक्षेः मे पर्याकुलयसि ?

दर्दु० । अरे दुर्मुख ! किमिति कुक्कुरवद् बुक्कसि* ? ननु राजपथोऽयम् । नेः ते पितृपैतामहं वासभवनम् । नाहं गमिष्यामि ।

शर्श० । अहो स्पर्धा ! तदुपभुज्यताम् अविमृश्यकारितायाः फलम् । ( कराघातेः कलसं दर्दुरकमस्तकाद् भ्रंशयति । कलशोऽपि भूपातितः शकलीभवति ।. )

दर्दु० । अहो दुःसाहसम् ! किं मां पक्षाघातग्रस्तं मन्यसे ? एषा ते हण्डिकाऽपि मत्कलसेन सहमृता भवतु । ( कराघातेन शिरश्च्युता हण्डिकाऽपि विचूर्णिता ।)

शर्श० । ( बद्धपरिकरः ) अरे पुरीष-कीटक ! †अजीवनिस्ते भूयात् । गच्छत्व शमनालयम् । ( दन्तान् कटकटाय्य दर्दुरकमाक्रम्य प्रहरति । )

दर्दु० । शृणु रे वर्बर ! अयमहं त्वां तत्रैव प्रेषयामि । ( सोऽपि प्रहरति । उभयोर्हस्ताहस्ति युद्धं प्रवर्तते । ततः प्रविशति धनपतिः । )

धन० । धिक् ! धिक् ! किमिदमशिष्टमनुष्ठीयते नाम ? विरम्यताम् । विरम्यताम् । ( उभयोरन्तरे तिष्ठन् द्वावपि विश्लेषयति । ) किमुभावपि हतज्ञानौ संवृत्तौ ? राजपथ एव संमर्दः ! अहो लज्जा !

शर्श० । भद्र ! स्वल्पायुषाऽनेन मे मधुहण्डिका विशकलिता ।

धन० । ( दर्दुरकं प्रति ) सत्यम् ? तर्हि तन्मूल्यमस्मै प्रदेहि ।

दर्दु० । कथम् ? अनेन बलीवर्देन प्रागेव मे गुडकुम्भो विचूर्णितः ।

धन० । ( शर्शरीकं प्रति ) एवम् ? तर्हि नायं कृतापराधः । त्वयैवास्य क्षतिः सम्पूरणीया ।

शर्श० । (कलशखण्डं भूतलादुद्धृत्य जिह्वया लिहंस्थुत्कारेण निष्ठीवति । ) थुः ! थुः ! यद्ययं गुडः, कथं पूतिगन्धिः पङ्क इव स्वदते । पश्यत्वार्यः ।

धन० । ( आघ्राय ) सत्यम् । पङ्कभूयिष्ठोऽयं गुडः ।

दर्दु० । ( हण्डिकाखण्डमादाय जिह्वया लिहन् विवमिषां नाटयति । ) उयाक् ! उयाक् ! भद्रमुख ! नेदं मधु । किमिदमिति वक्तुं न शक्यते मया । पश्यतु भवान् ।

*बुक्क भषणे भौवादिकः परस्मैपदी । Av. *bukhti*, Gk. *buktēs*.
†आक्रोशे नञ्यनिरित्यनिप्रत्ययः ।

धन०। (आघ्राय) सत्यमुक्तं त्वया। एरण्डतैलवद् गन्धो निःसरति। अधुना सर्वं बुध्यते। द्वावपि युवां नितरां धूर्तौ। अनयैव रीत्या सरलमनसो गृहस्थान् वञ्चयेथे। रक्षिवर्गम् आहूय तत्करे द्वावपि समर्पयेयम्।

उभौ। (पादयोर्निपत्य) मा मैवम्। मर्षयतु मर्षयतु भवान्। बुभुक्षयैव श्रितेयं पापवृत्तिः। मत्काराबन्धेन पुत्रकलत्रादयो मे खाद्याभावेन म्रियेरन्।

धन०। तर्हि कर्णौ पिष्ट्वा द्वाभ्यामपि प्रतिश्रोतव्यम् असत्यपथेन न पुनः सञ्चरितव्यमिति।

उभौ। (कर्णौ पिष्ट्वा) तथाऽस्तु। ननु पृच्छामि, कथं जीवितव्यम् अस्माभिरिति।

धन०। तदपि मया चिन्तितम्।

(शर्शरीकं प्रति) अस्ति मे कपिला नाम गौरेका कपिलद्युतिः।
तृणक्षेत्रं समानीय चारणीया त्वयैव सा ॥४॥

(दर्दुरकं प्रति) आस्ते बहुमतः कश्चित् सहकारद्रुमो मम।
तन्मूलमृत्तिका नीरैर्नेतव्या पङ्कतां त्वया ॥५॥

एतदर्थं ग्रासाच्छादनाभ्यधिकं रूप्यकदशकात्मकं मासिकं वेतनं प्रतिजनं प्रदेयम्। व्यवस्थेयं यदि वां रोचते मया सार्धम् आगम्यताम्।

उभौ। अहो दाक्षिण्यम्! अहो दाक्षिण्यम्! मरणात्तारितोऽहं भवता। अद्यप्रभृति क्रीतोऽहं दासः। (सर्वे निष्क्रामन्ति।)

(पटीपरिवर्तनम्)

(धनपतेरुद्यानवाटिकायां सहकारतरोरधस्ताद् गभीरं गह्वरं दृश्यते। तत् परितश्च खायमाना मृत्तिका स्तूपीकृता संवृत्ता। गह्वरान्तर्दर्दुरको मृत्तिकां खनन्नास्ते। समयः—रात्रेः प्रथमो यामार्धः।)

दर्दु०। (आत्मगतम्) अशुभ एव क्षणे सेचनकर्मेदमूरीकृतं मया।

पूर्वाह्णतोऽतिविरसं तरुमूलमेतत्
कुम्भाहृताम्बु-सलिलैः शतशोऽभिषिक्तम्।
नार्द्रं तथाप्यभवदूषरमृत्तिकेयं
प्राप्ताऽधुना बत निशा निहतोद्यमोऽहम् ॥६॥

हन्त भोः! राक्षसीयं जलपिपासा दुर्निवारेव प्रतिभाति। तदभिशप्तोऽयं सहकारवृक्षकः समूलघातं हन्तव्यो मया। तन्मृत्तिकाखननेन मूलान्यस्य शिथिलयामि। (पुनः खननकर्मणि प्रवर्तते। प्रविशति शर्शरीकः।)

शर्श०। अरे! किमिदं क्रियते त्वया? धनपतिश्चेत् पश्येत् परम् अनर्थं घटयिष्यति।

दर्दु०। निरयं यात्वसौ धनपतिः। "आत्मानं सततं रक्षेद् दारैरपि धनैरपि। नायं वृक्षः, अपि तु तृष्णातुरो दानव एव। अतो विनाशमर्हति। निरन्तर जलाहरणेन दूयन्ते मे स्कन्धसन्धयः। ततः कर्मैतदत्यन्ताय परित्यज्य गन्तव मया। यदाऽसौ ज्ञास्यति धनपतिस्तदाऽहं योजनान्तरितो भवेयम्। ( पुनर्र खनति। सहसा गर्ताभ्यन्तराट् ठङ्कारस्तं श्रूयते। )

शर्श०। ( श्रुत्वा ) दर्दुरक ! तिष्ठ-तिष्ठ। किमिति खनित्राभिहतस्येव तैजसपात्रस ठङ्कारस्तम् उज्जृम्भते ?

दर्दु०। ( विरम्य ) स्वप्नविप्रलब्धोऽसि त्वम्। क्व तावट्ठङ्कारध्वनिः ?

शर्श०। ( स्वगतम् ) धूर्तोऽयमपलपत्येव। ( प्रकाशम् ) दर्दुरक ! ननु सुस्पष्टमेव श्रुतो मया।

दर्दु०। नूनं श्रुतिभ्रमोऽयं ते। गर्तोऽयं तवैव मस्तक इव शून्यगर्भः। न तत्र किमप्यस्ति। ( खनित्रहस्तो गर्तादुत्थाय ) खननकर्मेदं परित्यक्तं मया। श्रमोऽयं मृते भेषजप्रयोग इव विफलः प्रतिभाति। शर्शरीक ! भाग्यवानसि त्वम्। मन्ये सुखेनैव निर्वाहितं त्वया गोचारण-कर्मेति।

शर्श०। सुखेन ? नहि नहि। तेनैव कर्मणाऽहं कण्ठागतप्राणः संवृत्तः।

दर्दु०। कथम् ?

शर्श०। तर्हि श्रूयताम्। बहवो नाम गावो मया दृष्टाश्चारिताश्च। परन्तु कपिलेव प्रकृतिदुष्टा धेनुर्न मया दृष्टपूर्वा।

नीता मया हि कपिला नवशष्पभूमिं
कीलेन संयतगति विहिताऽपि रज्ज्वा।
तां घासचर्वणरतामवलोक्य जोषं
प्रच्छायपादपतलेऽहमपि प्रसुप्तः ॥७॥

सुप्तोत्थितस्तु तामहं नापश्यम्। तदन्वेषणाय ग्रामाद् ग्रामान्तरं प्रधावन् कस्यचिद् धनिकस्य गृहारामे यथाकामं फलपुष्पपत्रादिभि रुदरं पूरयन्तीं तां निशाम्य प्रच्छन्नस्ता-मुपागच्छम्।

ततश्च—

मामन्तिकस्थं सहसैव दृष्ट्वा
खुरैः समुत्थापित-भूरि-रेणुः
उन्नीय वक्रीकृतवालधिं सा
व्यलीयताक्ष्णोर्मम दुष्टधेनुः ॥८॥

तत्रान्तरे समुद्यतलगुडहस्तैरुद्यानपालकैरनुधाव्यमानः प्रपलाय्य कथमप्यहम् आत्मानं रक्षितवान्

दर्दु०। अहो दुर्दैवम्! ननु किमभवत् तस्याः कपिलायाः। किमसौ चिराय नष्टा?

शर्श०। नष्टा? नहि नहि। यमस्यापि रुचिविघातिकाऽसौ सौरभेयी। गृहं प्रत्यागम्य बहिरङ्गणे तां निमीलितनयनां महासुखेन रोमन्थायमानामपश्यम्। ततो मयाऽपि प्राणान्तकरं जघन्यमिदं कर्म परित्याज्यमेव।

दर्दु०। अहो दुरदृष्टम्! शर्शरीक! परिश्रमातिशयेन क्षुधातुर इव संलक्ष्यसे। एहि महानसमेव गच्छाव। (निष्क्रान्तौ।)

(पटपरिवर्तनेन दृश्यान्तरं प्रकाशते। मध्यरात्रे सहकारतरोरधस्तात् पलालशयने कृतकसुप्तः शर्शरीको निर्भरसुप्तश्च दर्दुरकः।)

शर्श०। (शयनादवोत्थितः) दर्दुरकस्य नासिकागर्जनं निद्रां मे योजनं दवयति। तन्मन्ये दुर्वृत्तोऽयं कुम्भकर्ण इव स्वपिति। नूनं तेन मत्तः किमपि निह्नुतम्। गर्ताभ्यन्तरात् समुत्थितोऽसौ टङ्कारध्वनिरधुनाऽपि मत्कर्णयो रंरण्यते। मध्येगर्तं किमपि रहस्यमस्त्येव। अयमेवावसरस्तन्निर्णेतुम्। (उत्थाय गर्तमुपैति तदभ्यन्तरं च प्रविशति।) अहो किमिदम्! (दीपशलाकालोकेन निरूप्य) यथार्थमेवानुमितं मया। गुरुभारस्ताम्रकलसोऽयम्। (ताम्रकलसमादाय गर्तादुत्तिष्ठति। तदन्तर्हस्ताग्रं च प्रवेश्य परीक्षते।) अहो सौभाग्यम्! रूप्यकैराकण्ठं परिपूर्णोऽयं प्रतिभाति। जय जगदीश हरे! त्वदनुकम्पयैव सपदि धनिकोऽस्मि संवृत्तः। न यावदसौ दर्दुरकः प्रबुध्यते तावदनेन ताम्रकलसेन साकमपसर्तव्यं मया। (ताम्रकलशं स्कन्धे निधाय परिक्रामति।)

दर्दु०। (सुप्तोत्थितः) कस्त्वं भोः? शर्शरीक? अरे पाटच्चर! मदीयं कलसमपहृत्य क्व गम्यते त्वया? तिष्ठ तिष्ठ। (धावन्नेव तत्पार्श्वं गत्वा कलशं हस्तेनाकर्षति।)

शर्श०। मुञ्च मुञ्च मे कलशम्। नायं त्वत्पितृनामाङ्कितः।

दर्दु०। ततः किम्? मयैव प्रागासादितोऽयम्।

शर्श०। मिथ्यावचनमिदम्। गर्तमध्ये न किमप्यस्तीति स्वमुखेनैव कीर्तितं त्वया। ततो मयैव प्रथमं दृष्टोऽयम्।

दर्दु०। शृणु रे परस्वलोलुभ! अधुनैव गत्वा धनपतये सर्वं निवेदयिष्यामि।

शर्श०। मूर्ख इव भाषसे त्वम्। एवं कृते धनपतिरेव सर्वस्वम् आत्मसात् करिष्यति। तेन ते न किमपि लभ्यं स्यात्। अलमलं वृथा कलहेन। गुप्तधनमिदं द्विधा

विभाज्यम्। अर्धं त्वया ग्रहणीयं मयाऽप्यपरार्धम्। स्मर्यतां तावद् विज्ञवचनम्। 'सर्वनाशे समुत्पन्ने त्वर्धं त्यजति पण्डितः।' समीचीनं मन्यसे ?

दर्दु०। (प्रसन्नचित्तः) अगत्या तथैव करणीयम्। ननु ताम्रकलशेन किं कार्यम्? किं सोऽपि द्विधा विभक्तव्यः ?

शर्श०। अरे वैधेय! तेनास्य मूल्यहानिः स्यात्। कलसोऽयमद्य मद्भवनं नेतव्यः। श्वस्तावद् वाणिज्यविरतिदिवसः। तत्पराह्णे सायं मद्गृहमागन्तव्यं त्वया। त्वद्द्वितीयोऽहं तैजसापणं गत्वा कलसमिमं विक्रीय तन्मूल्यार्धं ते दास्यामि।

दर्दु०। क्व ते गृहम्? नाहं जानामि।

शर्श०। अद्यैव द्रष्टव्यं त्वया।

दर्दु०। गच्छाग्रतः। (उभौ निष्क्रामतः।)

---

## द्वितीयोऽङ्कः

(शर्शरीकभवनम्। खट्वासीनः शर्शरीकः स्वपुत्रं चतुरकमुच्चैः शकारयति।)

शर्श०। चतुरक! वत्स चतुरक! इतस्तावदागम्यताम्।

चतु०। (प्रविशन्) अयमहमस्मि तात! किमर्थं स्मृतोऽहम्?

शर्श०। वत्स! गुरु प्रयोजनमस्ति। उत्कर्णेन श्रोतव्यं त्वया। दर्दुरको नाम कश्चित् साम्प्रतमेवागच्छेत्। आगतमात्रे तस्मिन् प्रावारकेण शरीरम् आपादमस्तकमावृत्य खट्वामहम् आश्रयिष्ये। ततस्त्वया गृहद्वारमपावृत्य शोकविह्वलतां नाटयताऽसौ वक्तव्यः—पिता मे विषूचिकया सहसैव पञ्चत्वं प्राप्त इति। सन्दिहानश्चेदसौ भवेद् वस्त्राच्छन्नं मे शरीरं तस्मै प्रदर्शयितव्यम्। ततोऽसौ वीतसंशयो नूनं प्रतिगमिष्यति। ताम्रकलशम् अधिकृत्य किमपि त्वं पृच्छ्यसे चेन्नाहं किमपि जानामीति प्रतिवचनं तस्मै प्रदेयम्।

चतु०। (सस्मितं) सम्यगवगच्छामि तात! यथोपदिष्टं भवता तथैव कृतं भवेत्।

दर्दु०। (नेपथ्ये) शर्शरीक! (शर्शरीकश्चक्षुःसंज्ञया चतुरकमुद्बोधयति। स्वयं वस्त्रावृतशरीरः खट्वायां शेते। चतुरको गृहद्वारमुद्घाटयति। दर्दुरकः प्रविशति।)

चतु०। कस्त्वं भोः?

दर्दु०। (प्रविश्य) दर्दुरकोऽहं मन्मित्रं शशरीकं द्रष्टुमिच्छामि। कः पुनस्त्वमसि?

चतु०। (विषादं नाटयन्) हतभागधेयश्चतुरकोऽहं शर्शरीकात्मजः।

दर्दु०। क्वासौ शर्शरीकः ?

चतु०। ( साश्रुनयनः ) महता विलम्बेनागतो भवान्। ( आकाशे ) पितः पितः क्वासि त्वम्? तवैव प्रियसखस्त्वां द्रष्टुमिहागतः। देह्यस्मै प्रतिवचनम्।

दर्दु०। कथं रुद्यते? क्व ते पिता?

चतु०। ( सविलापम् ) क्व मे पिता? अहह अहह! क्व मे पिता? ( शुचा स्खलितकण्ठ इव ) पि-पि-पिता मे खट्वायामनन्त-नि-नि-निद्रां भजते। ( तर्जन्या खट्वां निर्दिशति। )

दर्दु०। नाहं बोद्धुं शक्नोमि। किमसौ मृतः?

चतु०। दैवहतकेनाकस्मादनाथीकृतोऽहम्। ( करतलेन वक्षस्ताडयन् )

हा हा तात! प्रकृतिमुखरः प्रातरारभ्य तूष्णी-
म्भावापन्नः किमिति शयनं सेवसे स्पन्दहीनः।
अस्तं यातो रविरथतमस्तन्वती कालरात्रिः
प्रत्यासन्ना, किमहमधुना निःसहायः करोमि ॥९॥

अहहहहहह। ( गद्गदगिरा रोदिति। )

दर्दु०। ( स्वगतम् ) किमाश्चर्यमतः परम्? द्वाराद् बहिरवस्थितोऽहं सद्य एव स्वपुत्रमाह्वयतः शर्शरीकस्य कण्ठस्वरं स्वकर्णेनैव श्रुतवान्। नूनं मामेव प्रतारयितुं मृतवदात्मानं दर्शयत्यसौ शठशिरोमणिः। ततो व्याधेरनुरूपं भेषजमपि मया प्रयोक्तव्यम्। ( प्रकाशम् ) समाश्वसिहि वत्स! समाश्वसिहि। जातस्य हि ध्रुवो मृत्युः। पितृव्यप्रतिमे मयि स्थिते कथमात्मानमसहायं मन्यसे? ननु पृच्छामि कोऽसौ कालव्याधिर्येन सखा मे सहसैव वासवालयं नीत इति।

चतु०। अहह अहह विषूचिका, विषूचिका!

दर्दु०। विषूचिका? *अहो अनर्थः! अधुनाऽप्यत्र कथमवस्थीयते त्वया? किमकालमरणाय स्पृहयसि? दारुणोऽयं संक्रामको व्याधिः। अपेहि। अपेहि। यत् करणीयमहमेव करिष्यामि।

चतु०। नैतन्न्याय्यम्। महार्हा भवत्प्राणा नास्मदर्थे कथमपि संशयं नेतव्याः।

दर्दु०। वत्स! नैवं वक्तुमर्हसि। त्वं तावदस्य मे मित्रस्य वंशवर्धनस्तनयः, परन्तु प्रियबान्धवोऽहम्। "राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः।" ततः श्मशानकृत्यं मया बान्धवेनैव साधनीयं न त्वया। परन्तु मरणमेव मे सर्वथा स्पृहणीयम्। ( विनिश्वस्य )

---

*ओदिति सूत्रेण अहो इत्यस्य प्रगृह्यत्वम्।

स्वर्गाय प्रस्थितः सोऽयं सखा प्राणसमो मम ।
तेन रिक्ता ततस्तिक्ता जातेयं मे वसुन्धरा ॥१०॥

चतु०। सत्यमाह भवान्। ममापि तथैव। ( सविलापं ) विषूचिके! विषूचिके! स्नेहमयं पितरमाश्लिष्य किमिति मां हतभाग्यं दूरतः परिहृत्य स्थितासि? अहह! अहह!

दर्दु०। ( तर्जनीभ्यां कर्णौ पिधाय ) शान्तं पापम्! शान्तं पापम्! किमिदम् अश्रोतव्यमुच्यते त्वया? सम्भावनासमुज्ज्वलोदर्कस्तरुणस्त्वमसि। ननु जीवितव्यमेव त्वया। किञ्च—

अगतिः पतिशोकार्ता माता ते मुखमीक्षते ।
सा त्वया सान्त्वनीयाऽद्य पालनीयाऽपि यत्नतः ॥११॥

त्वञ्चेन्म्रियसे, मातृहत्यापातकं ते स्यात्।

चतु०। भवतु। तथापि श्मशानं गत्वा मुखाग्निकृत्यं साधनीयं मया।

दर्दु०। मुखाग्निकृत्यम्? मुखाग्निना किं प्रयोजनम्? श्रूयतामत्र शास्त्रवचनम्।

संक्रामकरुजा यो हि पुण्यात्मा गतजीवनः ।
तस्य सद्योविमुक्तस्य मुखाग्निर्न प्रशस्यते ॥१२॥

तद् यथाप्राप्तमौर्ध्वदेहिकं कृत्यमहमेवानुष्ठाय तूर्णं प्रत्यावर्तिष्ये। मुहूर्तमपि पितृशवान्तिके न स्थातव्यं त्वया। ( चतुरकपृष्ठे करतलं निदधानः ) गच्छ गच्छ जननीपार्श्वस्थो भव।

चतु०। ( स्वगतम् ) अहो निर्बन्धः! किमहं करिष्ये? नात्र विषये पित्राहं किमप्यभिहितः। नूनं सूच्यग्रबुद्धिः पिता मे निजपरित्राणोपायं कमप्युद्भावयिष्यति। ( निष्क्रामति। )

( दर्दुरको वस्त्रावृतं शर्शरीकं खट्वाया अवरोह्य तच्चरणयुगलं निजोत्तरीयेण दृढं निबध्य तमाकर्षन्नेव बहिर्निष्क्रामति। )

( पटीपरिवर्त्तनेन श्मशानभूमिः दृश्यते। तत्पार्श्वे चैकतः श्मशानकालिकामन्दिरम्। अन्यतः सज्जितचितोपरि शयानः शर्शरीकः। धूममलिनकाचावृतो वात्याप्रदीपो ( hurricane lantern ) मृदुरश्मिं विकिरति। पार्श्वोपविष्टो दर्दुरकस्ताम्रकूटवीटिका-( Biri )-धूमं निषेवते। )

दर्दु०। अहो लोकोत्तरसहिष्णुताऽस्य पापिष्ठस्य! श्मशानरक्षकेण पाण्डुरकेण सुसज्जिता चितेयम् अधुनैव प्रज्वलिता भवेत्, तथापि पाषण्डो मूकभावं न मुञ्चति।

विशुष्को वंशदण्ड इव भज्यमानोऽपि न खलु नमति। दिष्ट्या पाण्डुरकोऽपि मत्सकाशात् सुरामूल्यमादाय शौण्डिकालयं गतः।

शर्श०। (स्वगतम्) दुरात्माऽयं जीवन्तमेव मां दग्धुं व्यवस्यति। किमहं करिष्ये? भवतु। धैर्येणैव वर्तितव्यं मया।

दर्दु०। (उत्थाय) किं वृथा कालात्ययेन? अवसत्कारविधिस्तावदनुष्ठीयते (प्राञ्जलिः) अयि श्मशानकालिके! नमो नमस्ते।

जीवतस्तस्करस्यास्य सुस्वादुः सरसा वसा।
वह्निना क्वथ्यमाना ते बुभुक्षोरस्तु तृप्तये ॥१३॥

(चितायां वह्निसंयोगाय नतमस्तको यावदेव दीपशलाकां प्रज्वलयति तावद् दूरागतं बहूनां चरणपातशब्दमाकर्ण्य सन्त्रस्तो दीपशलाकां वात्यावर्तिकां च झटिति निर्वापयति।)

दर्दु०। अहो! के नाम पुरुषा अमी इत एवाभिधावन्ति! भवतु। गुल्मान्तरितेन तत् पर्यवेक्षणीयं मया। (सन्निहितगुल्मान्तरितस्तिष्ठति।)

शर्श०। (स्वगतम्) जटिलेयं परिस्थितिः। किमहं करोमि? नान्यत् किमपि। केवलं मृतवदेव स्थातव्यं मया।

(ततः प्रविशत्यनुचरैरनुगम्यमानः प्रधावन् दस्युपतिः।)

द०प०। विविक्तोऽयं श्मशानदेशः। अनुसरतां जानपदानां चरणध्वनिर्नैव श्रूयते। तदत्रैव क्षणं विश्रमितव्यम्। (सर्वे वस्त्रावबद्धं लोप्त्रजातं भूमौ निधाय निषीदन्ति।)

१ अनु०। ननु श्मशानकालिकां प्रणम्य दस्युतालब्धं धनादिकं विभज्य गृहे प्रत्यावर्तनीयम् अस्माभिः।

२ अनु०। नात्र चिरावस्थानं मे रोचते। श्मशानरक्षकः पाण्डुरको निकषैव वसति। स कदाचिद् आगच्छेत्।

३ अनु०। निःशङ्को भव। मद्यपोऽसौ प्रायशो मृतवत् स्वपिति।

४ अनु०। तथाऽपि संशयो निरसनीयः। युष्माभिरत्रैव स्थीयताम्। अहमेव तस्य प्रवृत्तिमुपलप्स्ये। (उत्थाय कानिचित् पदानि गच्छन्ननलाचितचिताभिहतः स्खलितो निपतति। आर्तनादञ्च करोति।)

सर्वे०। (सन्त्रस्तास्तम् उपगम्य) किमापतितं किमापतितम्! (दस्युपतिर्दीपशलाकां प्रज्वलय्य निरूपयति। चतुर्थोऽनुचरः समुत्थायात्मानं विरजीकरोति।)

द० प०। भयावहमिदं दृश्यम्! सज्जितेयं चिता। तदुपरि विलसत्यकृतसत्कारः शवः कश्चित्। (उपसर्पन्ति सर्वे।) क्व तावदस्य श्मशानबान्धवाः?

४ अनु०। न कोऽपि दृश्यते नाम। मन्ये दूरतोऽस्मानापततः श्रुत्वा पलायिताः सर्वे।

द० प०। सम्भवति। तदस्य वराकस्य वह्निसत्कारोऽस्माभिरेव विधेयः।

४ अनु०। कथम्? अज्ञातकुलशीलोऽयम्। तत्कृते किं शिरःस्वेदनेन?

द० प०। धनञ्जय! नैवं वक्तव्यम्।

गृह्णानाः परवित्तानि जाताः पातकिनो वयम्।
प्रायश्चित्तमपि स्तोकं शवसत्कारतोऽस्तु नः ॥१४॥

४ अनु०। युज्यते। त्वरितमेव यथाभिप्रायमनुष्ठीयताम्।

( दस्युपतिर्वह्निसंयोगाय दीपशलाकां प्रज्वलयति। तस्मिन्नेव क्षणे शर्शरीकश्चितायां पार्श्वपरिवर्तनं कृत्वानुनासिकस्वरेण विकटं हसति। गुल्मान्तर्हितो दर्दुरकोऽपि तथा कुरुते। )

शर्श०। हीँ हीँ हीँ हीँ हीँ हीँ हीँ हीँ।

दर्दु०। हाँ हाँ हाँ हाँ हाँ हाँ हाँ हाँ।

द० प०। ( सन्त्रस्तः ) अब्रह्मण्यम् अब्रह्मण्यम्! पलायध्वं पलायध्वं सर्वे। शवोऽयं पिशाचाविष्ट एव।

सर्वे। ( भयातुराः ) आँ आँ आँ आँ। ( लोप्त्रादिकं विहाय महातङ्कविह्वलाः सर्वे समुद्भ्रान्ताः पलायिताः। शर्शरीकश्चिताया अवतरति। दर्दुरको गुल्माभ्यन्तरादाविर्भवति। )

शर्श०। हीँ हीँ हीँ हीँ हीँ हीँ।

दर्दु०। अरे नराधम! अपि नाम जीवसि त्वम्?

शर्श०। ( अनुनासिकस्वरेण ) नाहँ शँर्शँरीकँः। तँद्देहाँधिँष्ठिँतँः पिँशाँचोऽहँम्। एँषोँऽहं त्वाँ बाहुँभ्यां निष्पिँष्यँ कुँक्षिँगँतं कँरोँमि। एँहि। प्रँविशँ मे भुँजाँन्तरँम्। ( दर्दुरकमाश्लिष्यति। )

दर्दु०। मुञ्च मुञ्च मां प्रवञ्चक! तिष्ठत्वयम् अभिनयः। तव स्पर्शेनापि कलुषितोऽहं संवृत्तः। ( आत्मानं मोचयति। )

शर्श०। मर्षय सखे! मर्षय माम्। मणिकाञ्चनयोः संयोग एवेष्यते नतु विश्लेषः। अधुनैव त्वत्प्राप्यं कलशमूल्यं ते निर्यातयिष्यामि। एहि तावत्, किमिदं वस्तुजातं दस्युभिः परित्यक्तम् अवधारणीयमेव तत्। ( वात्यावर्त्तिकां प्रदीप्य तदालोकेन वस्त्रबन्धनमपनीय लोप्त्रजातमुभौ परीक्षेते। ) सखे दर्दुरक! दिष्ट्या वर्धसे। कुबेरैश्वर्यमिदं श्मशानकालिकाया अनुग्रहेणासादितम्। एकमर्धं

त्वया गृह्यताम् अपराधं ममास्तु। मदंशतस्ताम्रकलशमूल्यार्धमपि ग्रहणीयं त्वया। ( लब्धं धनादिकं विभजति )। मन्ये कृतप्रायश्चित्तोऽहम् अधुना। वीतसंशयश्च ते मानसम्।

दर्दु०। साधु साधु! सुशोभनमिदमाचरणं ते। शतायुस्त्वं भूयाः।

शर्श०। किन्ते भूयः प्रियं करोमि?

दर्दु०। सखे किमतः परमपि प्रियमस्ति?

नदीव स्वच्छाम्बुर्मरुविचरणश्रान्तपथिकं
प्रसन्ना कान्तेव प्रबलविरहोद्भ्रान्ततरुणम्।
स्वयं प्राप्ता लक्ष्मीरियमपि नवोद्भूतकरुणा
चिरं वित्ताभाव-व्यथितमनसं नन्दयति माम्॥१५॥

तथापीदमस्तु—विभवो यदि लभ्येत दैवानुग्रहसम्भवः।
तेनैव प्रशमं यातु परस्वग्रहणाग्रहः॥१६॥

( पटीपातनम्। )

समाप्तोऽयं निबन्धः॥ शुभमस्तु॥

---

# अनुप्रासमाहात्म्यम्

## Apt Alliteration's Artful Aid

Statesman पत्रे (Sunday October 13, 1959, p. 7, col. 5.) दृष्टम्—Witness told the Captain that this could be done with his *approved* provided Commander Nanavati carried an identity card. व्याकरणानुप्रासयो विरोधेऽनुप्रासो गरीयान्!

---

# पदपाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ऋग्वेदे यमसूक्ते [ १०।१४।२ ] श्रूयते—"नैषा गव्यूतिरपभर्तवा उ" इति। अत्र पदपाठे दृश्यते—अपऽभर्तवै इति। स्वरितादनुदात्तानां परेषां प्रचयः स्मृत इति प्रातिशाख्यसूत्रेणात्र भकाराकारस्य प्रचयस्वरो युज्यते। तत् कथमत्रानुदात्तत्वेनाधोरेखया निर्देशः? इति पृच्छति बीटन्महाविद्यालयच्छात्री श्रीमत्यपर्णा सर्वकारजा।

उच्यते। ऋक्प्रातिशाख्य उक्तम्—

यथा सन्धीयमानानामनेकीभवतां स्वरः।
उपदिष्टस्तथा कुर्यादक्षराणामवग्रहे ॥
पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान् ॥७।२४-२५

इति। अस्यार्थः। यथा सन्धीयमानानाम् एकीक्रियमाणानाम् अनेकीभवतां प्रश्लेषमप्राप्नुवतां स्वर उपदिष्टः, तथाक्षराणामवग्रहेऽपि जानीयात्। इति। अयं तावदुत्सर्गः। अस्यापवादमाह—पद्यादींस्त्विति। तुशब्दः पूर्वपक्षव्यावृत्तौ। द्व्युदात्तानां पदानां तवै चान्तश्च युगपत् [ ६।२।५१ ] इत्यादिसूत्रैः द्व्युदात्तस्वरकाणां पदानां पद्यादीन् उत्तरान् द्वितीयपर्वण आदिभूतान् असंहितवत् पूर्वेणासम्बद्धवत् जानीयात्। अपऽभर्तवै इत्येतत्पदं द्व्युदात्तम्, अस्यादिरन्तश्च स्वरावुदात्तौ। उदात्तादनुदात्तस्य स्वरित इति पकाराकारः स्वरितः। तत उत्तरवर्तिनो भकाराकारस्य स्वरितादनुदात्तानां परेषां प्रचयः स्मृत इति वचनेन प्रचये प्राप्ते द्व्युदात्तकपदस्य द्वितीयपर्वण आदौ स्थितत्वात् असंहितवदनुदात्तमेव विधीयते। उपगन्तवै-प्रभृतिष्वयमेव स्वरो बोध्यः।

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ [ ऋ० १।२४।८ ]

अनुपूर्वादेतेस्तुमर्थे सेसेन्निति तवैप्रत्ययः। तवै चान्तश्च युगपदित्याद्यन्तयोरुदात्तत्वम्। सा०। अनुऽएतवै। प० पा०।

आ नो दधिक्राः पथ्यामनक्त्वृतस्य पन्थामन्वेतवा उ ॥ऋ० १।४४।३

अश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ [ ऋ० १०।१६०।५ ]

गमेस्तुमर्थे सेसेन्निति तवैप्रत्ययः। गतिसमासे तवै चान्तश्च युगपदिति गतेः प्रकृतिस्वरत्वमुत्तरपदस्य चान्तोदात्तत्वम्।

बृहस्पतिः प्रायच्छद् वास एतत्सोमाय राज्ञे परिधातवा उ [ अ० सं० २।१३।२, १९।२४।४। ]

परिधातवै परिधातुम्। तवै चान्तश्च युगपदित्युभयपदप्रकृतिस्वरत्वम्। सा०।

"उभयपदप्रकृतिस्वरत्वम्" इत्याथर्वणभाष्यकारोक्तिस्तु न समीचीना, तवैप्रत्ययस्य प्रत्ययस्वरेण तकाराकारस्यैवोदात्तत्वप्रसङ्गात्।

गतिरनन्तरः। तादौ च निति कृत्यतौ। तवै चान्तश्च युगपत्। इति पाणिनीयः सूत्रक्रमः [ ६।२।४९-५१ ]। अत एव "तवै चान्तश्च युगपत्" इति सूत्रे गतेः "बहुव्रीहौ प्रकृत्या पूर्वपदम्" [ ६।२।१ ] इत्यतश्च प्रकृत्या पूर्वपदम् इत्यंशस्यानुवृत्तिर्भवतिर। अत एव व्याख्यातं काशिकायाम्—तवैप्रत्ययस्यान्त उदात्तो भवति, गतिश्चानन्तरः प्रकृतिस्व

इत्येतदुभयं युगपद् भवति।... तस्मात् पिता नाभिचरितवै। उपसर्गा आद्युदात्ता अभिवर्जमित्यभिरन्तोदात्तः। कृत्स्वरापवादो योगः।

अस्माकं मतेन सूत्रमिदं तन्त्रेणार्थान्तरमपि प्रतिपादयति। तवै-प्रत्ययान्तः शब्दो युगपदाद्युदात्तश्चान्तोदात्तश्च भवतीति द्वितीयोऽर्थः। तेन गतिविरहिता अपि तवैप्रत्ययान्ता एतवै-गन्तवै-पातवै-प्रभृतयो द्व्युदात्ता भवन्ति।

---

## पाकिस्तानशब्दस्य निर्वचनम्

**पाश्चपत्रे** (September 23, 1959 पृ: १९० ) दृष्टम्—

### Somebody's Pak has slid

I was surprised that the publishers of the *Concise Oxford Dictionary*, faced with the howls of rage that greeted their definition of Pakistan as part of India, did not cash in on Dr. Johnson's two hundredth and fiftieth anniversary celebrations last week and use the Doctor's classic reply to the woman who asked him why he had defined pastern as the knee of a horse in his dictionary: Ignorance, madam, pure ignorance. The name Pakistan has the tortured ingenuity of a good crossword puzzle clue. Sir Rhamat Ali, who invented it, explained that it stood for Punjab, Afghania, Kashmir, Iran, Sindh, Tukharistan, Afghanistan and BalochistaN (that last one's a bit of a stretch). Not only this, but the word means the Land of the Pure and Clean (or Pak) in Persian and Urdu. It is as though NATSOPA were Saxon for Home of Happy craftsmen. इति। वङ्गभाषायां पाकिशब्द. पक्षिवाचकः, महाप्राणवर्णोच्चारणाक्षमाणां मुखे च स्थानशब्दः स्तानरूपं परिगृह्णाति, अत एव पाकिस्तानशब्दस्यार्थः—पक्षिणामावास इति। अथवा पाकस्थानस्यैवापभ्रंशः पाकिस्तानमिति। तस्य चार्थो महानसमिति।

---

## अधिकन्तु न दोषाय

एकस्यां वङ्गभाषामय्यां कथायां दृष्टम्—माधुरी परम स्नेहे चन्द्रार आर एकवार शिरोश्चुम्बन करिया हासिया वलिलेन ( माधुरी परमेण स्नेहेन पुनरपि चन्द्रायाः शिरोश्चुम्बनं विधाय विहस्य प्रोवाच ) इति।

शिरः+घूर्णनम् = शिरोघूर्णनम् ।

शिरः+चुम्बनम् = शिरश्चुम्बनम् ।

शिरोघूर्णनम्+शिरश्चुम्बनम् = शिरोश्चुम्बनम् ।

एवमेवोपर्युद्धृते निबन्धे —

Two hundred*th* and fiftie*th* anniversaries+two hundred and fiftieth anniversary = two hundredth and fiftieth anniversary.

---

## श्रीमद्भगवद्गीताया दुर्गतिः

"रविवासरेर युगान्तर"पत्रे ( रविवार २६शे अग्रहायण १३६६ पृः घ स्त० ६), गीतातत्त्ववारिधिग्रन्थस्य समालोचनप्रसङ्गेनोक्तम्—श्रीमद्भागवदगीतार दार्शनिक ओ यौगिक व्याख्या उक्त ग्रन्थे सहज ओ सरलभावे सन्निविष्ट हइयाछे । इति ।

श्रीमद्भगवद्गीता+श्रीमद्भागवतम् = श्रीमद्भागवदगीता ।

वङ्गभाषायामाभाणको वर्तते—शुधु हरि नय गौरहरि इति । ( न केवलं हरिः, गौरहरिः ) । अत्रापि न केवलं श्रीमद्भागवतं न केवलं श्रीमद्भगवद्गीता, परमुभयोः सङ्करः । सङ्करो न शुभायेति गीतायां श्रीभगवतो घण्टाघोषः ।

---

## महायोगी श्रीसोहिरोबानाथः

[ श्रीगजानन लक्ष्मण रेगे, बि ए ]

योगीश्वरं शिवं वन्दे वन्दे योगेश्वरं हरिम् ।

कस्य खलु सुविज्ञस्य न विदितं सुगृहीतनामधेयस्य महायोगीश्वरस्य श्रीमत्स्येन्द्रनाथस्य शुभप्रदं नाम ? को वा श्रीमत्स्येन्द्रनाथस्य पिता कुत्र वाऽयं महाभागो जनिमलभतेति न किञ्चिदैतिह्यं साधनमुपलभ्यते । अस्य जनिमुद्दिश्य महाराष्ट्रसाधुशिरोमणि-श्रीज्ञानेश्वररचितभावार्थदीपिकायां पठ्यते—

क्षीरसिंधूचे परिसरीं । शक्तीच्या कर्णकुहरीं । नेणों कैं श्रीत्रिपुरारीं । सांगितलें जें ॥ तें क्षीरलोका आंतु । मकरोदरीं गुप्तु । होता तयाचा हातु । पैठें झालें ॥११५२॥

अयमाशयः । अथैकदा भगवान् देवाधिदेवस्त्रिपुरारिः श्रीशङ्करः क्षीरसिन्धो-रुपकण्ठे शक्तिरूपया पार्वत्या सहासीनस्तस्याः कर्णकुहरे योगमुद्दिश्य किञ्चिन्मन्त्रयमाणोऽ-वर्तत । तदानीं क्षीरकल्लोलाभ्यन्तरे मकरोदरे सुगुप्तं स्थितेन मत्स्येन्द्रेण तदाकर्णितम् ।

तच्च योगशास्त्रं तेन प्रकाशितं नाथपथनाम्ना। सुवेदितचरमेव लोके प्रथितयशस्को गोरक्षनाथाभिधानो नाथपथाचार्योऽस्यैव श्रीमत्स्येन्द्रनाथस्य शिष्यप्रवर इति। श्रीगोरक्षनाथस्य शिष्यः श्रीगहिनीनाथः। तदनुगृहीतो निवृत्तिनाथः। निवृत्तिनाथस्य च श्रीज्ञानदेवराजः। इतीयं नाथपथस्य लोकविश्रुताऽविच्छिन्ना शिष्यपरम्परा निखिलमहाराष्ट्रप्रदेशे बद्धमूलाऽस्ति।

अस्ति योगीन्द्रस्य जालन्धरस्यान्यतरा शिष्यपरम्परा यस्या मूर्धन्यो भारतभूपो गोपीचन्द्रो नाम। मत्स्येन्द्रनाथप्रवर्तितनाथपथस्य नैकविधा शाखा अद्यत्वेऽपि वर्तन्ते यास्वेकतमाया आचार्यः श्रीसोहिरोबानाथः। आम्बये इत्युपाह्वोऽयमुत्तरभारत उज्जयिन्याः परिसरे प्रथितोऽस्ति। महाराष्ट्रप्रदेशस्थोऽप्ययं स्वीये महाराष्ट्रप्रान्ते स्वकीयजनानामपि न सुविज्ञात इति दैवदुर्विलसितं खलु। वस्तुतः पुण्यभाजां चरितं सर्वैं र्जनै र्देशकालनिरपेक्षं ज्ञातव्यमिति हेतोरस्योत्तमश्लोकस्य पुण्यचरित्रलेखने सप्रश्रयं प्रवृत्तोऽस्मि।

अस्ति श्रीपरशुरामक्षेत्रे पुराणप्रसिद्धे गोमन्तको नाम नैकविधसृष्टिसौन्दर्यसनाथः प्रदेशः। "अविभाज्यघटकत्वेन भौगोलिकदृष्ट्या भारतस्यैव भागोऽयम्, निर्गम्यतां निर्गम्यतां पोर्तुगालराजपुरुषाः" इत्युद्घोषडिण्डिमनिनादेन सद्यो लब्धभारतकीर्तिरयं धनधान्यसम्पन्नः प्रदेशः श्रुतकीर्तिरेव पुराणकालादारभ्य। तथाहि—

वैतरण्यां दक्षिणे तु सुब्रह्मण्यास्तथोत्तरे।
सह्यात् सागरपर्यन्तं शूर्पारकमवस्थितम्॥
शतयोजनदीर्घं च विस्तृतं त्रीणि योजनम्।
भार्गवोत्पादिता पृथ्वी समुद्रात् सुखहेतुना॥
तस्यास्तु दक्षिणे भागे कुशस्थलिरुदाहृता।
मतग्रामस्तथा चान्ये गोमाद्रिश्चाप्युदाहृतः॥
गोमाऽचले मध्यभागे पुण्या गोवापुरी स्थिता
गोकर्णादुत्तरे भागे सप्तयोजनविस्तृता।
तत्र गोवापुरी नाम नगरी पापनाशिनी॥
गोवापुर्या दर्शनेन पापं हन्ति पुरार्जितम्।
यथा रवे र्दर्शनेन तमो याति विशीर्णताम्॥
मन्त्रौषधितपोयोगबलेन जितमन्यवः।
यस्मिन् वसन्ति विप्राश्च षट्कर्मनिरताः सदा॥ सूतसंहिता अ० १६

गोमाद्रे र्गोमाचलस्य वा गोमान्तकः पर्याय इति स्पष्टं सीमितप्रदेशानां निर्देशात्। प्रथमं तावदियं पुण्यभूः ख्रिस्तीयचतुर्दशशताब्द्यामुत्तरतो यवनैराक्रान्ता। तेषामा-

क्रमणेन धर्मस्य महती हानिः सञ्जाता। पञ्चदशशताब्द्या आरभ्य च पुनः पोर्तुगालदेशीयैः ख्रिस्तानुयायिभिर्भूभागोऽयमुद्ध्वस्तीकृतः, तीर्थानि भ्रष्टानि, कृताश्च परःशतं देवालया भूमिसात्। स्वधर्मख्यापनार्थं नैकविधानि भीषणकृत्यान्याचरितवत्सु तेषु बहवो जना अगतिकतयेशवीयधर्मं स्वीचक्रुः। परःशतं सारस्वतब्राह्मणकुलानि प्राणभयेन स्थानान्तरं गत्वेतस्ततः परिभ्रमन्ति कालेन तत्तद्देशेषु न्यवात्सुः। आम्ब्रियेकुलोत्पन्नो वत्सगोत्री कश्चित्सारस्वतयुवा श्रीअनन्तशर्मा निकटवर्तिनं पालियेग्राममाश्रयार्थं गत्वा तत्रैव न्यवसत्। ग्रामोऽयं तदानीं सावन्तवाडीसंस्थानाधिपस्य भोंसलेनामकस्य हिन्दूधर्मानुयायिन आधिपत्य आसीत्। अनन्तशर्मा च कालेन तत्र गणकलेखकत्वेनोपाचरन्नासीत्। योगीश्वरः सोहिरोबानाथोऽस्य सत्यवृत्तस्य धर्मशीलस्य ब्राह्मणस्य पुत्रः पेडणेमहालान्तर्गत पालयेग्रामे ख्रिस्तीये १७१४ तमेऽब्दे जनिमलभत। ( क्रमशः )

## पुस्तक-परिचयः

**Prin. V. S. Apte's Practical Sanskrit-English Dictionary,** Part III ( य-ह ). **Prasad Prakashan, Poona 2. Rs. 45/-**

संस्कृतभाषाप्रणयिनां परमोपकारकोऽयमभिधानकोशः साम्प्रतं समाप्तिं गत इति परं प्रमोदस्थानमस्माकम्। अभिनवेऽस्मिन्मुद्रणे वेदशिल्पशास्त्रादिगता बहवो नवीनाः शब्दाः सोदाहरणाः सन्निविष्टाः। अत्र च Appendix A Sanskrit Prosody, Appendix B giving the dates, works etc. of Important Sanskrit writers, Appendix C On Important Geographical Names in Ancient India, Appendix D A List of Old Sanskrit Lexicons, Appendix E A Collection of Popular Sanskrit Maxims, Appendix F Grammatical Concordance, वर्तन्ते।

छात्राणामध्यापकानां संस्कृतानुरागिणां च सर्वेषामेव परमोपकारकोयं ग्रन्थ इति पुनः पुनरुद्घोषितमस्माभिः। परं खण्डत्रितये यास्तावदुत्कटा अशुद्धयो वर्तन्ते तासां शुद्धिपत्रमवश्यमेव मुद्रणीयम्।

अस्मिन्नेव खण्डे 1520 पृष्ठे द्वितीयस्तम्भे दृश्यते—आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयोऽभूत् U. iv. 18 इति। एतत्तु विस्पष्टमेव प्रामादिकम्! न माङ्योगे इत्यडागमप्रतिषेधोऽत्र जागर्ति। अत एव "मा संशयो भूत्" इत्येवं मुद्रणीयम्।

( क्रमशः )

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| | | |
|---|---|---|
| January, 1960. | १८८१-शकीय माघस्य १४श-वर्षस्य पञ्चमी संख्या | Vol. XIV No. 5 |


## आभाणकमाला

१। वचने का दरिद्रता ?

Greek. Polloi megala epaggellontai, mēde mikra poiêsai dunamenoi.

Many promise great things without being able to do little things.

बहवो महान्ति कार्याणि साधयेमेति प्रतिश्रृण्वन्ति परं ते क्षुद्रमपि कार्यमनुष्ठातुं न प्रभवन्ति ।

२। ब्राह्मे मुहूर्ते उत्थातव्यम् ।

Lat. Aurora quia habet aurum in ore.

German. Morgenstunde hat Gold im Munde.

मुखे प्रभातकालस्य सुवर्णं वर्तते खलु ।

German. Die Morgenstund hat die Arbeit im Mund.

मुखे प्रभातकालस्य सत्कर्म वर्तते किल । ( प्रातरेव सर्वैः स्वस्वकर्मसु प्रवर्तितव्यम् । )

French. Travail d'aurore amène l'or.

प्राभातिकः परिश्रमः सुवर्णमानयति ।

French. Heure du matin, heure du gain.

प्रभातकालः खलूपार्जनकालः ।

Lat. Aurora Musis amica est.

The dawn is the (best) friend of the Muses.

प्रभातं खलु मित्रं वाग्देव्याः । प्रभात एव सरस्वती समाराधनीया । छात्रैः प्रभात एव पाठोऽनुशीलनीयः ।

# ब्राह्मणरत्नमञ्जूषा

[ ऐतरेयब्राह्मणम् ३३।३ ]

[ प्रियबालकाः, नूनं पठितं श्रीमद्भिर्मञ्जूषायां व्यतीते मासि रासभसरिदाख्यायिका। एतरेयब्राह्मणे हरिश्चन्द्रोपाख्यानेऽपि पुरुष-प्रयत्नस्य माहात्म्यं कीर्तितम्। कूपमण्डूकः स्वावासकूपाद्बहिः किमपि न विजानाति, किमपि नार्जयति। उदुम्बरमशकोऽपि स्वस्योदुम्बर-वृक्षस्य समन्तात् परिभ्रमति बहिःस्थितस्य विश्वस्य किमपि न जानाति न वा किमप्युपकरोति। अत एव वत्साः श्रीमद्भिः साहससम्पन्नैः परिश्रमशीलैर्भवितव्यं गृहकोणं च परित्यज्य देशान्तरमपि गन्तव्यं तत्र च प्रतिष्ठार्जनाय समुद्योगः कर्तव्यः। ]

नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम।
पापो निषद्वरो जन इन्द्र इच्चरतः सखा॥

चरैव॥

सायणभाष्यम्। आ समन्ताच्छ्रान्त आश्रान्तः सर्वत्र पर्यटनेन श्रान्तिं प्राप्तस्तद्विप-रीतोऽनाश्रान्तः एकत्रैव निवासशीलस्तादृशाय तथाविधस्य पुरुषस्य श्रीर्बहुविधा सम्पन्नास्ति। यद्वा नानेति पदच्छेदः। श्रान्ताय सर्वत्र पर्यटनेन श्रान्तस्य नाना श्रीर्बहुविधा सम्पदस्तीत्यनेन प्रकारेण रोहित वयं नीतिकुशलानां पुरुषाणां मुखाच्छुश्रुम। वरो जनः विद्यादिभिः श्रेष्ठोऽपि पुरुषः नृषत् पापो नृषु मनुष्येषु सीदतीति नृषत्। श्रेष्ठोऽपि बन्धुगृहेषु सर्वदावस्थितस्तैरवज्ञातस्तुच्छो भवेत्। अतस्तस्य पितृगृहे वासो न युक्तः। न चारण्ये चरतो मम सहायो नास्तीति शङ्कनीयम्। इन्द्र एव परमेश्वर एव चरतस्तव सखा भविष्यति। तस्माच्चरैव सर्वथारण्ये *चरस्वेत्येवमुवाच।

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः॥

चरैव॥

चरतः पर्यटनं कुर्वतः पुरुषस्य जङ्घे पुष्पिण्यौ भवतः। यथा पुष्पयुक्ता वृक्षशाखा लता वा सुगन्धोपेता सेव्या भवति एवं चरतो जङ्घे श्रमजयेन सेव्ये भवतः। तथैवात्मा

---

*चरस्वेति पदं प्रामादिकम्, चरतेः परस्मैपदित्वात्।

मध्यदेहो भूष्णुर्वर्धिष्णुः फलग्रहिरारोग्यरूपफलयुक्तो भवति। यथा वर्धमानो वृक्षः कालेन फलानि गृह्णाति, एवं चरतः पुरुषस्य बीजादिदीपनादिपाटवेन मध्यदेह आरोग्यरूपं फलं गृह्णाति। तथैवास्य चरतः पुरुषस्य सर्वे पाप्मानः सर्वपापानि प्रपथे प्रकृष्ट तीर्थक्षेत्रादिमार्गे श्रमेण तत्तद्देवतादिदर्शने तीर्थयात्रादिप्रयासेन हता विनाशिताः सन्तः शेरे शेरते शयाना इव भवन्ति। यथा शयानाः पुरुषाः स्वकार्यं कृषिवाणिज्यादिकं कर्तुमशक्ता एवं पुण्येन विनष्टाः पाप्मानो नरकं दातुमसमर्था इत्यर्थः। तस्मात् सर्वथारण्ये चर *न पितुर्गृहेऽवतिष्ठस्व।

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य चराति चरतो भगः॥
चरैव॥

भगः सौभाग्यम् आसीनस्योपविष्टस्यास्ते तथैव तिष्ठति न तु वर्धते, अभिवृद्धिहेतोरुद्योगस्याभावात्। तिष्ठत उपवेशनं परित्यज्योत्थानं† कुर्वतः पुरुषस्य भग ऊर्ध्वोऽभिवृद्धेरुन्मुखस्तिष्ठति, कृषिवाणिज्याद्युद्योगस्य सम्भावितत्वात्। निपद्यमानस्य भूमौ शयानस्य भगः शेते निद्रां करोति, विद्यमानधनरक्षादिचिन्ताया अप्यभावात् सर्वथैव विनश्यति। चरतस्तेषु तेषु देशेष्वर्जनार्थं पर्यटनं कुर्वतः पुरुषस्य भगः सौभाग्यं चरति दिनेदिने वर्धते। तस्मात् त्वं चरैव ‡न त्वेकत्र तिष्ठ।

कलिः शयानो भवति सञ्जिहानस्तु द्वापरः।
उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन्॥
चरैव॥

चतस्रः पुरुषस्यावस्थाः—निद्रा तत्परित्याग उत्थानं सञ्चरणं चेति। ताश्चोत्तरोत्तरश्रेष्ठत्वात् कलि-द्वापर-त्रेता-कृत-युगैः समानाः, ततश्चरणस्य सर्वोत्तमत्वाच्चरैवेति।

चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन्॥
चरैव॥

---

*न-शब्दो निषेधार्थको न पुनर्वारणार्थकः। अत एव 'न पितुर्गृहेऽवतिष्ठथाः' 'मा पितुर्गृहेवस्थिथाः' इति वा वक्तव्यम्।

†उत्थापनं कुर्वत इति पाठो न समीचीनतया प्रतिभाति।

‡मा त्वेकत्र स्था इति पठनीयम्।

चरन्नेव पुरुषः क्वचिद् वृक्षाग्रे मधु माध्वीकं लभते। क्वचित् स्वादु मधुरम् उदुम्बरादिफलविशेषं लभते। एतदुभयमुपलक्षणम्। तत्र तत्र विद्यमानं भोगविशेषं लभते। तत्र सूर्यो दृष्टान्तो यः सूर्यः सर्वत्र चरन्नपि न तन्द्रयते कदाचिदप्यलसो न भवति तस्य सूर्यस्य श्रेमाणं श्रेष्ठत्वं जगद्वन्द्यत्वं पश्य। तस्माच्चरैव।

[ श्रेमाणम्। शतपथब्राह्मणे श्रूयते—श्रियो वै पर्जन्यो वर्षति। तद् विद्यात्। श्रेमाणं मे महिमानमधारयमाणोपाविक्षत्, श्रेयान् भविष्यामीति। तामात्मन्येव कुर्वीत। आत्मन्येव तच्छ्रियं धत्ते [ १२।४।१।११ ]। इति।

शतपथब्राह्मणतो विज्ञायते श्रेमञ्छब्दोऽन्तोदात्तः। अत एव श्रीमत्-प्रातिपदिकादिमनिचि मतोर्लुकि छान्दसश्रादेशे रूपमिति विभाव्यते। ]

---

# रवीन्द्रनाथस्य लेखेषु संस्कृतोद्धृतिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( पूर्वतोऽनुवर्तते )

त्रयोदशपरिच्छेदे दृश्यते—'धीरसमीरे यमुनातीरे वसति वने वनमाली' इति। एतद् गीतगोविन्दगतम् ( ५।९ ध्रु० )।

पञ्चदशे परिच्छेदे दृश्यते—आमि वलछि आपनादेर कोन भय नेइ। आपनारा वनेर विहङ्ग, दुटिखानि सन्देश खेयेइ आवार वने उड़ यावेन, केउ आपनादेर बाँधवे ना। "नात्र व्याधशराः पतन्ति परितो, नैवात्र दावानलः—" दावानलेर परिवर्ते डावेर जल पावेन। ( अहं प्रतिजाने लेशतोऽपि भवतां भीतिर्नास्तीति। भवन्तस्तावद् वनस्य विहङ्गाः, कतिचिन्मोदकान् भक्षयित्वैव पुनरपि वनमुत्पतिष्यन्ति, कोऽपि भवतो न निरोत्स्यति। नात्र व्याधशराः पतन्ति परितो नैवात्र दावानलः। दावानलस्य स्थानेऽपक्वनारिकेलसलिलं लप्स्यन्ते। ) इति।

नात्र व्याधशरा इति श्लोको मृगविषयकः। स च यथा—

नात्र व्याधशराः पतन्ति परितो नैवात्र दावानलो
नाप्युच्चावचभीतिरस्ति कुहचिन्नो वागुरा भङ्गुराः।
पर्यालोच्य कुरङ्गकेण विहितो नक्षत्रनाथाश्रयो
नो जानाति यदत्र दास्यति विधिः स्वर्भानुदन्तव्रणम्॥

इति। श्लोकोऽयं विषमालङ्कारभेदस्य प्रकृष्टमुदाहरणम्।

३५३-पृष्ठे दृश्यते—सखि, न युक्तमकृतसत्कारम् अतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम् इति। अभिज्ञानशकुन्तलस्य प्रथमाङ्केऽनसूयायाः प्राकृतवचनस्यच्छायेयम्।

३५४-पृष्ठ दृश्यते—मधुरेण समापयेदिति। वैद्यनिकाये प्रसिद्धिर्वर्तते—

कुर्यात् क्षीरान्तमाहारं दध्यन्तं न कदाचन।
लवणाम्लकटूष्णानि विदाहीनि च यानि तु।
तद्दोषं हर्तुमाहारं मधुरेण समापयेत्॥ इति।

३५७-पृष्ठ दृश्यते—

गतं तद्गाम्भीर्यं तटमपि चितं जालिकशतैः
सखे हंसोत्तिष्ठ, त्वरितममुतो गच्छः सरसः॥ इति।

अत्र मुद्राकरानुकम्पया गच्छपदायोपहृतो विसर्जनीयो वाचामगोचरमुद्वेगमुपजनयति सहृदयानाम्। श्लोकस्य शुद्धाकारः प्रदर्श्यते—

गतं तद्गाम्भीर्यं तटमपि चितं जालिकशतैः
सखे हंसोत्तिष्ठ त्वरितममुतो गच्छ सरसः।
न यावत्पङ्कान्तःकलुषिततनुर्भूरिविलसद्-
बकोऽसौ वाचालश्चरणयुगलं मूर्ध्नि कुरुते॥

रवीन्द्रनाथेन प्रथमार्धस्यानुवादः कृतः—

से गाम्भीर्य गेल कोथा, नदीतट हेरो होथा
जालिकेरा जाले फेले घिरे—
सखे हंस ओठ ओठ, समय थाकिते छोटो
हेथा हते मानसेर तीरे॥ इति।

अत्र गाम्भीर्य-शब्देन सरसो गभीरत्वं बोध्यते। सुगभीरमपि सर इदानीं जम्बालशेषं संवृत्तम्। सरसस्तावदियं समवस्था, तटमपि जालिकशतैः सङ्कुलं वर्तते।

३५८-पृष्ठे दृश्यते—स्थान खाराप वटे। नड़वार जो नाइ। आमि तो अचल हये वसे आछि—हाय हाय—

अयि कुरङ्ग तपोवनविभ्रमात्
उपगतासि किरातपुरीमिमाम्।

(कामं स्थानमिदमभव्यम्, चलनस्योपायो नास्ति। अहं तावदचल एव तिष्ठामि। हन्त! हन्त! अयि कुरङ्ग!...) समग्रः श्लोकः सुभाषितग्रन्थेषु यथा—

अयि कुरङ्गि तपोवनविभ्रमादुपगतासि किरातपुरीमिमाम्।
इह न पश्यसि दारय मारय ग्रस(?) पिबेति शुकानपि जल्पतः॥ इति।

रवीन्द्ररचनावल्याम् उपगतासीत्यत्र स्त्रीप्रत्ययः स्फुट एव, अत एव 'कुरङ्गि' इति मुद्रणीयम्।

३५९-पृष्ठ दृश्यते—फलेन परिचीयते। समग्रः श्लोको यथा—

एका भूरुभयोरैक्यमुभयोर्दलकाण्डयोः।
शालिश्यामाकयोर्भेदः फलेन परिचीयते॥

प्रजापते र्निर्बन्धस्यान्ते दृश्यते श्लोकः—

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु॥ इति।

इदं खलु कविकुलचूडामणेर्विक्रमोर्वशीयस्थं भरतवाक्यम्। सुमहत् खलु सौभाग्यमस्माकं यच्छ्लोकोऽयमविकृत एव मुद्रितः।

[ गतस्य शोचना नास्ति—

कृतस्य करणं नास्ति मृतस्य मरणं तथा।
गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम्॥ नीतिप्रदीप ११ ]

---

# वार्ता च कौतुककरी

## *यमदूतानां प्रमादः*

धावयग्रामस्थो रजको धवतालः पञ्चत्वमुपगतः। विलपद्भिः स्वजनैः सरित्तटे यावत्तस्य मृतदेहस्योपरि काष्ठानि निधीयन्ते स्म तावत् स चितोपरि समैजत्। गतेषु च केषुचिन्निमेषेषु स समुत्थाय दण्डवदवस्थायावदत्, यमदूतैः प्रमादादपरो धवतालो गृहीत इति ते यमराजेन मम जगति पुनर्नयनाय समादिष्टा इति। ( वस्तितस्तारवार्ता। P.T.I. Statesman, Sept. 24, 1959.)

---

# घूर्णायमानम्

मौरीफुलकथायां दृष्टम्—जनहीन जनपदेर ध्वंसस्तूपेर चारिपाशे घूर्णायमान कोन् अशरीरी आत्मार पैशाचिक उल्लास-भरा अट्टहासिइ सेदिन काने गियेछिल। ( पृः ७१ ) इति। वङ्गभाषायां प्रायेण घनायमानशब्दस्य सादृश्येन घूर्णायमानमेवोपलभ्यते। परं किं वापराद्धं घूर्णमानशब्देन ?

# प्रशंसापत्रम् !

चीनीयचिकित्सकेन सिंलीमहोदयेन सुबहूनि प्रशस्तिपत्राणि समधिगतानि। तत्रकं केनचन चीनीयरोगिणा लिखितम्। तच्च यथा—

Me velly sick man. Me Get Doctor Yan Sin. Takee him medicine. Velly more sick. Me get Doctor Hang Shie. Takee him medicine. Velly bad—think me go to die. Me callee Doctor Sing Lee. Him busy—no can come. Me get well.

अहमतीव पीडितः पुरुषः। अहं भिषजं यान्सिङ्मानाययामि। तस्य भेषजं निषेवे। पीडिततरो भवामि। भिषजं ह्रांशिमानाययामि। तस्य भेषजं निषेवे। अतीवास्वस्थः, मन्ये मुमूर्षुरस्मि। अहं भिषजं सिंलीमाह्वयामि। स कार्यान्तरव्यापृतः, न प्रभवत्यागन्तुम्। अहं स्वस्थः सञ्जातः।

अपरेणापि महापुरुषेणोक्तम्—I do not consult doctors, because I hope to die without them. न खल्वहं भिषग्भिर्मन्त्रये। तानन्तरेणैव मर्तुमिच्छामीति।

---

## बालमनोरमापाठविमर्शः

*प्रथमातिक्रमणे कारणाभावात्*
*प्रथमस्यातथाभावे प्रद्वेषः किंनिबन्धनः*

"हलन्त्यम्" इति सूत्रे बालमनोरमायां दृश्यते—न चैवमपि सुट्प्रत्याहारष्टा इति टकारेण किं न स्यात्, रान्तसमुदायापेक्षया तस्यान्त्यत्वादिति वाच्यम्, प्रथमातिक्रमणे कारणाभावेन सुट्प्रत्याहारस्यौटष्टकारेणैव ग्राह्यत्वात्। उक्तं च जैमिनिना—प्रथमो वा नियम्येत कारणस्यानतिक्रमादिति। मीमांसादर्शनस्यैकादशाध्यायस्य प्रथमे पादे त्रयश्चत्वारिंशत्तमं सूत्रम्—प्रथमं वा नियम्येत कारणादतिक्रमः स्यादिति। यदिच्छन्दोबद्धं सूत्रं काम्यते तर्हि कारणात् स्यादतिक्रम इति पठनीयम्। कारणस्यानतिक्रमादिति पाठ विधेयाविमर्शदोषो दुरुद्धरः।

न्यायोऽयं प्रथमस्यातथाभावे प्रद्वेषः किंनिबन्धन इत्याकारेणापि दृष्टिपथमापतात।

# क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कविकुलशिरोमणिना कालिदासेन कुमारसम्भव उक्तम् [ ५।५ ]—

इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ इति ।

ऋग्वेदे दशममण्डले इन्द्रवसुक्रसंवादे श्रूयते [ १०।२८।४ ]—

इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहन्ति ।
लोपाशः सिंहं प्रत्यञ्चमत्साः क्रोष्टा वराहं निरतक्त कक्षात् ॥

इति । अस्यार्थः । हे जरितः स्तोतः, इदं मे मत्त आ सुचिकिद्धि सम्यग् विजानीहि । नद्यः सरितः शापं सलिलम् । शाप इत्युदकनाम । प्रतीपं प्रतिकूलं वहन्ति । अपि लोपाशः शृगालविशेषो मृगो वा । सिंहं प्रत्यञ्चम् आत्मानं प्रति गच्छन्तम् अत्साः अत्सारीत् आभिमुख्येन गच्छति । क्रोष्टा शृगालो वराहं सूकरं कक्षात् गहनदेशात् निरतक्त निर्गमयति । इति ।

अध ते विश्वमनु हासदिष्टय आपो निम्नेव सवना हविष्मतः ।
यत्पर्वते न समशीत हर्यत इन्द्रस्य वज्रः श्नथिता हिरण्ययः ॥ १।५७।२

समग्रमिदं जगद् अनन्तरमेव क्रमेण तव यागाय [ अभवत् ] । [ तथा ] यजमानस्य सवनानि च त्वामेव—आपः निम्नानीव अभिगच्छन्ति ।

शतं वा यः शुचीनां सहस्रं वा समाशिराम् ।
एदु निम्नं न रीयते ॥ १।३०।२

य इन्द्रः शुचीनां शुद्धानां सोमानां शतं वा समाशिरां समीचीनेनाशिरसमाख्येन श्रपणद्रव्येणोपेतानां सोमानां सहस्रं वा एदु रीयते आगच्छत्येव । सोऽस्मान् अनुगृह्णात्विति शेषः । सोमप्राप्तौ दृष्टान्तः—निम्नं न । यथा निम्नप्रदेशम् आप आप्नुवन्ति तद्वत् ।

इन्द्रश्च वायवेषां सोमानां पीतिमर्हथः ।
युवां हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ ४।४७।२

हे वायो त्वमिन्द्रश्च एषां गृहीतानां सोमानां पीतिं पानम् अर्हथः । युवां हि खलु इन्दवः सोमाः यन्ति प्राप्नुवन्ति । निम्नं प्रदेशम् आपो न सम्यक् उदकानि यथा सहैव गच्छन्ति तद्वत् सर्वे सोमा युवां हि यन्ति ।

सुता इन्द्राय वायवे सोमासो दध्याशिरः ।
निम्नं न यन्ति सिन्धवोऽभि प्रयः ॥ ५।५१।७

इन्द्राय वायवे च सोमासः सोमा दध्याशिरः दध्याश्रयणाः सुताः अभिषुताः सम्पादिताः । ते च निम्नं गर्तं सिन्धवः न नद्य इव हे इन्द्रवायू युवाम् अभि यन्ति प्रयः अन्नरूपाः ।

सोमः सुतो धारयात्यो न हित्वा सिन्धुर्न निम्नमभि वाज्यक्षाः ।
आ योनिं वन्यमसदत्पुनानः समिन्दुर्गोभिरसरत् समद्भिः ॥ ९।९७।४५

सुतः सोमः धारया अत्यो न अश्व इव हित्वा गत्वा । वाजी वेगवान् सोमः सिन्धुर्न नदीव निम्नं प्रदेशम् अभ्यक्षाः अभिक्षरति । ततः पुनानः पूयमानः सोमः वन्यं वृक्षभवं योनिं स्थानं कलशम् आ असदत् आसीदति । सोऽयमिन्दुः सोमः गोभिः गोविकारैः क्षीरादिभिः सम् असरत् सं सरति । तथा अद्भिः वसतीवरीभिश्च संगच्छते ।

प्र निम्नेनेव सिन्धवो घ्नन्तो वृत्राणि भूर्णयः ।
सोमा असृग्रमाशवः ॥ ९।१७।१

निम्नेन प्रवणेन देशेन सिन्धवो नद्य इव वृत्राणि शत्रून् घ्नन्तः भूर्णयः क्षिप्रगामिन आशवः सोमाः प्र असृग्रम् प्रगच्छन्ति द्रोणकलशं प्रति ।

---

स्वर्गताप्पाशास्त्रिणां

# लावण्यमयी

## चतुर्थः परिच्छेदः ।

### *सरलायाः समागमः ।*

अतिक्रान्तानि कियन्तिचिद्वर्षाण्यदर्शनं गतायाः सरलायाः । एषा किल बहिश्चराः प्राणाः श्रीमतो रमेशमहाभागस्येति विसोढवताऽपि दुरुत्तरं विप्रयोगव्यसनं स्वप्नेऽपि न व्यापारितं मनः पुनःपरिणय एतेन । अव्यभिचारि हि भवति महात्मनां प्रेम । विज्ञापितः किलायं पुनःपरिणयविषयेऽनेकधानेकैः, किन्तु न व्यचालयदवधारणां स्वीयाम् । अतिगतानि किल प्रायेण द्वादश वत्सराणि दर्शनपथातीतायाः सरलायाः । एतानि पुनरेनां विचिन्तयतैव कथंकथमप्यतिवाहितानि श्रीमता रमेशमहाभागेन । एवं क्षणमेकमपि सरलामविस्मरतः श्रीमतो रमेशस्यान्तरं न जानीमः कुतो वा लावण्यमयीसुधाकर समागमदिन ऐकान्तिकमदृष्टपूर्वमेवास्वास्थ्यमापेद इति । न किल निदानमस्

स्वयमप्यज्ञायि श्रीमता रमेशेन। विहरति स्म किल प्रत्यहमेव हृदयेऽस्य श्रीमती सरला। तथापि नन्वसौ दिवसेऽस्मिन्ननालोकितपूर्वमन्यादृशमेव स्वरूपमापन्ना प्रादुरभून्मनस्येतस्य। तदेकतानतां चोपागतवतः समुल्लासेवास्य चक्षुष्पथे शरीरिण्या इव सौन्दर्याधिदेवतायाः सरलाया मूर्तिः। तत एव चाधिकाधिकमेव वैयाकुलीमापद्यमानमन्तरङ्गमात्मनो विनोदयितुकामो विनिर्गत्य मन्दिरात् सायन्तनसमीरणासेवनादिभिरत्यवाहयत् समयं कमपि रमेशमहाभागः। अस्तमिते च भगवति दिवाकरे प्रतिनिवृत्तः कथंकथमपि निर्वर्त्य तत्कालनिर्वर्तनीयानि कर्माणि शयनमन्दिरमनुप्रविष्टः सिषेवे क्षीराब्धिफेन-पटलपाण्डुरां हंसतूलमयीं शय्याम्। नातिचिरादेव चाग्राहि निद्रया सोऽयम्।

यथा किल प्राग् द्वादशभ्यो वत्सरेभ्यः प्रगाढं प्रसुप्तः समाकर्ण्य शिशुरुदितं प्राबुध्यत रमेशमहोदय एवमस्मिन्दिवसे विस्मयस्तिमितेनेव मनसाऽवितर्कितमेवायं प्राबुध्यत। अनवगच्छन्निव च किञ्चिदपि समाचक्रन्द प्रेयसि प्रेयसीति क्रियासमभिहारेण। शुश्राव च परिचितपूर्वमिव हृदयग्राहि विडम्बितसुधारसमत्र प्रतिवचनं 'किमाज्ञापयत्यार्यपुत्रः' इति।

समाकर्णयन्नेव च प्रत्युक्तिमिमां सावेगमेवोदतिष्ठच्छयनीयतलाद्रमेशमहाभागः। नासीदिदानीं प्रदीपः शयनमन्दिर एतस्य। अनावृतान्येव त्वभूवन्वातायनकपाटानि। परिप्लावयामासेव चेदानीं पीयूषरसपूरेण धरातलमशेषं ज्योत्स्ना। अत एव च नासीदभ्यन्तरेऽस्य शयनागारस्य प्रगाढस्तमःप्रसरः। आसीच्च मन्दतमोऽप्ययमालोकः स्थूलस्थूलानामभ्यन्तरवर्त्तिनामर्थानामालोकने पर्याप्तः। अत एव च शयनतलेऽपि निषीदता प्रत्यक्षीकृतमिदानीं रमेशमहाभागेन यन्मूर्तिमतीव सुकुमारता मनोहराकृतिर्युवतिः कापि मन्दंमन्दमुपसर्पति द्वारोपान्तमिति। तस्याश्च तच्छरीरसौभाग्यं स च सुकुमारमधुरश्चरणविन्यासस्ते च मुहुर्मुहुः परावर्त्य वदनाम्बुजमन्तरान्तरा क्रियमाणाः कटाक्षविक्षेपाः समुत्कीर्णा इवाभवन्नन्तरङ्गपटले श्रीमतो रमेशमहाभागस्य। तया च निभृतमिव गृहीतहृदयोऽयमुत्थाय शयनीयतलात् सरभसमेनामनुगन्तुमारेभे। यावत्पुनर्विन्यस्यत्यसौ पदानि द्वित्राणि तावदेव तिरोदधे मृगेक्षणा सेयम्। ततश्च समुद्घाटितद्वारः किल रमेशमहाभागः सुनिपुणमेव व्यकिरत्तत इतो दृष्टिम्। नैव पुनरासीदसौ नयनगोचरेतस्य। मन्यामहे सेयमाकाश एव लीनेति।

तदिदमवलोकमानश्च सपदि साध्वसेन समाक्रान्तहृदयो रमेशमहोदयः परिजनानाचुक्रोश। समाकर्ण्य च तदेतदाकस्मिकमाक्रन्दितं सावेगमेव प्रबुध्यमानानां महीयानेवाभवत् संरम्भ एतेषाम्। अकाण्डाक्रन्दभीताश्च संरब्धा इव प्रचक्रन्दुः प्रकृतिभीरवो नार्यः। परिजनोऽपि च समुपसृत्य श्रीमन्तं रमेशमहाभागमाक्रन्दितनिदानमप्राक्षीत्। स पुन-

जाग्रतैवानुभूतमननुभूतपूर्वं स्वप्नमिव सीमन्तिन्यास्तस्याः साक्षात्कारं च तं च श्रवणसुभगं प्रतिभाषितरवं विचिन्तयन्ननन्यगतमानसः प्रथमतो न किञ्चिदपि प्रत्याह।

भूयो भूयस्तु साग्रहमेवाभ्यर्थ्यमानः संत्रस्याकारं प्रतिजगाद 'शङ्के प्रविष्टः सदनमास्माकीनं स्तेनः। तदन्विष्यतां तावदयं निपुणमेव' इति। निशम्य च सदने प्रवेशं स्तेनस्य साध्वसव्याकुलेन मनसा प्रज्वलय्य प्रदीपिकाः समादाय च करे कुलिशकर्कशान् दण्डान् सुष्ठुतमामन्वेषयामासुरशेषेऽपि मन्दिरे परिचारकाः। किन्तु कुतो नामाधिगम्यतां तस्करोऽमीभिः। न किल शक्यत उपलब्धुं महीयसाऽपि प्रयासेन किमप्यसदेवेति। व्यतिकरेण चामुना जाग्रतामेव निखिलानां व्यत्यगादशेषा रजनी। रमेशमहोदयस्य पुनः सुदूरापेतव प्रस्वापकथा। नयनयुगलं निमीलयत एव ह्यं तस्य पुरतः प्रादुर्भूय विहरति स्म संदृष्टपूर्वाऽसौ रमणी। यावत्पुनरसौ ग्रहीतुमेनां कामयमानश्चक्षुरुन्मीलयति तावदेवासौ तिरोधत्ते। तत एव च नान्वभवदिदानीं लेशतोऽपि स्वास्थ्यं मनो रमेशस्य।

इति लावण्यमय्यां चतुर्थः परिच्छेदः।

---

कवीन्द्र-रवीन्द्रनाथस्य

# "विदायः"

( अन्तिमामन्त्रणम् )

[ अनुवादकः—भट्टपल्लीस्थ-श्रीविष्णुपदभट्टाचार्यः ]

प्रयाण्यहं तावदहं प्रयाणि शून्याङ्कयाऽथोषसि पुत्रकेति।
हूतस्त्वयाऽहं 'न हि विद्यतेऽसा'—वित्येव वक्ष्ये, जननि! प्रयाणि ॥१॥
सहानिलेनाथ समीरभूतो वक्ष्यामि वक्षस्तव संस्पृशंश्च।
तथाऽपि मात र्न तु शक्ष्यसि त्वं नेतुं सकृन्मां तव बाहुबन्धम् ॥२॥
धृतोर्मिरूपं सलिलान्तरे मां न कोऽप्यभिज्ञातुमिह क्षमः स्यात्।
स्नानक्षणे मातरहं त्वयैव क्रीडारसास्वादनतत्परः स्याम् ॥३॥
वर्षाम्बुधारा पतिता यदा स्यात् स्मर्तासि मे त्वं शयिता क्षपायाम्।
मातस्तदाऽमुष्य वनस्य मध्ये गातास्म्यहं झर्झर-शब्द-गीतिम् ॥४॥
ततोऽम्बुवाहात् सहसाऽवतीर्णो निकेत-वातायनमध्यतस्त्वाम्।
विद्युत्-प्रकाशोऽहमवेक्ष्य यायां स्मितं त्वया मे किमहो स्मृतं स्यात् ॥५॥
क्षुद्रात्मजार्थं सुगभीररात्रौ जातप्रबोधा यदि सीदसि त्वम्।
नक्षत्रमूर्तिं दधता मया ते 'सुप्तिं भजस्वे'ति च शंसनीयम् ॥६॥

प्रस्वापवत्यां त्वयि चन्द्रिकाया मूर्त्या प्रवेक्ष्यामि गृहान्तरं ते ।
ततस्तवाक्ष्णोर्युगलं विचुम्ब्य तिरोहितोऽहं त्वरितो भवेयम् ॥७॥
स्वप्नात्मकोऽहं तव लोचनान्तर्लब्धावकाशोऽपि समागतः स्याम् ।
तवैव दृष्टेस्तदनन्तरं ते स्थास्यामि निद्राञ्च विगाहमानः ॥८॥
मिथ्याशया जागरिताऽऽत्महस्तस्पर्शेन पार्श्वे मृगयिष्यसे माम् ।
विलीयमानः क्व पुनर्गतः स्यां नैतत्त केनाऽप्यवधारणीयम् ॥९॥
दुर्गा-सपर्या-दिवसे हि सर्वे क्रीडाभिषक्ता भवनाङ्गने ते ।
चङ्क्रम्यमाणाः शिशवः सखेदं ब्रयु"र्गृहान्तः स हि नास्ति बालः" ॥१०॥
अहं तदानीं मुरली-स्वरेण भ्राम्यन् समन्ताद् गगनावलम्बी ।
त्वयैव सार्धं निखिलेषु मातस्तव प्रयासेष्वपि सञ्चरेयम् ॥११॥
पूजाप्रसङ्गेन मदर्थवासो मातृष्वसा मे स्वकरे निधाय ।
गृहागता त्वां यदि नाम पृच्छेत् "क्व वा गतस्ते बत पुत्रकोऽसौ" ॥१२॥
मातस्तवास्तु प्रतिवाक्यमेतद् "वत्सः स किं जातु मम प्रणश्येत् ।
अस्त्येव मे नेत्रकनीनिकायां वक्षस्यथाङ्केऽपि विलीयमानः" ॥१३॥

---

# स्तोभः

[ श्रीआशुतोषशर्मा विश्वासो वेदशास्त्री ]

वङ्गभाषायां प्रायेण "स्तोकवाक्य" इति पदं प्रयुज्यते। अस्यार्थश्च सान्त्वनावाक्यं मिथ्यापरपर्यायमिति। संस्कृत'स्तोक'शब्दश्चाल्पार्थक एव, तस्य च वङ्गीयं रूपं 'थोक्' इति सर्वेषामेव विदितम्। तर्हि वङ्गीयः स्तोकशब्द कुत आगत इति विचार्यमाणे वैदिकप्रसिद्धस्तोभशब्ददेवास्य समुत्पत्तिरिति सिद्धान्तः समुन्मिषति।

"ष्टुभु स्तम्भे" इति धातोर्घञ्प्रत्ययेनास्य रूपसिद्धिः। क्वचिदस्य पूरणार्थत्वमपि भवति। "stuff" इत्याङ्ग्लशब्दोऽस्यैव सनाभिरिति केचित्। स्तोभा नाम पूरणार्थकानि कानिचन पदानि यानि गानार्थं सामसु प्रपूर्यन्ते। तथाच शबरभाष्यम्—'य ऋगक्षरेभ्योऽधिको न च तैः सवर्णः, स स्तोभो नाम। ईदृशे हि लौकिकाः 'स्तोभ'शब्दमुपचरन्तीति। तद् यथा देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितम्। यदर्थवचनेभ्योऽधिकं विवर्णञ्च तदालोच्यैवं वक्तारो भवन्ति' ( ९।२।३९ ) इति। एवञ्च कालेन भाषायां 'स्तोभ'शब्द औपचारिकप्रयोगेण निरर्थकपर्यायः संवृत्तः। तस्यैवोच्चारणविकारेण पश्चिमवङ्गभाषायां 'स्तोक'रूपापत्तिः। पूर्ववङ्गीयभाषायां च 'स्तव'रूपपरिणतिः। तत्रैव च

सुतरां संस्कृतमूलपदानुगतत्वमित्यपि द्रष्टव्यम्। पूर्ववङ्गेष्वेवाद्यापि सुबहूनि प्राचीनपदान्युपलभ्यन्ते यान्यद्यत्वे पश्चिमवङ्गेषु लुप्तानि विस्मृतानि वा। यथा—मृत्तिकावालुकावाची सिकशब्दः। एतच्च वैदिकं पदं तैत्तिरीयारण्यके दृश्यते (१।१२) 'वायुः श्वेतसिकद्रुक' इत्यत्र। व्याख्यातञ्चैतत् सायणाचार्येण 'श्वेतानां सिकतानां द्रोग्धे'ति। वैदिकसिकशब्दात् केषाञ्चिन्मतेन तल्प्रत्यययोगेन लौकिकसंस्कृतसिकताशब्दव्युत्पत्तिः। असंशयमिदमपि पदं पूर्वं वेदेषु तात्कालिकप्राकृतेषु च प्रयुक्तमासीत् कालान्तरे तु तल्लौकिकवाङ्मये परिहृतम्। परन्त्वद्यापि तत्पदं पूर्ववङ्गीयभाषायां सिक् ( उच्चारणरीतिः 'छिक्' इति—यथा 'सेकः ( fomentation ) 'छेक' इत्युच्चार्यते ) इति रूपेण जागर्त्ति। देशीयमपीदं पदं पूर्वं वेदादिसाधारणमासीदिति सम्भावयितुं शक्यते।

यत्तु क्षीरस्वाम्यादिभिः कैश्चित सिच्धातोः सिकताशब्दो व्युत्पाद्यते तत्तु कुशकाशावलम्बनमिवाभाति। को नाम वालुकया सह सिच्धातोः सम्बन्धः? यद्यस्मन्मतमङ्गीक्रियते तर्हि सर्वथाऽव्युत्पन्नोऽयं शब्द इति मन्तव्यम्। "न सर्वाणीति गार्ग्यः। वैयाकरणानां चैके।" ( निरुक्तम् १।१२ )।

[ सिकताशब्दस्य निर्वचनमधिकृत्यास्मन्मतं वारान्तरे विवरीष्यते। मञ्जूषा-सम्पादकः। ]

---

# विनायकं हि कुर्वाणो रचयामास वानरम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## दूळभ-

ऋग्वेदे श्रूयते [ १।१५।६ ]—

युवं दक्षं धृतव्रत मित्रावरुण दूळभम्।
ऋतुना यज्ञमाशाथे॥

इति। अस्य च पदपाठः—'''धृतव्रता। मित्रावरुणा। दुःऽदभम्। इत्यादि। अत्र भाष्यकृतोक्तम्—दूळभं दुर्दहम्। शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्थः।''' दह भस्मीकरणे। दुःखेन दह्यत इति दुर्दहम्। ईषद्दुःसुष्वित्यादिना दुर्युपपदे दधेः खल्। व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य ङकारो हकारस्य च भकार इत्यादि।

Max Müller महोदयस्य द्वितीयमुद्रणेऽप्ययं पाठः। पुण्यपत्तनतः प्रकाशिते पुस्तकेऽप्ययं पाठ। कलिकाताविश्वविद्यालयतः प्रकाशिते श्रौतपाठेऽप्ययं पाठः। परं पाठस्यास्य प्रामादिकत्वे लेशतोऽपि संशयो नास्ति। अत्र Max Müller-महोदयेन प्रदर्शितानि पाठान्तराणि—उकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो M1. रेफस्य लोपः उकारस्य ऊकारो दकारस्य डकारो A 2. नृशब्दस्य (corrected to उर्-शब्दस्य) ऊकारो दकारस्य डकारो A 3. उब्द (corrected to उरशब्द)कारो दकारस्य डकारो B. उर [ शब्दस्य in marg. ] ऊकारो दकारस्य डकारो Ca. रेफस्य उकारो दकारस्य ळकारो G.। इति।

२।२८।८ मन्त्रभाष्ये दृश्यते—दूळभ दुर्दभ दम्भितुं [दभितुं—पा०] हिंसितुमशक्य। दुरोदोशनाशध्यादभेष्विति रेफस्योत्वमुत्तरपदादेः ष्टुत्वं च। इति।

दुरो दाशनाशदभध्येषु जामातृसंशोधनप्रभावेण दुरो दाशनाशध्यादभेषु सञ्जातम्।

३।५६।८ मन्त्रभाष्ये दृश्यते—दूणशा। नशेः कृच्छ्रार्थे खल्। दुरो दाशनाशदभेषूत्वं वक्तव्यमिति रेफस्योत्वम्। उत्तरपदादेः ष्टुत्वम्। लित्स्वरः। दूळभासः पूर्ववदुत्वष्टुत्वे। इति।

ऋक्प्रातिशाख्ये दृश्यते—दूढ्यदूणाशदूळभप्रवादा दुर्द्‌भूतमक्षरं तेषु नन्तृ [ ५।५५ ] इति।

महाभाष्ये दृश्यते वार्त्तिकं दुरो दाशनाशदभध्येष्विति। व्याख्यातं चेदं भाष्यकारेण—दुरो दाशनाशदभध्येषूत्वं वक्तव्यम्, उत्तरपदादेश्च ष्टुत्वम् इति। कैयटेनोक्तं दम्भेर्नलोपोऽत एव निपातनादिति। काशिकायां महाभाष्यकारवचनमेवोद्धतम्। उक्तं च—दम्भेः खल्वनुनासिकलोपो निपातनादिति।

एतस्माच्च सवस्मात् प्रतोयते समुद्धतभाष्यभागस्य स्वारसिकः पाठः—दूळभं दुर्दभम्। शत्रुभिर्दम्भितुं विनाशयितुमशक्यम्। दभ्नोतिर्वधकर्मा। ईषद्दुःसुष्विस्यादिना दुर्युपपदे दम्भेः खल्। व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो डकारस्य च ळकारः। इति।

सर्वेषु पुस्तकेषु सन्दृश्यमानं सर्वेषां संस्कर्तॄणां सम्मतम् "इक्श्तिपौ धातुनिर्देशे" इति वचनविरोधि दभ्धेरिति पदं दम्भेरिति यथार्थं रूपं परिगृह्णत्पारमार्थिकं पाठमनुमापयति।

( क्रमशः )

## सम्यक्

भवेन्द्रभट्टाचार्यस्य प्रातिवेशिकस्तमवदत्। तव सारमेयो मामदशत्। अहं त्वां न्यायालयं नेष्यामि। इति।

भवेन्द्रभट्टः प्रत्यवदत्, न खलु मदीयः सारमेयस्त्वामदशत्। अतो नैव त्वं मां न्यायालयं नेष्यसि। न्यायोऽत्र ममैवानुकूलः। इति।

कथमिव ?

एवम्। प्रथमतस्तावन्मम सारमेयस्य दशना एव न सन्ति। द्वितीयतः, स खलु लेशतोऽपि हिंस्रो न भवति। तृतीयतः, स खलु यं कमपि न दशति, विशिष्टानेव पुरुषान् दशति। चतुर्थतः, निपुणमवधार्यतां चेदं—मम सारमेय एव नास्तीति।

---

## सर्वे सत्यवादिनः

अध्यापकः। श्रीमद्भिः कालिदासस्य रघुवंशोऽधीतो वा ?

छात्राः। आर्य, अथ किम्।

अध्यापकः। रघुवंशस्य द्वाविंशः सर्गः केन केनाधीतः ?

छात्राः। ( सर्वे समस्वरम् ) मया।

अध्यापकः। अहो मिथ्यावादिनो यूयम्! रघुवंशस्य द्वाविंशः सर्गो गगनकुसुमसब्रह्मचारी।

---

## महायोगी श्रीसोहिरोबानाथः

[ श्रीगजानन-लक्ष्मण-रेगे, बि-ए ]

तदानीन्तनं महाराष्ट्रभाषागतमभ्यासक्रमं त्रिचतुरकक्षा यावत्सम्पाद्य कुमारः सोहिरा अपि पितृनिधनानन्तरं स्वग्रामस्य कुलकर्णीपदे स्थापितः। कानिचिद्वर्षाणि तत्रोषित्वाऽनतिदूरं तस्यैव राज्ञ आधिपत्ये वर्तमानं बान्देनामकं ग्राममागत्य स तत्रैव न्यवात्सीत्। अचिरेणैव स राज्यशासकेन बान्देग्रामस्य कुलकर्णीपदे नियुक्तः। प्रकृत्या सत्प्रवृत्तिकः पापभीरु धैर्यशीलश्चायं युवा। स्वां वृत्तिं सुप्रतिष्ठया साफल्येन च सम्पादयितुरस्य व्यतीतान्यष्टादशवर्षाणि। अथैकदा शासनगतं कार्यमुद्दिश्य श्रीसोहिरोबाः संस्थानाधिपतिना सावंतवाडीनगरस्थे कार्यालय आहूतः। यदा गृहमागतः सन्देशहारी राजदूतस्तदा सोहिरोबा देवपूजायां व्यापृत आसीत्। पूजां समाप्य शासनाधिकारिणां सन्देशं च पठित्वा महीपतिं साक्षात्कर्तुमनशनोऽपि सद्य एवैकको राजधानीं प्रतस्थे। पाथेयार्थं केवलं लघुपक्वपनसफलसनाथ एव स आसीत्। मध्येमार्गं मध्याह्नसमये इन्सुलीग्रामस्य निर्जने वने निर्झरोपकण्ठे पनसपाटनायोद्यते क्षुधार्ते तस्मिन् कुतश्चिद् "बाब हमकू कुछ देता है"

( भद्र, अपि किञ्चिन्मे दातुमर्हति भवान् ) इति गभीरो ध्वनिस्तस्य कर्णपथमवतीर्णः। स्तिमितो यावदितस्ततश्चक्षुषी प्रेरयति तावत् कंचन भव्याकृतिं तेजस्विनं सिद्धपुरुषं पुरतस्तस्थिवांसमपश्यत्, 'नमस्ते भगवन्' इत्युक्त्वा च साष्टाङ्गप्रणिपातं पादयोरपतत्।

पनसस्यान्तर्वर्तिनः सर्वप्रायान् सुमधुरान् रसखण्डानास्वाद्य (गरा इति महाराष्ट्र-भाषायाम्) पञ्च खण्डाः सोहिरामहाशयाय प्रतिसमर्पिताः सिद्धेन। स्ववरदहस्तं सोहिरामस्तके निधाय यावत्तमुद्दिश्येक्षणमकुर्वन् महाभागा एते तावत्काचिद्विलक्षणाऽननुभूता शक्तिः सोहिराङ्गेषु संक्रान्ता। "स्थित्यन्तो यावदीक्षण"मिति वचनानुसारेणानितरसाधारणाय सोहिराशयाय योगमार्गरहस्यमुपदिदेश सपरिकरम्। आदितः सोहिरोबा भजनपूजनजपजप्यानुष्ठानरतो विवेकवैराग्यशीलो वेदान्तग्रन्थपठनपाठनपरायणो धर्मशीलो मुमुक्षुश्च। उपदेष्टा च नाथपथप्रवर्तकस्य श्रीगोरक्षनाथस्य शिष्यप्रवरो महान् सिद्धः श्रीगहिनीनाथः। इतः पर सोहिरोबाः श्रीसोहिरोबानाथोऽभवत्।

उपरिनिर्दिष्टं व्यतिकरमनु श्रीसोहिरोबानाथो राजधानीं गत्वा महीपतिं साक्षात्कर्तुं राजभवनं प्राप्तो नमस्कृत्य च स्ववृत्तेस्त्यागपत्रं स्वीयया लेखन्या सह राजचरणसविधे निहितवान्। प्रोवाच च। देव, इदं मे त्यागपत्रम्। स्वीकर्तुं मर्हन्ति भवन्तः। नेतः परं पुनर्लेखनीं हस्ते धारयिष्यामि। इति। राजाऽवदत्। किंनिमित्तमेतदिति। नाथः प्रत्युवाच। ज्ञानभक्तिवैराग्यविलक्षणेषु विषयेषु न मे मनो लगति। संसारमसारं पश्यामि। परमात्मचिन्तने समुत्सुकं मेऽन्तःकरणम्। क्षाम्यतु देव इति। तदाकर्ण्य विस्मयचकितो नृपोऽवदत्। एवं स्थिते काऽन्या गतिः। यदभिलषितं तत् कर्तव्यमित्युक्त्वा राजा सोहिरोबानाथस्य त्यागपत्रं महता दुःखेन स्वीकृतवान्।

त्यागपत्रानन्तरं सोहिरोबाः सद्य एव स्वग्रामं प्रत्यावृत्तः। संसारपाशनिबद्धोऽपि विवेकवैराग्यादिषट्साधनसंपन्नो सोहिरा मायापाशावशगो गृहव्यापारेषूदासीन इवाचरत्। नित्यं भजनपूजनश्रवणमनननिदिध्यासनैः धर्मग्रन्थपठनपाठनादिव्यवसायैः दिवसस्याधिकतरं कालं यापयति स्म। अध्यात्मग्रन्थानां मध्ये श्रीज्ञानदेवरचितग्रन्थास्तस्य बहुमता दृश्यन्ते। प्रकृत्या गानप्रियो नादभेदमर्मज्ञः परमात्मगुणगानपरः श्रीसोहिरोबा दैवतान्यधिकृत्य भक्तिरसप्रधानानि प्रभूतानि पद्यान्यरचयत्। श्रीशङ्कररामकृष्णविट्ठलास्तस्याभिमता देवता इति दृश्यते। अध्यात्मविषयकाणि तथोपदेशपराण्यपि प्रभूतानि पद्यानि तस्योपलभ्यन्ते। कर्गजानां महार्घतया दुर्मिलतया च नाथस्य प्रभूतं लेखनकार्यं पर्णोपरि विहितमासीत्। तच्च "नाहमितः परं लेखनीं धारयिष्यामि हस्ते" इति राज्ञः पुरतः कृतप्रतिज्ञस्य तस्य भगिन्या लिखितमिति श्रूयते। अथैकदा पर्णसम्भारोऽयं जीर्णशीर्ण इति मत्वा नाथस्य मात्रा सोऽग्निसात्कृतः। अहो दुर्दैवविचेष्टितम्। (क्रमशः)

## छात्रचर्या । *

[ मित्रगोष्ठी-पत्रिका, पौष, १८२१ ]

वेदाभ्यासनिरन्तरव्यतिकरप्रत्यूहितप्रार्थित-
स्वैरालापविहारभोगजनितक्लेशासहा भारती ।
नानाभावरसोज्ज्वलान् बुधगणानाश्लिष्य तृप्ताप्यलं
साध्वी भक्तजनेषु वत्सलतरा देयान्ममाभीप्सितम् ॥

न्यायाद्यनेकशास्त्रार्थतत्त्वज्ञानमधूज्ज्वले ।
चञ्चरीकंतु चेतो मे श्रीमद्गुरुपदाम्बुजे ॥

अयि भोः सामाजिकाः, श्रीमतामत्रभवतां समक्षं छात्रचर्यामधिकृत्योपन्यसितुं प्रवृत्तस्य यत्सत्यं कम्पत इव मे हृदयम्। इदञ्च नातिचित्रं, यतः—

"आहूतापि पुरः पदं न ददती, प्राप्तोपकण्ठं हठात्,
पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालिङ्गति ।
वैवर्ण्यं स्वरभङ्गमञ्चति बलादालिङ्गिता वेपते
कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥" इति ।

तथापि श्रीमतामादेशरूपं महानुग्रहं शिरसा बिभ्राणः

"पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥"

इत्यस्मिन्नर्थे च श्रद्दधानो मद्वचनं नीरसमपि रसिकजनमनसि निधीयमानं समुदितरसपोषं भविष्यतीति धैर्येण यत्किञ्चिज्जल्पितुं समुद्युक्तोऽस्मि । अतोऽत्रभवतामवधानं दीयमानमभ्यर्थये ।

---

* प्रबन्धोऽयं स्यानन्द्रपुरस्थ-( Trivandram ) राजकीय-संस्कृतविद्यामन्दिरे वार्षिकपरीक्षोत्तीर्णच्छात्रपारितोषिकदानमहोत्सवे C. S. I., F. M. U., M. R. A. S., F. R. H. S. इत्याद्यनेकबिरुदशालिना श्रीमत्केरलवर्मदेवेनाधिष्ठिते समाजे पठितः ।

( भद्र, अपि किञ्चिन्मे दातुमर्हति भवान् ) इति गभीरो ध्वनिस्तस्य कर्णपथमवतीर्णः। स्तिमितो यावदितस्ततश्चक्षुषी प्रेरयति तावत् कंचन भव्याकृतिं तेजस्विनं सिद्धपुरुषं पुरतस्तस्थिवांसमपश्यत्, 'नमस्ते भगवन्' इत्युक्त्वा च साष्टाङ्गप्रणिपातं पादयोरपतत्।

पनसस्यान्तर्वर्तिनः सर्वप्रायान् सुमधुरान् रसखण्डानास्वाद्य (गरा इति महाराष्ट्र-भाषायाम्) पञ्च खण्डाः सोहिरामहाशयाय प्रतिसमर्पिताः सिद्धेन। स्ववरदहस्तं सोहिरामस्तके निधाय यावत्तमुद्दिश्येक्षणमकुर्वन् महाभागा एते तावत्काचिद्विलक्षणाऽननुभूता शक्तिः सोहिराङ्गेषु संक्रान्ता। "स्थित्यन्तो यावदीक्षण"मिति वचनानुसारेणानितरसाधारणाय सोहिराराया योगमार्गरहस्यमुपदिदेश सपरिकरम्। आदितः सोहिरोबा भजनपूजनजपजप्यानुष्ठानरतो विवेकवैराग्यशीलो वेदान्तग्रन्थपठनपाठनपरायणो धर्मशीलो मुमुक्षुश्च। उपदेष्टा च नाथपथप्रवर्तकस्य श्रीगोरक्षनाथस्य शिष्यप्रवरो महान् सिद्धः श्रीगहिनीनाथः। इतः परं सोहिरोबाः श्रीसोहिरोबानाथोऽभवत्।

उपरिनिर्दिष्टं व्यतिकरमनु श्रीसोहिरोबानाथो राजधानीं गत्वा महीपतिं साक्षात्कर्तुं राजभवनं प्राप्तो नमस्कृत्य च स्ववृत्तेस्त्यागपत्रं स्वीयया लेखन्या सह राजचरणसविधे निहितवान्। प्रोवाच च। देव, इदं मे त्यागपत्रम्। स्वीकर्तुमर्हन्ति भवन्तः। नेतः परं पुनर्लेखनीं हस्ते धारयिष्यामि। इति। राजाऽवदत्। किंनिमित्तमेतदिति। नाथः प्रत्युवाच। ज्ञानभक्तिवैराग्यविलक्षणेषु विषयेषु न मे मनो लगति। संसारमसारं पश्यामि। परमात्मचिन्तने समुत्सुकं मेऽन्तःकरणम्। क्षाम्यतु देव इति। तदाकर्ण्य विस्मयचकितो नृपोऽवदत्। एवं स्थिते काऽन्या गतिः। यदभिलषितं तत् कर्तव्यमित्युक्त्वा राजा सोहिरोबानाथस्य त्यागपत्रं महता दुःखेन स्वीकृतवान्।

त्यागपत्रानन्तरं सोहिरोबाः सद्य एव स्वग्रामं प्रत्यावृत्तः। संसारपाशनिबद्धोऽपि विवेकवैराग्यादिषट्साधनसंपन्नो सोहिरा मायापाशावशगो गृहव्यापारेषूदासीन इवाचरत्। नित्यं भजनपूजनश्रवणमनननिदिध्यासनै धर्मग्रन्थपठनपाठनादिव्यवसायै दिवसस्याधिकतरं कालं यापयति स्म। अध्यात्मग्रन्थानां मध्ये श्रीज्ञानदेवरचितग्रन्थास्तस्य बहुमता दृश्यन्ते। प्रकृत्या गानप्रियो नादभेदमर्मज्ञः परमात्मगुणगानपरः श्रीसोहिरोबा दैवतान्यधिकृत्य भक्तिरसप्रधानानि प्रभूतानि पद्यान्यरचयत्। श्रीशङ्कररामकृष्णविठ्ठलास्तस्याभिमता देवता इति दृश्यते। अध्यात्मविषयकाणि तथोपदेशपराण्यपि प्रभूतानि पद्यानि तस्योपलभ्यन्ते। कर्गजानां महार्घतया दुर्मिलतया च नाथस्य प्रभूतं लेखनकार्यं पर्णोपरि विहितमासीत्। तच्च "नाहमितः परं लेखनीं धारयिष्यामि हस्ते" इति राज्ञः पुरतः कृतप्रतिज्ञस्य तस्य भगिन्या लिखितमिति श्रूयते। अथैकदा पर्णसम्भारोऽयं जीर्णशीर्ण इति मत्वा नाथस्य मात्रा सोऽग्निसात्कृतः। अहो दुर्दैवविचेष्टितम्! (क्रमशः)

# छात्रचर्या । *

[ मित्रगोष्ठी-पत्रिका, पौष, १८२१ ]

वेदाभ्यासनिरन्तरव्यतिकरप्रत्यूहितप्रार्थित-
स्वैरालापविहारभोगजनितक्लेशासहा भारती ।
नानाभावरसोज्ज्वलान् बुधगणानाश्लिष्य तृप्ताप्यलं
साध्वी भक्तजनेषु वत्सलतरा देयान्ममाभीप्सितम् ॥

न्यायाद्यनेकशास्त्रार्थतत्त्वज्ञानमधूज्ज्वले ।
चञ्चरीकंतु चेतो मे श्रीमद्गुरुपदाम्बुजे ॥

अयि भोः सामाजिकाः, श्रीमतामत्रभवतां समक्षं छात्रचर्यामधिकृत्योपन्यसितुं प्रवृत्तस्य यत्सत्यं कम्पत इव मे हृदयम्। इदञ्च नातिचित्रं, यतः—

"आहूतापि पुरः पदं न ददती, प्राप्तोपकण्ठं हठात्,
पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालिङ्गति ।
वैवर्ण्यं स्वरभङ्गमञ्चति बलादालिङ्गिता वेपते
कष्टं भोः प्रतिभावतोऽप्यभिसभं वाणी नवोढायते ॥" इति ।

तथापि श्रीमतामादेशरूपं महानुग्रहं शिरसा बिभ्राणः

"पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥"

इत्यस्मिन्नर्थे च श्रद्दधानो मद्वचनं नीरसमपि रसिकजनमनसि निधीयमानं समुदितरसपोषं भविष्यतीति धैर्येण यत्किञ्चिज्जल्पितुं समुद्युक्तोऽस्मि । अतोऽत्रभवतामवधानं दीयमानमभ्यर्थये ।

---

* प्रबन्धोऽयं स्यानन्दूरपुरस्थ-( Trivandram ) राजकीय-संस्कृतविद्यामन्दिरे वार्षिकपरीक्षोत्तीर्णच्छात्रपारितोषिकदानमहोत्सवे C. S. I., F. M. U., M. R. A. S., F. R. H. S. इत्याद्यनेकबिरुदशालिना श्रीमत्केरलवर्मदेवेनाधिष्ठिते समाजे पठितः ।

इह किल जगति समुन्मिषत्स्वपि व्यासकपिलकणादादिष्विव कुलक्रमागतानेकानवद्यहृद्यविद्याधरीकृतविद्याधरेषु, निखिलमहीवर्तुलमुख-तिलकायमानेषु, पदवाक्यप्रमाणपारावारपारीणेषु विद्वन्मणिमुकुटेषु परस्सहस्रेषु प्राचीनसम्प्रदायवित्सु, विद्यमानासु च यावदपेक्षं नानाविधसामग्रीसम्पत्तिष, जाग्रत्सु च विद्यामभ्यस्यत्सूपपरार्द्धेषु प्रच-लत्सु च तत्र तत्राध्ययनाध्यापनादिषु, न तादृशीमवाप्नुवन्त्यभ्यासपरि-पाटीमिदानीन्तना माणवकाः, यादृश्या किल सर्वातिशायिज्ञानोत्कर्ष-मधिगम्यास्माकं पितृपितामहाद्या महानुभावाः प्रायोऽद्यतनैर्दुरवगा-हानपि विषयान् अस्माकमनुजिघृक्षया महाप्रबन्धरूपेण ग्रथ्नन्ति स्म। अत्र चैतावन्मात्रतारतम्यहेतुभूतं किमिति पर्य्यालोच्यमाने छात्रचर्या-वैकल्यमन्तरा न किञ्चित्कारणमन्यदस्तीति प्रतिभाति। अतस्तादृशा-च्छात्रचर्यामधिकृत्य किञ्चिदत्र विचारयामः।

छत्रं गुरोर्वैगुण्यावरणं शीलमेषामिति छात्राः। शीलमित्यधिकारे छत्रादिभ्योऽण् इत्यण् प्रत्ययः। तेषां चर्या छात्रचर्या। अनेन च यथा छत्रं शरीरस्य जायमानान् वृष्ट्यातपादिदोषान् आवरणेन वारयति, तेन च शरीरिणस्तज्जन्यक्लेशो न जायते, तद्वद् गुरुक्लेशवारकत्वाच्छी-लस्य च्छत्रत्वं, तद्वन्तश्च च्छात्राः। तथा च गुरोर्येन केनापि प्रकारेण जायमानान् स्वेन वारयितुं शक्यांश्च दोषान् वारयितुं बद्धदीक्षाः कायेन मनसा वाचा च गुरुमेवानुवर्तमानाः स्वप्नेपि तस्याहितमना-चरन्तः, सर्वदा दाक्षिणात्या इव तद्धितप्रयोगकाङ्क्षिणः, नागरका इव परित्यक्तग्राम्यधर्माः, तदाज्ञालिप्सया तन्मुखावलोकनपरास्तस्य सम्भाव्यमानानपि दोषान् वाचानुच्चारयन्तः, मनसाप्यचिन्तयन्तः, काये-नापि तस्य गतिभाषितेङ्गितादीन्यननुकुर्वन्तः, परेण च क्रियमाणानि परिवादादीन्यनाकर्णयन्तस्स्वकरणीयैकतत्पराश्च च्छात्रा इति फलितम्। तेषाञ्च स्वोद्दिष्टविद्याभ्यासपरिसिद्ध्यर्थं यानि यान्यवश्यमनुष्ठेयानि तानीह च्छात्रचर्यापदार्थः।

तत्र च च्छात्राणां स्वरूपमप्रतिपाद्य तच्चर्याया निरूपयितुमशक्यत्वात्प्रथमं तेषां स्वरूपं निरूप्यते। छात्राणां स्वरूपं तन्त्रसारे यथा—

"शान्तो विनीतश्शुद्धात्मा श्रद्धावान् धारणे क्षमः।
समर्थश्च कुलीनश्च प्राज्ञस्सच्चरितो धनी ॥
एवमादिगुणैर्युक्तश्छात्रो भवति नान्यथा।
गुरुता शिष्यता वापि तयोर्वत्सरमात्रतः ॥
सद्गुरुस्स्वाश्रितं छात्रं वर्षमात्रं परीक्षयेत्।
वर्षैकेण भवेद्योग्यश्छात्रो गुणसमन्वितः ॥" इति।

विद्याभ्यासाय प्रवृत्तस्य हि शिष्यस्य तदननुकूलविषयान्तरव्यावृत्तचित्तत्वरूपं शान्तत्वमावश्यकम्। अन्यथाभ्यासवेलायां विषयान्तरव्यापृतचित्तस्य गुरुभिरतिप्रयत्नेनापि उपदिश्यमानोऽर्थो मरुवृष्टिरिव न कस्मा अपि फलाय प्रकल्पते। नहि विषयान्तरव्यापृतचित्तस्य मनो दुन्दुभिघोषमपि विषयीकर्तुं प्रभवति। अत एवोक्तं कविकुलसार्वभौमेण श्रीहर्षेण—

"धरातुरासाहि मदर्थयाच्ञा
कार्या न कार्यान्तरचुम्बिचित्ते ॥"

इति। अतः शान्तत्वमत्यावश्यकं विद्यामधिजिगांसूनां बालानाम्।

एवं विनयोऽप्यावश्यकः। विनयो नाम गुरोस्सकाशादात्मनोऽपकर्षप्रकाशनम्। तद्धि गुरुहृदयावर्जकं भवद् गुरोर्मनःप्रसादहेतुतामापन्नं विद्याभ्यासवृक्षस्यालवालतां भजते। तादृशविनयप्रदर्शनप्रकारश्च प्रतिपादितो मनुना, यथा—

"शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥
नित्यमुद्धृतपाणिस्स्यात् साध्वाचारस्सुसंयतः।
आस्यतामिति चोक्तस्सन्नासीताभिमुखं गुरोः ॥
हीनान्नवस्त्रवेशस्स्यात् सर्वदा गुरुसन्निधौ।
उत्तिष्ठेत्प्रथमञ्चास्य चरमञ्चैव संविशेत् ॥" इति।

एतादृशविनयावलोकनार्द्रीकृतान्तःकरणः परमदयालुरुपाध्यायः सर्वेष्वपि धनेषु प्रधानभूतं विद्याख्यं धनं देशकालावच्छेदेनापि विलयरहितं तदभिलाषिणे छात्राय सम्प्रददाति। अहो! परमकारुणिकत्वं विनयवशीकृतहृदयस्य गुरोः। पश्यत, इह किल जगति प्राकृतमपि धनं कः खलु पुमान् परं प्रापयितुं समुद्युङ्क्ते? न खलु सहोदरा अपि समुद्युञ्जते। अत एवाह श्रीहर्षः—

"मा धनानि कृपणः खलु जीवंस्तृष्णयार्पयतु जातु परस्मै।
तत्र चैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि॥" इति।

प्रत्युत परकीयस्य धनस्य स्वायत्तीकरण एव प्रयतन्ते, तदर्थञ्च कलहायन्ते। एवं स्थिते सर्वधनेष्वपि सर्वप्रकारेणोत्कृष्टतमस्य—

"न चोरहार्यं नच राजहार्यं न भ्रातृभाज्यं न करोति भारम्।
व्यये कृते वर्धत एव नित्यं विद्या धनं सर्वधनात्प्रधानम्॥"

इत्युक्तलक्षणस्यास्य धनस्य प्रतिपादनं परमकृपाव्यतिरेकेण कथं संघटताम्, कथन्तराञ्च—

"तृष्णां छिन्धि, भज क्षमां, जहि मदं, पापे रतिं मा कृथाः,
सत्यं ब्रूह्यनुयाहि साधुपदवीं, सेवस्व विद्वज्जनम्।
मान्यान्मानय, विद्विषोऽप्यनुनय, प्रख्यापय प्रश्रयं,
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम्॥"

इत्याद्युपदेशञ्च बहुमूल्यप्रदानेनाप्यसुलभं वितरतु गुरुः। नहि सुलभ उपदेश ईदृशः, येन पुमान् पौरुषं प्रपद्येत। अत उक्तं विनयोऽप्यावश्यक इति।

एतादृशगुणविशिष्टत्वं शिष्यस्यैकेन द्वाभ्यां त्रिभिर्वा दिवसैर्भवितुमशक्यं, तथापि तस्य च्छात्रीभवनयोग्यतास्ति वा नवेति वत्सरमात्रं परीक्षणीयम्। नहि केनाप्यवगन्तुं शक्यं द्वित्रैर्दिवसैः प्रज्ञावतापि। तस्य प्रथमं तथाविधगुणाभावेऽपि समनन्तरं तदीयसंसर्गेण तत्प्रवृत्तिदर्शनेन तदीयोपदेशेन वा पूर्वोक्तगुणोत्पत्तिसम्भवेन प्रथमं तत्परित्यागायोगात्। नहि स्वस्यापेक्ष्यमाणान् गुणानादायैव

जातो जायमानो जनिष्यमाणो वा समुपलक्ष्यते लोके। नापीदम्... म्भवि यत्सज्जनोपदेशप्रवृत्तिसंसर्गादिभिरपेक्ष्यमाणा गुणाः सम्भवन्तीति। यथाह भर्तृहरिः—

"जाड्यं धियो हरति, सिञ्चति वाचि सत्यं,
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किन्न करोति पुंसाम्॥" इति।

विद्याभ्यासाय समुपागतस्य च गुणविशेषपरीक्षा तावदत्यावश्यकी वत्सरमात्रेणापि। अन्यथा अविनयालस्यादिदोषग्रस्तश्चेच्छात्रो भवति, तदा तदीयाविनयादिदोषेणार्जितानां दोषाणां गुरुरेव हि पात्रं भवति। तथाच स्मर्यते—

"राज्ञि चामात्यजो दोषो भार्यादोषस्स्वभर्तरि।
तथा शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम्॥" इति।

न केवलमेवंविधो दोषः, अपितु स्वकीयपुत्रा अपि तत्संसर्गेण तदीयवृत्तमनुकुर्वन्तः समानवयस्कतया तदुपदेशमेव महामन्त्रं मन्वानाः स्वेनोपदिष्टमपि गजनिमीलितेनावधीरयन्तो दुर्मार्गैकपरायणाः प्रातिवेशिकांश्च माणवकान् ललितललितैरुपदेशवचनैः समावर्जयन्तस्तद्धृदयञ्च निर्मलमपि कलुषीकुर्वाणा ग्रामकूपनिपतितविषकणा इव ग्रामीणान् सर्वानपि बालान् दूषयन्तः स्वयं दुष्टपदवाच्यतां भजेरन्। किंवा इतोऽप्यन्यत्कष्टतरमस्ति लोके। बालानां हि हृदयं बालमृणालाग्रमिवातिकोमलम्, अन्यत्र प्रवर्त्यमानमनायासेन प्रवर्तते, नहि तदा कृत्याकृत्यविवेचनक्षमा तेषां बुद्धिः। अन्यत्र प्रवर्तमानञ्च हृदयं समासक्तं सदार्द्रकुड्यक्षिप्तपाषाणखण्डमिव तत्रैव विलीयते। तस्माद् बाल्य एव बालानां हृदयं यथा सद्विषय एव प्रवर्तेत, तथा यतनीयम्। तत्र च बाला यथा दुष्टैस्सह न संसृज्येरंस्तथा पर्यवेक्षणीयाः। अतश्च च्छात्राः परीक्ष्यैव च्छात्रत्वेनोपकल्पनीया इति सिद्धम्। अतएवोक्तम्—

"गुरुता शिष्यता वापि तयोर्वत्सरमात्रतः ।
सद्गुरुस्स्वाश्रितं छात्रं वर्षमात्रं परीक्षयेत् ॥" इति ।

एवंविधानाञ्च च्छात्राणामवश्यकरणीयेष्वन्यतमानि चर्यापरपर्यायाणि कृत्यानि निरूप्यन्ते । अध्ययनवेलायां रसमागच्छन्त्या विरहमसहमानया कामिन्येव निद्रया परिहासिकयेव नयने पिदधत्या समालिङ्ग्यमानोऽपि बलादेनां दूरीकृत्य सश्रद्धमाकर्णयेद् गुरूपदिश्यमानानर्थान् । पुस्तकावलोकनवेलायां पठनवेलायाञ्च प्रायस्सर्वेषामपि निद्रा समायातीत्यतिरोहितमेव किल महाभागानाम् । निद्राणे चान्तेवासिनि अतिप्रयासेन गुरुभिरुपदिश्यमाना अपि विषया अरण्यरुदितायमाना न किञ्चित् प्रयोजनमावहन्ति, कण्ठशोषः परमवशिष्यते गुरूणाम् । अतोऽध्ययनवेलायामपगतनिद्रैः सोत्साहैर्भाव्यम् ।

अत एवोक्तं नारदशिक्षायाम्—

"हयानामिव जात्यानामर्द्धरात्रार्द्धशायिनाम् ।
नहि विद्यार्थिनां निद्रा चिरं नेत्रेषु तिष्ठति ॥ ८।२३
द्यूतं पुस्तकवाद्यं च नाटकेषु च सक्तिका ।
स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट् ॥" ८।२६।इति।

एवं श्रद्धाप्यावश्यकी । श्रद्धा नाम गुरूपदिष्टविषयेषु विश्वासः, गुरुर्मम दोषलेशमपि नोपदिशेत्, प्रत्युत मम यथा श्रेयस्सम्पद्येत, यथा च कृत्याकृत्यविवेचनक्षमो भवेयम्, यथा वा मृगप्रायां वृत्तिं सन्त्यज्य गृहीतस्यास्य मनुष्यजन्मनस्साफल्यं सम्प्राप्नुयां, तथा दीक्षारक्षणदक्षिणो भगवान् देव एव मामनुजिघृक्षुर्गुरुस्संवृत्त इति तदुपदिष्टेषु विश्वसनीयम् । अविश्वासो यदि जायेत तदा तद्वाक्येऽप्रामाण्यज्ञानोदयेन न तद्वाक्यं शृणुयात्, नापि तथा प्रवर्तेत । नहि रजतं दृष्ट्वा रजतमिदमित्युक्तेऽपि तत्राप्रामाण्यज्ञानवान् मामयं प्रतारयतीति बुद्ध्या तद्वाक्यं शृणोति शृण्वन्नपि वा तद् ग्रहीतुं प्रवर्तते । अतोऽविश्वासं दूरीकृत्य गुणो वा दोषो वा, सर्वं तदायत्तमित्यचञ्चलचित्तेन भाव्यम् । एवं सश्रद्धमधीताश्च विषया अध्ययनव्यतिरिक्तेषु

समयेषु पुनः पुनरनुचिन्तनीयाः, अन्यथा पठनवेलायां सम्यगवगता अपि विषया विस्मृताः सन्तोऽनधीतसमकक्ष्यतां भजेरन्। अतो विद्यायाः साफल्यमिच्छुभिर्बालैर्नैरन्तर्येणाभ्यासः कार्यः, न तु कदाचिद्व्यग्रतामवलम्ब्य कदाचिच्चौदासीन्यपरिग्रहेण कञ्चित्कालमन्यं विषयमभ्यस्य तञ्च विहाय, कञ्चित्कालं विषयान्तरस्य परिशीलनेन च वृथा कालो यापनीयः। युगपन्नानाविधविषयविचारे हि क्रियमाणे, न कस्यापि विषयस्य कूलङ्कषबोधो जायते। अतो युगपन्नानाविषयबुभुत्सा-पिशाचिकानाविष्टचित्तो भूत्वा, स्वयमतिमन्दोऽपि "पिपीलिकासर्पणात्पाषाणोऽपि निम्नीभवेदि"ति न्यायं सार्थकयितुकामः सुप्रसन्नचित्तो यदि प्रतिदिनमल्पमप्यधीयीत, तदा स नूनं विचक्षणो भवेदित्यत्र न कस्यापि विशयस्यावकाशः।

एतदेवोपदिष्टं नारदशिक्षायाम्—

"शनैर्विद्यां, शनैरर्थानारोहेत् पर्वतं शनैः।
शनैरध्वसु वर्त्तेत योजनानि परं व्रजेत्॥
योजनानां सहस्राणि शनैर्याति पिपीलिका।
अगच्छन् वैनतेयोऽपि पादमेकं न गच्छति॥"८।१५-१६ इति।

एवं प्रतिदिनं प्रातरुत्थाय स्नात्वा, स्वस्वकुलाचारानुसारेण करणीयं कृत्यमपि त्वरितं परिसमाप्य, पूर्वद्युः पठितान् पाठान् सम्यगभ्यस्य, तस्मिंश्च दिनेऽध्येतव्यान् पाठान् सकृदालोक्यालोच्य च यावदवगतं क्लृप्तसमयेषु पाठशालां गत्वा, नियतप्रदेशेषु चोपविश्योपाध्यायेषु समागच्छत्सु उत्थाय विनयपूर्वं तदाज्ञानुरोधेन पुनरुपविश्य पाठस्समारम्भणीयः। विद्याभ्यासश्च बाल्य एव करणीयः, निसर्गरमणीये हि बालभावेऽपगते, अनेकविलासभरमन्थरे च सम्प्राप्ते यौवने, प्राणिनः खल्वविनीतेन मन्मथहतकेन समुन्माद्यन्ते, तरलीक्रियते चान्तरङ्गमेतेषाम् निराक्रियते च कार्याकार्यविवेचनसामर्थ्यं कार्यन्ते च ते पदमपथेऽपि। कुतः खल्वनङ्गवागुरानिपतितमनोमृगस्य हृदयाह्लादनशिशिरकामिनी-संलापामृतास्वादनपरस्य च विद्याभ्यासो नाम? दूरापेतमेतत्।

अतश्चापरिमितमूल्यस्य बालभावस्याऽनन्तरं दुरधिगमतया तारुण्येन दुस्सम्पादेष्वेवंविधेष्ववश्यकरणीयेष्वेव व्ययः कार्यः।

निरन्तरव्यवसायो हि नराणां कामधेनुरिवाभीष्टफलप्रदायकः सर्वोत्कर्षप्राप्तिहेतुश्च भवति। न खलु जगति तद् दृष्टं यद्धि व्यवसायेन दुरधिगमम्। तथाचोक्तम्।

"नात्युच्चशिखरो मेरुर्नातिनिम्नं रसातलम्।
व्यवसायसहायानां नातिपारो महोदधिः॥" इति।

एवं निरन्तरमभ्यासे हि क्रियमाणे वासना द्रढीयसी जीविताविधि ततोऽप्यधिकं वानुवर्तमाना स्मृतोपनता परिचारिकेवावश्यककार्याणि साधयितुं नियोगप्रतीक्षा भवति। एवञ्च जागरूकता, व्यवसायः, समयस्य यथायोग्यं विनियोगश्च च्छात्राणामत्यावश्यकानि कृत्यानि, तथाहि परमकारुणिकेन भगवता वितीर्णाया विलक्षणबुद्धेर्यथावदुपयोगो जागरूकतामन्तरेण न सम्भवति, यथावदनुपयुक्तायाञ्च तस्यां कृतज्ञतां गलहस्तयता बालेन कृतघ्नतायाश्च हस्तावलम्बो दत्तस्स्यात्, तादृशमहापराधजन्येन चैनसा परमुपलिप्यते, उभयतो भ्रष्टश्च भवेत्। अतो जागरूकता तावदत्यावश्यकी बालानाम्। एवं सकलविधसुखानुभवनिदानेन व्यवसायेन विनाकृतोऽलसपुरुषः सत्स्वपि सुखानुभवसाधनेषु नैव सुखमनुभवितुं प्रभवति। अलसता हि सुखानुभवविरोधिनी, आरोग्यनिर्मूलयित्री निर्गुणं निधनं निस्तेजसञ्च पुरुषमुपजनयति। अतस्तादृशीमारोग्यपरिपन्थिनीमलसतां निराकृत्य व्यवसाय एव शरणीकरणीयो बुद्धिमद्भिर्बालकैः। एवं पाठशालामुपगतैरुपाध्यायस्य सतीर्थ्यानां वा वैमनस्यमजनयद्भिः सविनयैस्सम्यगनवगतान् विषयान् उपाध्यायात्सच्छात्रेभ्यो वाऽवधारयद्भिः स्वस्वकृत्यपरैर्भवितव्यम्।

एवं विद्याभ्यासस्यारोग्यमन्तरा विधातुमशक्यतया विद्यया सहारोग्यस्य प्रधाननिदानं व्यायामोऽप्यवश्यं करणीयः। अतः प्रतिदिनं नियताध्ययने निवृत्ते वितीर्णायाञ्च गुरुणा गृहगमनानुज्ञायां, वयस्यै-

स्साद्ध किञ्चित् कालं किमपि देहायासप्रदं कर्म कर्तव्यम्। अव्यायामशीलो हि जनो येन केनापि व्याधिना ग्रस्तोऽलसस्सन् परिक्षीणसकलावयवशक्तिर्महापण्डितोऽपि परस्यात्मनो वा न किञ्चिदप्युपकर्तुं प्रभवति। अतः प्रतिदिनं येन केनाप्युपायेन शरीरदार्ढ्योपादने यतितव्यम्। व्यायामेन ह्यस्मद्देहेषु वर्तमानानां चलनहेतुभूतानां मांसप्रचुराणां भागानां यथावदुपयोगेन पुष्टिर्जायते शरीरञ्च दृढं भवति। तदुक्तं वाग्भटेन—

"विभक्तघनगात्रत्वं व्यायामादुपजायते" इति।

किञ्च देहस्य ह्यायासे जायमाने निश्वासोच्छ्वासा अप्यधिकाधिका भवन्ति। तदा च शुद्धवायूनामन्तस्सर्वत्र प्रचारेण रक्तं परिशुद्धं सत् सर्वेष्ववयवेषु प्रसरति। एवं शरीरे शीघ्रसञ्चारेण बलवत्तरकर्मानुष्ठानेन वा जायमानं हि स्वेदजलं त्वग्द्वारेण दुष्टांशान् बहिर्निष्काशयच्छरीरं सुस्थिरं करोति। जाठराग्निश्च प्रवृद्धो भूत्वाऽमितमप्याहारं क्रियमाणं भस्मसात्करोति। परन्तु व्यायामो हित इत्यालोच्य करणीयान्तराणि परित्यज्य पाठमप्युपेक्ष्यातिशयेन क्रियमाणः शरीरस्यात्मनश्च दोषाय। कचिद्धि बालाः परीक्षार्थं बलवत्परिश्राम्यन्तो व्यायामलेशमप्यकुर्वाणा अहर्दिवं परीक्षाकोटिप्रविष्टानेव विषयान् मुहुर्मुहुरनुशीलयन्तोऽध्ययन एव स्वकीयं यावत्समयं विनियुञ्जाना महतोऽनर्थाननुभवन्ति। उत्तेजनीया हि बुद्धिरनुकूलं तच्चादिनेव वास्यादीनि, अतो यथोचितं व्यायामं कुर्वद्भिरव्यायाममतिव्यायामं वाऽकुर्वाणैश्च भवितव्यं श्रेयस्कामैर्विद्यायास्साफल्यमिच्छुभिर्बालैः।

एवं विद्याभ्यासावस्थायां निर्दिष्टग्रन्थभिन्नग्रन्था अपि यथावसरं पर्यालोकनीयाः, नतु सर्वेऽपि ग्रन्था गुरुमुखत एवाध्ययनीया इति दुराशा कार्या। नहि केनापि शक्यं वर्षसहस्रेणापि गुरुमुखेण सर्वानपि ग्रन्थानभ्यस्य सर्वानप्यर्थानवगन्तुं, किन्तु मार्गमात्रप्रदर्शनं कर्तुं शक्यं गुरुभिः। अतो यथावसरं ग्रन्थान्तरपर्यालोकनमपि न दोषाय परन्तु ग्रन्थान्तरपर्यालोकनमपि मितं सदमितं फलमादधाति, नत्वमितं

तन्मितमपि गुणं जनयेत्। प्रत्युत सर्वङ्कषार्थबोधासम्भवेन ज्योतिरिङ्गणप्रभायमानज्ञाना यथावसरमधीतं चरितार्थयितुमक्षमाः पामरजनसाधारणा विद्वज्जनविगर्हाभाजनं सम्पद्येरन्। अतो ग्रन्थान्तरपर्यालोकनमपि प्रकृतप्रत्यवायाजनकम् यावदात्महिताय कल्पते तावदेवानुसरणीयम्।

एवमध्ययनकाले स्वचापलप्रयुक्तविलक्षणविजिगीषया कस्मिंश्चन विषये प्रतिपाद्यमान आत्मनः प्रतिभापकर्षं मन्वानः कथमप्ययं गुरुः पराजेतव्य इति "कश्चित्कान्तान्यायेन" आपूर्त्यनाकर्णयन्तोऽपि अन्तराक्षिप्य तस्मिंश्च क्षमावता गुरुणा समाहिते समाधानेऽन्यमाक्षेपमुद्भावयन्त आक्षेपसमाधानपरम्परया वृथा कालं यापयन्तो गुरोर्महद्वैमनस्यं जनयन्तः, तेन च सप्रयत्नमधीयाना अपि नकिञ्चिदपि फलमाप्तुं प्रभवन्ति। अनुग्रहः किल गुरोर्महच्छ्रेयस्साधनं छात्राणाम्।

अधीतानां पाठानां मुहुरनुचिन्तने सन्ति चेत्सहपाठिनोऽप्यभ्यन्तरीकरणीयाः, नहि गुरुणा निष्पक्षपातिना सामान्येनोपदिष्टमप्यथ सर्वोऽपि समग्रं ग्रहीतुं प्रभवति। एक एकमर्थं सम्यग्गृह्णाति अपरश्चान्यमर्थम्। एकेन गृहीतोर्थोऽन्येन ग्रहीतुं न शक्यते अन्यतमश्च तं सम्पूर्णं गृह्णाति। अतस्सर्वेऽपि मिलिता अधीतान् विषयान् सम्यक् चर्वयन्तस्तर्कयन्तश्च सन्दिग्धमर्थं निर्मत्सरास्समानयोगक्षेमा भवेयुः। परन्तु अधीतविषयपरिशीलनार्थं मिलितैस्सरसालापादिकं कुर्वाणैर्वृथाकालो न यापनीयः। स्वभावः खल्वयं यद्वयस्यानां सान्निध्यं सरससंलापप्रवर्तकं भवतीति।

एवं प्रतिदिनं नियतपरिश्रमाः स्वस्वकृत्यमात्रव्यापृता गृहकृत्यादिष्वनभियुक्ताश्छात्राः परं पाण्डित्यमुपगम्येह चामुत्र च कृतकृत्या भवेयुरित्यत्र न कश्चित्सन्देहः। एवं स्थिते, आधुनिकाः केचिद् बालाः गुरूपदेशाकर्णनमात्मनः परं परिभवास्पदं मन्यमानाः, गुरोरवमानमेवावश्यकर्तव्यकृत्यजातेष्वन्यतमं मन्वानाः अध्ययनवेलायामपि गुरून् प्रतारयितुं परं पुस्तकमवलोकयन्तो, मनसा चान्यत्कार्यजातमालो-

चयन्तोऽन्यदा च गुरुदूषणभाषणभूषणा वयस्यपाशस्सार्धं वृथा तत इतस्सञ्चरन्तः, पाठशालायामपि गुरौ कार्यान्तरेण किञ्चिदिवापसृते कलकलरवैर्दिगन्तरालमापूरयन्तो, नानादेशवृत्तान्तावजिगमिषया च नानादेशादागता वार्तापत्रिकास्समालोकयन्तः तद्गतांश्च विषयान् सच्छात्रानन्यांश्च बोधयन्तः, सुशीलानपि दुःशीलयन्तः, कलहाय च रन्ध्रान्वेषिणस्त्रिशङ्कुपातं पतन्तश्छात्रापसदाः स्ववैदग्ध्यप्रशंसाशंसनतमोभूयिष्ठहृदयकन्दराः समुल्लसन्ति धरातले। किन्नाम खलु तेषामसाम्प्रतम्, यैर्न कर्तव्यो विनयः, न रक्षितव्या महतां मर्यादा, न स्मरणीयं शीलं, न द्रष्टव्यो धर्मः, नानुसर्तव्यो न्यायः, न वा भेतव्यं गुरुजनात्, अपि तु सम्पादनीयो दुष्टैस्सह सहवासः, प्रकाश्यो दम्भः, कर्तव्यः कलहः, उच्चार्यो दुर्वादः, प्रच्छाद्यं सत्यम्, वक्तव्यं स्वेच्छामनुसृत्य यत्किञ्चित्, प्रकाशनीयो गुरोरवमानः, विधेयोऽध्ययनवेलायां गुरुभिस्सह वादः, स्थापनीयश्च यथाकथञ्चित् स्वोक्तम्। अपरे च केचिच्छात्रा न्यायशास्त्राद्यध्येतारः कतिपयपदार्थनिवचनपूर्वकव्याप्त्यादिज्ञानमात्रेण त्रिभुवनमेवास्माभिर्ज्ञातमिति प्रौढाहङ्काराः सर्वमन्यच्छास्त्रं तृणमिवावगणयन्तः कार्यकारणभावादीनपि सम्यगजानन्तोऽपि चापलवचनप्रपञ्चैर्दिगन्तरं ध्वनयन्तः पारलौकिकाय लौकिकाय वा लाभायाप्रभविष्णवः समितिसमरेषु सिंहनादोच्चारणमेव परं पुरुषार्थं मन्यमानाः, निर्दिष्टग्रन्थानामपि पदपदार्थान् सम्यगनवबुध्यमाना अधरितामृतानां महाभारतादीनां सकृदालोकनेऽपि पराङ्मुखाः स्वमायुः केवलं ह्रसयन्तो भूमेर्भारभूता दृश्यन्ते। अन्ये तु केचन छात्रापसदा मासिकवेतनं दत्त्वा किलास्माभिरधीयते, अतो न मनागपि गुरवोऽनुसरणीयाः, अपि त्वस्माकमेव वचनमनुसरणीयं गुरुभिरिति तद्वचनमनाद्रियमाणाः स्ववचनमेव गुरूननुसारयितुं प्रयतमानाः, अननुसरतश्च गुरोः, केसरकलापगतयूकादय इव सिंहस्य क्षुद्रोपद्रवकारिणो दैनन्दिनांश्च पाठानचिन्तयन्तः परीक्षायाञ्च सन्निहितायां रात्रिन्दिवं परिशीलयन्तस्तेन च रोगिणः सम्पद्यमानाः, परीक्षायाञ्च परा-

जयं प्राप्नुवन्तः पित्रार्जितं धनं वृथा व्ययीकुर्वन्तो न किञ्चिदपि फलं प्राप्नुवन्ति। अत एव ह्यद्यतना बाला ईदृशाचर्याविकलाः पण्डितमहाशयानामिवाभ्यासपरिपाटीमलभमानाः स्वोपजीवनायाप्यप्रभविष्णवो भवन्ति। एतादृशीञ्च दुरवस्थां कतिपयानामपि निरासयितुकामैर्विबुधगणमणिमुकुटै रसभरमेदुरेण पीयूषमप्यधरीकुर्वता स्वकविताप्रपञ्चेन विद्वज्जनानामन्येषाञ्चातितरामाह्लादं जनयद्भिः, नानाबिरुदलाञ्छितैर्महामहिमशालिभिः केरलवर्मदेवैः प्रोत्साहितेनं सकलधर्ममूलेनान्वर्थनाम्ना परमकारुणिक-श्रीमूलकमहाराजेन सच्छात्रवृत्त्यधिष्ठापितायामस्यां पाठशालायामधीयाना वयं कृतज्ञतासूचकमपरं कर्तुमक्षमाः केवलमिदमाशास्महे—

श्रीमत्केरलवर्मदेवनिपुणप्रज्ञासमालोचित-
श्रेष्ठारम्भगृहीतधर्म्यधिषणस्सन्त्रायमाणो भुवम्।
सूत्रामेव दिवं बृहस्पतिमतिप्रक्रान्तधर्मोत्करः
श्रीमान् मूलकभूपतिर्विजयतामाचन्द्रतारं सुखी॥

पद्मनाभशास्त्री।
त्रिवेन्द्रम्, त्रिवङ्कुरम्।

——:०:——

## आलवकसूत्तम् *

(आडवकसूत्रम्) †

मूलपालिभाषातः प्रत्यक्षरानुवादरूपम्।

नमस्तस्मै भगवते अर्हते सम्यक् सम्बुद्धाय।

---

* इदं सूत्रं "सूत्रनिपात"-नाम्ना प्रसिद्धस्य ग्रन्थस्य "उरगवर्गा"न्तर्गतम्। आलवको नाम कश्चिद् यक्षः प्रथमं बुद्धदेवमभीषयत; ततो बुद्धदेवे"न तस्य केषुचित् प्रश्नेषु प्रत्युक्तेषु स बौद्धधर्ममगृह्णात्। तदेवेह वर्णितम्।

† "आडवक" इति संस्कृतं सम्भवति।

एवं मया श्रुतम् :—

एकस्मिन् समये (१) भगवान् आलव्याम् (२) विहरति आलवकस्य यक्षस्य भवने। अथ खलु आलवको यक्षो येन भगवान् तेनोपसंक्रान्तः। उपसंक्रम्य भगवन्तमेतदवोचत् :—

"निष्काम श्रमणेति"।

"साधु बन्धो" (३), इति भगवान् निष्क्रान्तः।

"प्रविश श्रमणेति"।

"साधु, बन्धो" इति भगवान् प्राविक्षत्।

द्वितीयमपि खलु आलवको यक्षो भगवन्तमेतदवोचत् :—

"निष्काम श्रमणेति"।

"साधु बन्धो" इति भगवान् निष्क्रान्तः।

"प्रविश श्रमणेति"।

"साधु, बन्धो" इति भगवान् प्राविक्षत्।

तृतीयमपि खलु आलवको यक्षो भगवन्तमेतदेवावोचत् :—

"निष्काम श्रमणेति"।

"साधु, बन्धो" इति भगवान् निष्क्रान्तः।

"प्रविश श्रमणेति"।

"साधु, बन्धो" इति भगवान् प्राविक्षत्।

चतुर्थमपि खल्वालवको यक्षो भगवन्तमेतदेवावोचत् :—

"निष्काम श्रमणेति"।

"न खलु पुनरहं बन्धो निष्क्रमिष्यामि, यत्ते करणीयं तत्कुरु"।

"प्रश्नं त्वां श्रमण, प्रक्ष्यामि, स चेन्मे न व्याकरिष्यसि, चित्तं वा

(१) मूले द्वितीयान्तः पाठोऽस्ति।

(२) नगर्याम्।

(३) पाली "आवुसो" इति वर्त्तते। अयं शब्द आचार्येण शिष्यम्, उपासकादिना च परस्परं सम्बोधयितुं प्रयुज्यते। तस्य च "सुहृद् बन्धो" इत्यादिरूपेण पालिभाषाविद्भिरनुवादः क्रियते। दुर्लभमस्य संस्कृतम्।

ते क्षेप्स्यामि, हृदयं वा ते फालयिष्यामि (१), पादेषु वा गृहीत्वा पारं गङ्गायाः क्षेप्स्यामीति" ।

"न खल्वहं तं बन्धो, पश्यामि सदेवके लोके समारके (२) सब्रह्मके, सश्रमणब्राह्मणायां प्रजायां सदेवमनुष्यायां यो मे चित्तं वा क्षिपेत्, हृदयं वा फालयेत्, पादेषु वा गृहीत्वा पारं गङ्गायाः क्षिपेत्। अपि च त्वं बन्धो पृच्छ यदाकाङ्क्षसीति" ।

१

" किं स्विदिह वित्तं पुरुषस्य श्रेष्ठं,
किंस्वित् सुचरितं (३) सुखमावहति ।
किं स्विद् ह वै साधुतरं रसानां,
कथं जीवि जीवितमाहुः श्रेष्ठम् ॥"

२

" श्रद्धेति वित्तं पुरुषस्य श्रेष्ठं,
धर्मः सुचरितः सुखमावहति ।
सत्यं ह वै साधुतरं रसानाम्,
प्रज्ञां जीविजीवितमाहुः श्रेष्ठम् ॥"

३

कथं स्वित् तरति ओघं,
कथं तरति अर्णवम् (४) ।
कथं स्विद् दुःखमत्येति,
कथं स्वित् परिशुध्यति ॥

---

(१) द्विधा करिष्यामि, कृन्तिष्यामीत्यर्थः ।

(२) बौद्धग्रन्थे मारो नाम कश्चिद् दुष्टो देवयोनिविशेषः; स खलु नियतमिन्द्रियसुखपरायणः, नराणां साधुकार्येषु विघ्नोत्पादकः, बौद्धशास्त्र-प्रसिद्धानां षण्णां कामदेवलोकानां प्रथमोऽधिपतिश्च ।

(३) मूले पुंलिङ्गान्तः पाठोऽस्ति ।

(४) अत्राप्रस्तुतेन जलवेगवाचिना ओघशब्देन धर्मोपदेशालोचनप्रकरणप्राप्त संसारदुःखादि, अर्णवशब्देन च संसारो बोध्यत इति प्रतिभाति ।

४

श्रद्धया तरति ओघम्,
अप्रमादेन अर्णवम्।
वीर्येण दुःखमत्येति,
प्रज्ञया परिशुध्यति ॥

५

कथं स्विल्लभते प्रज्ञां, कथंस्विद् विन्दते धनम्।
कथं स्वित् कीर्त्ति प्राप्नोति, कथं मित्राणि ग्रथ्नाति (१)।
अस्माल्लोकात् परं लोकं कथं प्रेत्य न शोचति ॥

६

श्रद्दधानोऽर्हतां धर्मं निर्वाणपत्त्या (२)।
शुश्रूषमाणो लभते प्रज्ञामप्रमत्तो विचक्षणः ॥
प्रतिरूपकारी धुरावान् व्युत्थितो विन्दते धनम्।
सत्येन कीर्त्तिं प्राप्नोति, ददन्मित्राणि ग्रथ्नाति।
अस्माल्लोकात् परं लोकमेवं प्रेत्य न शोचति।
यस्यैते चत्वारो धर्माः सश्रद्धस्य (३) गृहमेधिनः।
सत्यं धर्मो धृतिस्त्यागः स वै प्रेत्य न शोचति ॥
"इङ्घ" (४) अन्यान् पृच्छ पृथक् श्रमणब्राह्मणान्।
यदि सत्याद् धर्मात् त्यागात् क्षान्त्या भूयोऽथ विद्यते ॥

---

(१) आत्मनेति भावः।

(२) निर्वाणप्राप्तिद्वारेण।

(३) "सद्धस्स" इति मूलेऽस्ति।

(४) अस्य शब्दस्य संस्कृतं नाधिगम्यते। अव्ययमिदम्, अनुनयार्थे च प्रयुज्यत इति तु निर्णीयते। "इङ्घ त्वं महाराज कलसिगामं चिन्तेहि" (Buddhist Nirvan, I. xlii.) "इङ्घ ते गणापेथ" (धम्मपदं २२३ श्लो०) इत्यादौ तस्यैवार्थस्य प्रतिभासमानत्वात्।

७

कथं न्विदानीं पृच्छेयं पृथक् श्रमणब्राह्मणान् ।
सोऽहमद्य विजानामि सोऽर्थः साम्परायिकः (१) ॥
अर्थाय बत मे बुद्धो वासाय आलावीम् (२) आगतः ।
सोऽहमद्य विजानामि यत्र दत्तं महाफलम् ।
सोऽहं विचरिष्यामि ग्रामाद् ग्रामं पुरात्पुरम् ।
नमस्यन् सम्बुद्धं धर्मस्य च सुधर्मं तम् ॥

इति आलवकसूत्रम् ।

विधुशेखरशर्मा ।

---

## साहरामरुभूः

प्रियवाचमहाभागाः ! स्मर्यतां भवद्भिर्भवभूतेः सूक्तिरत्नं—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम् ।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ इति ।

गच्छता पुनः कालेन शैला अपि सिकतीभवन्ति । तन्नैतदाश्चय यन्मरुभूशिरोमणिः साहरापि षट्सहस्रवर्षतः पूर्वं सरःसरिदादिसनाथा समृद्धतमा महानगर्यासीदिति । साम्प्रतं ४५ फरासीयवैज्ञानिकैः समग्रां साहराभूमिं परिभ्रम्यैतन्निर्णीतम् । सर्वं हरतीति मरुभुवोऽस्याः सा हरेत्यन्वर्था समाख्या । प्रसिद्धविषयकस्तच्छब्दः ।

---

(१) पारलौकिकः ।

(२) तदख्य यक्षस्य नगरीम् ।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| February, 1960. | १८८१-शकीय फाल्गुनस्य १४श-वर्षस्य षष्ठी संख्या | Vol. XIV No. 6 |
|---|---|---|


## आभाणकमाला

Bad news is always true.

अमङ्गलवार्ता कदापि वैतथ्यं नासादयति ।

A lie travels round the world while truth is putting on her boots. SPURGEON, *Salt-cellars.*

यावत् सत्यमुपानहमामुञ्चति तावन्मिथ्या पृथिवीं परिक्रामति ।

Truth always arrives by the lame messenger.

सत्यं सदैव खञ्ज न दूतेन समागच्छति ।

Folly grows without watering.

अन्तरेणापि सलिलसेकं मौर्ख्यं प्ररोहति ।

प्राघुणकहस्तेन सर्पमारणम् ।

Draw the snake from the hole with another man's hand.

परहस्तेन बिलतः सर्पं समाकर्ष ।

To take out a burning coal with another's hands (Italian).

अपरस्य हस्तेन ज्वलदङ्गारसमाकर्षणम् ।

Crush the serpent's head with the hand of an enemy; if the enemy is successful, thou hast killd a snake, if the snake is successful thou hast lost an enemy. SADI, *Gulistan.*

शत्रुहस्तेन सर्पशिरः पिण्ढि । शत्रुश्चेत् सफलोद्यमः सर्पं नाशितवानसि, सर्पश्चेत् सफलोद्यमः शत्रुं हारितवानसि ।

# कठोपनिषदो मूलम्

[ तैत्तिरीयब्राह्मणम् ३।११।८ ]

उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ। तस्य ह नचिकेता नाम पुत्र आस। तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश। स होवाच तत कस्मै मां दास्यसीति। द्वितीयं तृतीयमिति।

सायणभाष्यम्। वाजोऽन्नं तद्दाननिमित्तं श्रवः कीर्तिर्यस्यासौ वाजश्रवाः कश्चिन्मुनि-गौतमगोत्रोत्पन्नः, तस्य पुत्र उद्दालकाख्यो मुनिर्वाजश्रवसः। स च कदाचित् सर्वस्व-दक्षिणाकेन विश्वजिदादियागेनोशंस्तत्फलं कामयमानो यागमध्ये सर्ववेदसं सर्वस्वम् ऋत्विग्भ्यो ददौ। तस्मिन् काले तस्योद्दालकस्य कश्चित्पुत्रो नचिकेता नामासीत्। स चोपनयनयोग्यवयस्कः कुमारो भूत्वा तदा वर्तते। तं कुमारं सन्तं नचिकेतसम् ऋत्विजः प्रति दक्षिणासु पित्रा नीयमानास्वतिशयेन श्रद्धाऽविवेश। यथाशास्त्रं दक्षिणा दातव्येत्येषा बुद्धिः श्रद्धातिशयः। श्रद्धाविशिष्टः स कुमारो मनस्येवं विचारयामास। कर्मसाद्गुण्यार्थं पित्रा सर्वस्वं दातव्यम्। अहं च पितुः स्वम् तस्माद् दातव्योऽहमिति विचार्य पितरं प्रत्येवम् उवाच—हे तत हे पितः, कस्मा ऋत्विजे मां दास्यसीति। तदानीं बालोऽयं मुग्ध इति तद्वचनमुपेक्ष्य तूष्णीं स्थितं पितरं प्रति द्वितीयं वारं तृतीयं वारं च तथैवोवाच।

तꣳ ह परीत उवाच—मृत्यवे त्वा ददामीति।

*पितुरुत्तरं दर्शयति—तꣳ हेति। अयं तावन्मुग्धो न भवति, किन्तु धूर्त इत्येवं कुपितः संस्तदभिमुख्येन पर्यावृत्तः कोपावेशान्मृत्यवे त्वा ददामीति तं कुमारमुवाच। अस्मिन्नवसरे काचिददृश्यमानशरीरा दैवी वाक् तं नचिकेतसं समनुजग्राह।

तꣳ ह स्मोत्थितं वागभिवदति गौतम कुमारमिति। स होवाच। परेहि मृत्योर्गृहान्। मृत्यवे वै त्वादाम्। इति।

सा०। तदनुग्रहप्रकारं दर्शयति—तꣳ हेति। कोपयुक्तं पितुस्तद्वचनं श्रुत्वा पितुः सकाशात् परतो गन्तुं तं होत्थितं कुमारम् अभिमुखीकृत्यानुग्रहपरा दैवी वागित्थं वदति स्म। किमिति तदुच्यते—हे गौतमगोत्रोत्पन्न नचिकेतः, स खलु तव पितैवमुवाच। तद्वचनस्याय-मभिप्रायः—हे पुत्र मृत्योर्गृहान् प्रति परेहि गच्छ। मृत्यवे त्वामहं दत्तवानस्मीति।

तं वै प्रवसन्तं गन्तासीति होवाच। तस्य स्म तिस्रो रात्रीरनाश्वान्

तिस्र इति प्रतिब्रूतात्। किं प्रथमां रात्रिमाश्ना इति। प्रजां त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यां त इति।

सा०। इत्थं तत्पितुरभिप्रायं विशदीकृत्य सा वाग्देवता कुमारमनुग्रहीतुं बुद्धिप्रदानं करोति—हे नचिकेतो यमो यदा गृहान्निर्गत्य यत्र क्वापि प्रवसति तं प्रवसन्तं निश्चित्य तद्गृहे गन्तासि गमिष्यसि गच्छेत्यर्थः। एवमुक्त्वा पुनरप्येवमुवाच। तस्य यमस्य गृहे गत्वा यमदर्शनाभावे तदीयपुत्रभार्यादिभिः प्रार्थितोऽपि त्वं दिनत्रयम् अनाश्वान् भोजनरहितो निवासं कुरु। तावत् समागत्य स यमो यदि त्वां प्रति हे कुमार कति रात्रीरिहोषितवानिति पृच्छेत् तदानीं तिस्र इत्येव सत्यमेव प्रत्युत्तरं ब्रूहि। ततः प्रथमदिने किं भुक्तवानसीत्येवं पृष्टः संस्त्वदीयां प्रजां भक्षितवानस्मीत्येवं प्रत्युत्तरं ब्रूहि। अतिथिर्गृहे समागत्य भोजनरहितो वसति चेत् तस्य गृहस्वामिन एकदिनभोजनराहित्यमात्रेण प्रजाक्षयो भवतीत्येतच्छास्त्ररहस्यं तेन वाक्येन सूचितं भवति। एवं द्वितीयतृतीयदिवसयोरुपवासेन पशुक्षयं सुकृतक्षयं चासूचयत्।

तं वै सन्तं जगाम। तस्य ह तिस्रो रात्रीरनाश्वान् गृह उवास। तमागत्य पप्रच्छ। कुमार कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युवाच। किं प्रथमां रात्रिमाश्ना इति। प्रजां त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यां त इति।

सा०। तदेवं वाग्देवतया शिक्षितो नचिकेतास्तथैव चकारेत्येतद् दर्शयति—तं वा इति। पूर्ववद् व्याख्येयम्।

नमस्ते अस्तु भगव इति होवाच। वरं वृणीष्वेति।

सा०। एतावता शास्त्रार्थरहस्याभिज्ञोऽयं कुमारो न तु मूर्खः, तस्मात् सत्कारार्हो न मारणीय इत्येवं निश्चित्य यं सत्कारं चकार तं दर्शयति—नमस्त इति। उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥ एतच्छास्त्रानुसारेण नचिकेतसमभिज्ञं मत्वा भगवच्छब्देन सम्बोध्य दिनत्रयोपवासकृतं स्वापराधं परिहर्तुं वरत्रयं दत्तवान्। सोऽयमर्थः कठवल्लीष्वस्मिन्नेव नाचिकेतोपाख्याने विस्पष्टमाम्नातः—"तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व॥" [ क० उ० १।१।९ ] इति। प्रतिशब्देन प्रतिदिनोपवासनिमित्तापराधपरिहारायेत्ययमर्थ उच्यते।

पितरमेव जीवन्नेयानीति ।

सा० । नचिकेतसा वृतं प्रथमं वरं दर्शयति—पितरमेवेति । हे यम त्वयाहममारितो जीवन्नेव मदीयं पितरं प्राप्नवानि सोऽयं प्रथमो वर इति ।

द्वितीयं वृणीष्वेति । इष्टापूर्तयोर्मेऽक्षितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै तस्येष्टापूर्ते न क्षीयेते ।

सा० । अथ प्रश्नोत्तराभ्यां द्वितीयं वरं दर्शयति—द्वितीयं वृणीष्वेति । द्वितीयवरार्थं प्रार्थितोऽयं कुमारो मदीययोः श्रौतस्मार्तसुकृतयोरक्षयहेतुं ब्रूहीत्येतादृशं वरं वृतवान् । ततो यमस्तस्मै नचिकेतस एतं पूर्वानुवाकेष्वभिहितं चेतव्यमुपास्यं च द्विविधं नाचिकेत-नामाङ्कितमग्निमुवाच । तन्नामाङ्कितत्वं कठवल्लीषु [ १।१।१९ ] स्पष्टीकृतम्—एष तेऽग्नि-र्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनास इति । ततो नाचिकेताग्निचयनादग्निध्यानाच्च तस्य नचिकेतसः श्रौतस्मार्तसुकृते न क्षीयेते अल्पफले न भवतः ।

नास्येष्टापूर्ते क्षीयेते योऽग्निं नाचिकेतं चिनुते, य उ चैनमेवं वेद ।

सा० । नचिकेतस इवान्यस्यापि श्रौतस्मार्तसुकृतयोरक्षयं दर्शयति—नास्येति ।

तृतीयं वृणीष्वेति । पुनर्मृत्योर्मेऽपचितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै सोऽप पुनर्मृत्युमजयत् । अप पुनर्मृत्युं जयति योऽग्निं नाचिकेतं चिनुते, य उ चैनमेवं वेद ।

पुनरपि प्रश्नोत्तराभ्यां वरान्तरं दर्शयति—वर्तमानस्य मनुष्यशरीरस्य सकृन्मृत्युरवश्य-म्भावी । तदूर्ध्वं पुनरप्यर्वाचीनजन्मस्वीकारे सति पुनर्मृत्युर्भवति । जन्मस्वीकारं विना मुक्तौ सत्यां सोऽयं पुनर्मृत्युरपजीयते* । मृत्योरपजयः पुरुषस्यैव जयः । तादृशं पुनर्मृत्योरपजयहेतुं ब्रूहीत्येष तृतीयो वरः । एवं वृणानाय तस्मै नचिकेतसे पुनर्मृत्यु-जयहेतुत्वेन तमेव द्विविधं नाचिकेताग्निमुक्तवान् । चयनोपासनयोर्मध्ये चयनस्य प्राधान्य-मुपासनस्योपसर्जनत्वं यस्य पुंसः सम्पद्यते तस्येष्टापूर्तयोरक्षयत्वमात्रं चिरं पुण्यलोकमनुभूय पुनर्जन्मस्वीकारः । यस्य तूपासनं प्रधानं चयनमुपसर्जनं तस्य ब्रह्मलोकप्राप्तिद्वारा मुक्तिरेव न तु जन्मान्तरम् । तस्मान्मृत्यो र्जय इत्येवं द्वयोर्विभागः† । ततो वै तस्मादेव प्रधानभूतादु-पासनात् स नचिकेताः पुनर्मृत्युं जितवान् । अन्योऽपि विद्याप्राधान्ये सति तद्वन्मृत्युं जयति ।

श्रीमदप्पाशास्त्रिणां

# लावण्यमयी

## पञ्चमः परिच्छेदः

## रहस्योद्घाटनम्

अथापरेद्युः कस्मिंश्चन कुटीरे किमप्यबलाद्वयं परस्परं संलपत्समभूत्। तत्रैका परिचितपूर्वैव नस्तापसी, द्वितीया च योगिनी कापि। तत्राह योगिनी—हुं ततस्ततः।

तापसी। किं ततस्ततः? अभ्यन्तरं प्रविष्टायामेव मयि प्रबुद्ध आर्यपुत्र इति नोचितमवसरे तस्मिंस्तत्रावस्थानम् इत्याकालयन्ती निरक्रामम्। स किल मां सरभसमुपेत्य ग्रहीतुम् अभ्यलषत्। किन्तु सूचीभेद्ये तमसि तत्रैव क्वचन निलीनाहमिति विफलमनोरथः सम्भ्रान्तश्च परिजनम् प्रबोधयामास। अस्मिन्नेव च व्यतिकरे लब्धावसरा सदनतोऽस्मादपाक्रामम्।

योगिनी। हला नैतद् युक्तरूपमनुष्ठितं श्रीमत्या यदसि तदानीमपक्रान्ता। उचितं हि समये तस्मिन्नुपगत्य सम्भावयितुमेनं श्रीमत्याः।

तापसी। सखि! न जाने कुत इति, समाक्रान्तं साध्वसेन वेपमानमिवासीत् तदानीं मे हृदयम्, तत एव च न प्राभवमुपसर्प्तुं तमेनम्।

योगिनी। कियन्तं वातिवाहयिष्यसि समयमेवं तूष्णीकैव?

तापसी। यदवधीति लिखितं ललाटे भगवता विधिना। को हि खलु प्रभवेत् प्रमार्ष्टुं लिखितमेतस्य?

योगिनी। भवतु। अतिवाह्यतां नामैवं कियांश्चन समयः। अवश्यं पुनरसौ साक्षात्करणीयः श्रीमत्या।

तापसी। धिङ् मुग्धे! कथं वैनमसाक्षात्कृत्यैवावस्थास्ये? अवश्यं किल योजनीयः फलेन मनोरथ इत्यत एव हि साहसमेतदवलम्बितम्।

योगिनी। कच्चित् प्रत्यभ्यज्ञासीत् त्वां वत्सा लावण्यमयी?

तापसी। कथं वासौ तपस्विनी प्रत्यभिजानातु?

योगिनी। भद्रे! समेधमान एव संलक्ष्यते लावण्यमयी-सुधाकरयोः प्रणयः। उद्यानभूमौ पुनर्विहरन्तावेतौ समालोकमानायाः सम्भावयति मे चित्तम् अति हि नाम रमणीयमेतद्विनिर्मितं विधात्रेति।

तापसी। अशेषमप्येतत् पुनरात्मनोऽनुग्रहेण—

योगिनी। (अर्ध एव वचनमाक्षिप्य) आस्तामेतत्। किन्तु सखि कथं वास्मै

स्तोकमप्यनिवेद्यैवास्यपक्रान्ता। प्रदायापि हि मे सुधाकरं वत्सरद्वयं न्यवात्सीः सदने। तत् कथं नु केनापि प्रसङ्ग न कस्मिन्नपि समये नैवासि किञ्चिदप्युक्तवती ?

तापसी। समादाय सुधाकरमपेतायां त्वयि मोहमेवोपागच्छम्। अवाप्तसंज्ञा च परस्तादवेदिषं मृतजात एवेति नीतः शिशुः साविकयेति। 'अहमेव कुमारं नेष्यामी'ति भवदीयं पुनर्वचनं संस्मरन्त्याः समुदभून्मे मनस्याश्वासः। सदनवर्तिनस्तु निखिला अपि व्यपेतासोरेव कुमारस्य प्रसूतिमाचख्युः। न चापि ततः प्रभृतिं श्रीमती मे नयनगोचरत्वमापन्ना। अत एव च समुन्मूलितमिवात्मनो मनोरथद्रुममाकलयन्ती नैव समयबन्धमावयोः कस्यापि सकाशे प्रकाशयितुं प्राभूवम्।

योगिनी। सखि! मा तावद्विस्मार्षीः प्रतिज्ञामात्मीयाम्।

तापसी। हला कच्चिदात्मानमपि विस्मरिष्यामि ? यया किल सम्पूरितः सुदुर्लभोऽपि मे मनोरथः कथं नामास्यै प्रतिश्रुतस्य विस्मरणं युज्येत ? भवतु। भद्रे! समुत्कण्ठते मे मनः प्रवृत्तिं व आमूलान्तमवबोद्धुम्। तद् अपि नाम स्यां भाजनमनुग्रहस्यास्य ?

योगिनी। भद्रे! समुपनते समुचितेऽवसरे समग्रमप्येतच्छ्रोष्यसि।

तापसी। कुतः पुनर्नेदानीमेव ?

योगिनी। मा तावत्। नाद्याप्युपस्थितोऽसौ समयः।

तापसी। यद्येवं ममापि नास्ति निर्बन्धः।

योगिनी। अवश्यं तावत् सम्भाव्यतामुपसर्पणेन दयितः श्रीमत्या।

तापसी। ममाप्ययमभिलाषः, किन्तु न जाने कुतो वा वेपते मे हृदयम्। मन्ये दिनान्येतावन्ति—

योगिनी। अलमाशङ्कया। न खलु निदाघोपहतश्चिरेणाधिगतं चन्दनरसं प्रतिक्षिपति। न चाप्येतद्विवेकिषु सम्भवति। तदयमाकर्ण्य ते प्रवृत्तिमामूलान्तां प्रशंसेदेव केवलं तवाचरितम्, नैव पुनस्तिरस्कुर्यात्।

तापसी। यद्येवम्, अद्यैव तद्दर्शनमुपसर्प्स्यामि।

योगिनी। (सपरिहासम्) निपुणं तावदवधीयताम्। मा खलु पूर्वमिवाद्यापि प्रभीतैवापक्रमिष्यसि।

तापसी। अलं परिहासेन। न खलु प्रत्यहमित्थमेव सम्पद्येत।

एवं संलपन्त्योः पुनरनयो र्योगिनी समापृच्छ्य तापसीं काननोन्मुखी प्रातिष्ठत। तापसी तु गृहीतान्तरेव कयाचिद्गरीयस्या चिन्तया तत्रैव समुपाविक्षत्।

इति लावण्यमय्यां पञ्चमः परिच्छेदः समाप्तः।

———

# यङर्थविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"नित्यं कौटिल्ये गतौ" "लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" इति पाणिनिसूत्रे। तत्र गतिकर्मणां धातूनां लुपादीनां च क्रियासमभिहारे यङ् भवति वा न वेति साम्प्रतं विचारपदवीमवतरति। प्रथमतोऽस्माभिस्तेषां तेषां वैयाकरणानां मतान्युद्धि्रयन्ते।

पाणिनिः। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥३।१।२२

भाष्यम्। यत्र चानेकाचोऽहलादेर्वोत्पद्यमानेन यङाऽर्थस्याभिधानं भवति, भवति तत्रोत्पत्तिः। तद्यथा अटाट्यते अरार्यते अशाश्यते सोसूच्यते सोसूत्र्यते।

*वा। सूचिसूत्रिमूत्र्यटत्यर्त्यशूर्णोतिग्रहणं यङ्विधावनेकाजहलाद्यर्थम् ॥*

नित्यं कौटिल्ये गतौ ॥३।१।२३

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ॥३।१।२४

*वा। उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम्।*

भाष्यम्। उत्तरयोर्योगयोर्विग्रहेण विशेषस्यासम्प्रत्ययान्नित्यग्रहणमनर्थकम्। न हि कुटिलं क्रामतीति चङ्क्रम्यत इति गम्यते।

अथैतेभ्यः क्रियासमभिहारे यङा भवितव्यम्?

*वा। क्रियासमभिहारे च नैतेभ्यः।*

भाष्यम्। क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्। भृशं जपति ब्राह्मणः। भृशं समिधो दहतीत्येव।

प्रदीपः। नहीति। चङ्क्रम्यत इत्यस्माद्योऽर्थः प्रतीयते नासौ कुटिलं क्रामतीति वाक्येन शक्यः प्रत्याययितुमिति तदर्थानभिधानादेव वाक्यं न भविष्यति। अर्थान्तरे च कौटिल्यमात्रप्रतिपादने वाक्यं निवारयितुमशक्यमिति नित्यग्रहणमनर्थकमित्यर्थः। क्रियासमभिहार इति। तक्रकौण्डिन्यन्यायेन कौटिल्यभावगर्हाभ्यां यङः क्रियासमभिहाराद्विच्छिद्य स्वीकृतत्वादिति भावः।

उद्द्योतः। नित्यम्। उत्तरयोरितिपदस्वरसाद् धातोरेकाच इति सूत्र एवेदं वार्त्तिकमिति लभ्यते। तेनेतः पूर्वं नित्यमित्यादिसूत्रद्वयलेखो लेखकप्रमादात्

तत्राद्यविषयं नित्यग्रहणानर्थक्यमिति, द्वितीयविषयं क्रियासमभिहारे चेति, तथैव भाष्य उदाहरणादिति सुधियो विभावयन्तु। नाभाविति। कुटिलं पन्थानं क्रामतीत्यर्थस्य प्रत्ययादित्यर्थः। अर्थान्तरे पथि। तक्रकौण्डिन्यन्यायेनेति। चिन्त्यमिदम्। विशेषविहितेन सामान्यविहितस्य बाध उत्सर्गापवादस्थल इत्यत्रैवायं दृष्टान्तो मिदचोऽन्त्यात्सूत्रे भाष्य उक्तः। नहि विशेषानुवादेन सामान्यानुवादबाधे दृष्टान्तो लौकिकोऽस्ति, नाप्येतद्विषये नियमेन तत्प्राप्तिरस्ति। तस्माच्चकारेण क्रियासमभिहारे चेत्यत्रापि विशेषासम्प्रत्ययादित्यस्य सम्बन्धात्, भृशं जपतीत्याद्यर्थविशेषस्य यङन्तादप्रत्ययादित्यर्थ इत्याहुः।

दाधिमथटिप्पणी। उदाहरणमिति। पूर्ववार्त्तिकस्य चङ्क्रम्यत इत्युदाहरणस्य द्वितीयवार्त्तिकस्य भृशं जपति भृशं दहतीत्युदाहरणस्य दानादित्याशयः। परन्तूत्तरयोरिति द्विवचनस्वारस्येनोभयोरेव सूत्रयोर्नित्यग्रहणस्योपात्तस्यापरत्रानुपात्तस्य चानर्थक्यकथनानन्तरमेव "अथैतेभ्यः क्रियासमभिहारे" इत्यनुयोगभाष्ये "एतेभ्यः" इत्यनेन पूर्वोपक्रान्तसूत्रद्वयोपात्तक्रम्यादीनां परामर्शो न विचारितः। तस्मादुभयत्राप्युदाहरणानि "न ह्युदाहरणमादरणीयम्" इत्यन्यत्र भाष्याद् उपलक्षणपरतयैव नेयानि। तथाचोभयसूत्रोपात्तेभ्य एव यङ् क्रियासमभिहारे च नैतेभ्य इत्यनेन निषिध्यते। 'अटाट्यते अरार्यते' इत्यत्र यङ् तु क्रियासमभिहारे वार्त्तिकेन विहित इति न स क्रियासमभिहारे गत्यर्थमात्राद्यङ्साधकः। एकाज्झलादिग्रहणसत्त्वेऽप्राप्त इव वार्त्तिकेन सूत्रयोर्नियमपरत्वेन वा क्रियासमभिहारेऽप्राप्त एव विधीयते इति "गत्यर्थेभ्यः क्रियासमभिहारे यङ् स्थितिशीलस्थावरप्रतिद्वन्द्विजङ्गमशब्दतो गमनशीलत्वप्रतीतये भवत्येव" इति शब्देन्दुशेखरोक्तमपि चिन्त्यमेव, स्वापासनकाले जङ्गमशब्दप्रयोगानुपपत्तेः। तस्माद् दन्दशूकजङ्गमादिशब्देषु यङ्कृत्युत्तरं "प्रार्थयन्ति" "रामो राज्यमचीकरत्" इत्यादौ प्रेरणाया इव कौटिल्यभावगर्हयोरविवक्षाश्रयणीयेति दाधिमथानां सिद्धान्तः।

## काशिका। नित्यं कौटिल्ये गतौ ॥३.१।२३॥

गतिवचनाद् धातोः कौटिल्ये गम्यमाने नित्यं यङ्प्रत्ययो भवति। कुटिलं क्रामति चङ्क्रम्यते। दन्द्रम्यते। नित्यग्रहणं विषयनियमार्थं—गतिवचनान्नित्यं कौटिल्य एव भवति, न तु क्रियासमभिहारे। भृशं क्रामति।

काशिकाविवरणपञ्जिका। धातोरित्येव। गताविति प्रकृतिविशेषणमेतत्। गतौ वर्तमानाद् धातोरित्यर्थः। अमुमेवार्थं पर्यायान्तरेणाचष्टे—गतिवचनाद्धातोरिति। चङ्क्रम्यते दन्द्रम्यत इति। नुगतोऽनुनासिकान्तस्य [ ७।४।८५ ] इति नुगागमः। योऽल्पीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयंश्चङ्क्रम्यते दन्द्रम्यत इति चोच्यते। अथ नित्यग्रहणं किमर्थम्? यावताऽनभिधानादेवात्र वाक्यं भविष्यति। न हि

चङ्क्रम्यत इति वृत्तेरर्थं कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुम्। तथाहि कुटिलं क्रामतीति वाक्यात् संशयो भवति किं गतिकौटिल्यमुत मनःकौटिल्यमिति। चङ्क्रम्यत इति वृत्तौ त्वसंशयं गतिकौटिल्यमेव गम्यते इत्याह—नित्यग्रहणमित्यादि। गति-कौटिल्यं विषयः। तत्र यङो नियमोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। गतिवचनादित्या-दिना नियमस्य प्रयोजनं दर्शयति नत्वित्यादिना तद्व्यवच्छेद्यम्। नित्यं सर्वकालं गति-वचनात् कौटिल्य एव भवति, न तु कदाचित् क्रियासमभिहारे। तेन भृशं क्रामतीति क्रियासमभिहारे पूर्वेण प्राप्तो यङ् न भवति।

पदमञ्जरी। धातोरिति वर्तते। गताविति तस्य विशेषणम्। गतौ वर्तमाना-द्धातोरित्येतदेवं व्याचष्टे—गतिवचनाद्धातोरिति। कौटिल्य इति। सन्निधानाद् गति-विषयमेव कौटिल्यं गम्यते। चङ्क्रम्यते दन्द्रम्यत इति। क्रमु पादविक्षेपे द्रम मीमृ गतौ। नुगतोऽनुनासिकान्तस्य। योऽल्पीयस्यध्वनि गतागतानि करोति स कुटिलां गतिं सम्पादयन्नेवमुच्यते। नित्यग्रहणमनर्थकम्, अनभिधानादेव वाक्यं न भविष्यति। न हि चङ्क्रम्यत इति वृत्तेरर्थं कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुम्। संशयो हि वाक्याद् भवति—किं गतिकौटिल्यम् उत वक्रहृदयत्वनिबन्धनं जिह्माचरणमिति। वृत्तौ तु गतिकौटिल्यमेव नियतं गम्यते, कौटिल्यमात्रप्रतिपादने च वाक्यं निवारयितुम-शक्यमनिष्टं च, अत आह—नित्यग्रहणं विषयनियमार्थमिति। गतिकौटिल्यं विषयः, तत्रैव यङ् यथा स्यादित्येवमर्थमित्यर्थः। तदाह—गतिवचनान्नित्यं कौटिल्य एव भवतीति। व्यवच्छेद्यं दर्शयति—न तु क्रियासमभिहार इति। ननु यथा वडवाया वृषे वाच्ये [ श्लो० वा० ४।१।१२० ] इत्यपत्ये प्राप्तस्ततोऽपकृष्य विधीयते, यथा वा ञीतः क्तः [ ३।२।१८७ ] भूते प्राप्तस्ततोऽपकृष्य वर्तमाने विधीयते, एवमत्रापि धातुमात्रात् क्रियासमभिहारे यङ् विहितो गतिवचनात् तु कौटिल्य इति तक्रकौण्डिन्यन्यायेनैव बाधः सिद्धः। यथा वा विवक्षितार्थानभिधानाद्वाक्यं न भवति तथा समभिहारानवगमादत्र प्रत्ययो न भविष्यति। अथैवमपि वचनापेक्षा, वाक्यनिवृत्तावपि वचनमपेक्षस्व। तदेतन्नित्यग्रहणं चिन्त्यप्रयोजनम्।

तन्त्रप्रदीपः। कौटिल्यं त्रिविधम्। देशविषमता देशकौटिल्यम्। सदोषमन-स्कता मनःकौटिल्यम्, विपरीतदिशा देशानां गमनं गतिकौटिल्यम्। तदिह गतेः श्रुतत्वाद् गतिकौटिल्यं गृह्यते। नित्यग्रहणं वाक्यनिवृत्त्यर्थं न भवति वाक्यस्येष्यमाण-त्वादित्याहुः। न च वृत्त्यर्थो वाक्याद् गम्यत इति पुनर्न्यासकारेणोक्तम्, अर्थान्तरस्यापि *मनःकौटिल्यादेर्गम्यमानत्वात्।

---

* मनःकौटिल्यात् इत्यादर्शे।

भाषावृत्तिः। गत्यर्थात् कौटिल्य एव यङ् स्यात्। जङ्गम्यते चङ्क्रम्यते। नित्यग्रहणं क्रियासमभिहारनिवृत्त्यर्थमिति स्मृतिः।

प्रक्रियाकौमुदी। नित्यं कौटिल्ये गतौ।३।१।२३॥ गत्यर्थात् कौटिल्य एव यङ् स्यान्न क्रियासमभिहारे।

प्रसादः। नित्यग्रहणं विषयनियमार्थमित्याह—गत्यर्थात् कौटिल्य एव यङ् स्यान्न क्रियासमभिहारे। इति।

प्रक्रियाकौमुदी। लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्॥३।१।२४॥

एभ्यो धात्वर्थगर्हायामेव यङ् स्यान्न क्रियासमभिहारे। भृशाद्यर्थभावगर्हयोमिश्रणेऽपि लुपादेर्यङ् स्यादिति केचित्।

प्रसादः। भृशाद्यर्थ इति। तथोक्तं मुग्धबोधे गत्यर्थाद् वक्रे ञादेर्गर्हायां यङ् न पूर्वोक्ते, तद्युते तु स्यादिति।

शब्दकौस्तुभः। गतौ वर्तमानाद्धातोः कौटिल्य एव द्योत्ये यङ् स्यात्, न तु क्रियासमभिहारे। क्रमु पादविक्षेपे। द्रम गतौ। चङ्क्रम्यते। दन्द्रम्यते। अवधारणार्थान्नित्यग्रहणान्नेह। भृशं क्रामति। ननु यथा वडवाया वृषे वाच्ये इत्यनेनापत्ये प्राप्तस्ततोऽपकृष्य विधीयते। यथा वा जीतः क्तो भूते प्राप्तस्ततोऽपकृष्य वर्तमाने विधीयते। एवमत्रापि धातुमात्रात् क्रियासमभिहारे यङ् विहितो गतिवचनात्तु कौटिल्य इति तक्रकौण्डिन्यन्यायेनैव बाधः सिद्धः। सत्यम्। अत एव नित्यग्रहणं भाष्यवार्त्तिकयोः प्रत्याख्यातम्।

सिद्धान्तकौमुदी। गत्यर्थात् कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे। कुटिलं व्रजति वाव्रज्यते।

प्रौढमनोरमा। नित्यशब्दोऽवधारणार्थ इत्याह—कौटिल्य एवेति। तक्रकौण्डिन्यन्यायस्यानित्यताऽनेन ज्ञाप्यते। तेन—पूजितो यः सुरासुरैरित्यादौ भूते क्तः सिध्यति। अन्यथा मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तो न बाध्येत। ततश्च कर्तरि तृतीया न स्यात्, क्तस्य च वर्तमान इति षष्ठ्या बाधात्।

शब्दरत्नम्। अनित्यतानेनेति। अन्यथा गत्यर्थेभ्यः कौटिल्ये विशेषविहितेन यङा क्रियासमभिहारार्थयङस्तक्रकौण्डिन्यन्यायेन बाधे सिद्ध नित्यग्रहणं व्यर्थं स्यादिति भावः। इदमत्रत्यकैयटानुरोधेन। परे तु क्रियासमभिहारादेर्यङ्द्योत्यतया तद्वृत्ते र्धातोरित्यर्थेनानुवाद्यत्वान्न विधेयत्वम्। तक्रकौण्डिन्यन्यायश्च विधेयविषयोऽचरितार्थविषयश्च ति स्पष्टमिदचोऽन्त्यसूत्रे भाष्ये। नाप्यत्राचारितार्थ्यम्। क्रियासमभिहाराविवक्षायां चारितार्थ्यात्। नित्यग्रहणन्त्वनभिधानमाश्रित्य भाष्ये प्रत्याख्यातमित्याहुः।

तत्त्वबोधिनी। नित्यशब्दोऽवधारणार्थक इत्याह—कौटिल्य इति। तक्रकौण्डिन्यन्यायेनैवेष्टे सिद्धे नित्यग्रहणं तस्य न्यायस्यानित्यत्वज्ञापनार्थम्। तेन मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तेनाबाधनात् पूजार्थेभ्यो भूते क्तः सिध्यति। ततश्च क्तस्य च वर्तमाने इति षष्ठी न प्रवर्तत इति पूजितो यः सुरासुरैरिति तृतीया साधुरेव।

लघुशब्देन्दुशेखरः। नित्यग्रहणं न वाक्यनिवृत्तये, "विग्रहेण यङन्तप्रतिपाद्यविशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यमि"ति भाष्यात्। तस्मात् कौटिल्यपदार्थान्वय्यवधारणार्थं तदित्याह—कौटिल्य एवेति। इदञ्च वृत्त्यनुरोधेन। धातोरेकाच इति सूत्रे भाष्ये तु "उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यम्। क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यमि"ति। चेन विशेषासम्प्रत्ययादित्यनुकृष्यते। विग्रहेण कुटिलं गच्छतीत्यनेन। चङ्क्रम्यत इत्यर्थासम्प्रत्ययान्नित्यग्रहणमाद्येऽनर्थकम्, कुटिलं पन्थानं गच्छतीत्येव सम्प्रत्ययात्। क्रियासमभिहारे चेति। एतल् "लुपसदे"-त्येतद्विषयम्, तद्विषयस्यैव भाष्य उदाहरणात्। तस्माद् गत्यर्थेभ्यः क्रियासमभिहारे यङ् भवत्येव। अतोऽपि वक्ष्यमाणं यत्त्वित्यादिमतमसङ्गतम्। अत एव स्थावरप्रतिद्वन्द्व्यर्थको जङ्गम इति सिद्धम्। स्थितिशीलो हि स्थावरः, तत्प्रतिद्वन्द्वी भृशं गन्ता हि जङ्गमः। योगद्वये नित्यग्रहणाभावेन योगयोरित्यस्यैवमेव व्याख्योचिता। चकारस्वारस्याच्च। यत्र तत्कृतं तत्र तत्प्रत्याख्यान उत्तरत्रासम्बन्धस्य सिद्धत्वाच्च। भावगर्हायामेवेति। इदमपि वृत्तिरीत्यैवेति। यत्तु गत्यर्थादिभ्यः कौटिल्यभावगर्हयोर्विशेषविहितेन यङा क्रियासमभिहारार्थयङस्तक्रकौण्डिन्यन्यायेन बाधस्ताभ्यामर्थाभ्यां वा तदर्थस्य बाध इति, तन्न, तस्य न्यायस्य विधेयविषयत्वादचरितार्थविषयत्वाच्च। अत्र क्रियासमभिहारादेर्यङ्द्योत्यतया तद्वृत्तेर्धातोरित्यर्थेनाविधेयत्वं क्रियासमभिहाराविवक्षायां चारितार्थ्यञ्च। अत एवाटेरतेश्च गत्यर्थकात् क्रियासमभिहारे यङुदाहृतो भाष्ये, एकाज्हलादिग्रहणञ्च प्रत्याख्यातम्।

भैरवी। नित्यं कौटिल्ये गतौ। अवधारणार्थमिति। नित्यशब्दस्य कौटिल्य एवान्वयो नतु क्रियायाम्। धातोरेकाच इति सूत्रे भाष्य इति। धातोरेकाच इति सूत्रं यस्मिन् प्रकरणे तत्प्रकरणस्य व्याख्यानपरे भाष्य इत्यर्थः। तेनैवंविधभाष्यस्य नित्यं कौटिल्य इति सूत्र एव सत्त्वेऽपि नासङ्गतिः। एतद्विषयस्यैव लुपसदेति सूत्रविषयस्य। "भृशं जपति ब्राह्मणः। भृशं समिधो दहती"त्येव ह्युक्तम्। अतोऽपि। अस्माद् भाष्यादपि। अत एव। गत्यर्थेभ्यः क्रियासमभिहारे यङः सत्त्वादेव। एवमेव। योगद्वयोक्तोदाहरणप्रदर्शकवाक्ये विशेषासम्प्रत्ययादित्यत्रैवोत्तरयोरित्यस्यान्वयेनैव। यत्र। पूर्वसूत्रे। तत्। नित्यग्रहणम्। तत्प्रत्याख्याने। नित्यग्रहणस्य प्रत्याख्याने। भावगर्हायामेव। भावो धात्वर्थस्तद्गर्हायामित्यर्थः। इदमपि। एवकारघटितवाक्येन

व्याख्यानमपि। पूर्वसूत्रस्थनित्यग्रहणस्य सम्बन्धेन हि वृत्तावेवमुक्तम्। वै.यटीयं व्याख्यानं खण्डयति—यत्त्विति। तस्य न्यायस्य। तक्रकौण्डिन्यन्यायस्य। अचरितार्थेति। उत्सर्गाप्राप्तियोग्ये विषयेऽचरितार्थविषयत्वादित्यर्थः। तथा तु न प्रकृते, कुटिलं व्रजति वाव्रज्यत इत्यत्र क्रियासमभिहाराप्रतीतेरिति। अत एव। अर्थयोर्बाध्यबाधकभावाभावादेव। यङ् दाहृतो भाष्य इति। अटाव्यते अरार्यत इति यथा।

बालमनोरमा। नित्यं कौटिल्ये गतौ। नित्यशब्द एवार्थे, कौटिल्य इत्यस्योपरि द्रष्टव्यः। धातोरेकाच इत्यतो यङित्यनुवर्तते। तदाह—गत्यर्थात् कौटिल्य एवेति। गत्यर्थवृत्तेर्धातोः कौटिल्ये द्योत्य एव यङित्यर्थः। एवशब्दव्यवच्छेद्यमाह—नतु क्रियासमभिहार इति। शब्देन्दुशेखरे तु गत्यर्थेभ्यः क्रियासमभिहारे यङस्त्येवेति प्रपञ्चितम्।

माधवीयधातुवृत्तिः। सेषिध्यते। कुटिलं गच्छतीत्यर्थः। "नित्यं कौटिल्ये गतौ" इति यङ्। नित्यग्रहणं क्रियासमभिहारे यङो निवृत्तय इति वृत्तौ प्रतिपादितम्। ( चौखाम्बा, पृः ४९ )

जैनेन्द्रव्याकरणम्। गत्यर्थात् कुटिले ॥२।१।३४

गत्यर्थाद् धोः ( =धातोः ) कुटिलेऽर्थे यङ् स्यात्। कुटिलं क्रामति चङ्क्रम्यते। जङ्गम्यते।

लुपसदचरजपजभदहगृदहदशो गर्हे ॥३१

एभ्यो गर्हेऽर्थे यङ् भवति। गर्हितं लुम्पति लोलुप्यते।

शाकटायनव्याकरणम्। गृलुपसद्दहजब्जभ्चर्दशगत्यर्थाभ्यां गर्ह्यकुटिलयोः ॥४।१।११

चिन्तामणिः। नियमार्थोऽयं योगः। तेन भृशं निगिरति भृशं क्रामतीति यङ् न भवति। जङ्गम इति रूढिशब्दोऽयं लक्षणयाऽस्थावरमात्रविवक्षामात्रे वर्तते।

हैमशब्दानुशासनम्। गत्यर्थात् कुटिले ॥३।४।३३

बृहद्वृत्तिः। व्यञ्जनादेरेकस्वराद् गत्यर्थात् कुटिल एवार्थे वर्तमानाद् धातो र्यङ् भवति न भृशाभीक्ष्ण्ये। कुटिलं क्रामति चङ्क्रम्यते। दन्द्रम्यते। कुटिल इति किम्? भृशमभीक्ष्णं वा क्रामति। धात्वर्थविशेषणं किम्? साधने कुटिले मा भूत्। कुटिलं पन्थानं गच्छति। तक्रकौण्डिन्यन्यायेन भृशाभीक्ष्ण्ययोर्निषेधार्थं वचनम्। भृशाभीक्ष्ण्ये कुटिलयुक्त एव यङ् न केवल इत्यन्ये। एवमुत्तरत्रापि। कथं जङ्गमः? रूढिशब्दोऽयं लक्षणया स्थावरप्रतिपक्षमात्रे वर्तते।

व्याख्यानमपि। पूर्वसूत्रस्थनित्यग्रहणस्य सम्बन्धेन हि वृत्तावेवमुक्तम्। कै व्याख्यानं खण्डयति—यत्त्विति। तस्य न्यायस्य। तक्रकौण्डिन्यन्यायस्य। अचरितार्थ उत्सर्गाप्राप्तियोग्ये विषयेऽचरितार्थविषयत्वादित्यर्थः। तथा तु न प्रकृते, व्रजति वाव्रज्यत इत्यत्र क्रियासमभिहाराप्रतीतेरिति। अत एव। अर्थयोर्बाध्यबा भावाभावादेव। यङ्‌दाहृतो भाष्य इति। अटाव्यते अरार्यत इति यथा।

बालमनोरमा। नित्यं कौटिल्ये गतौ। नित्यशब्द एवार्थे, कौटिल्य इत्यस्य द्रष्टव्यः। धातोरेकाच इत्यतो यङित्यनुवर्तते। तदाह—गत्यर्थात् कौटिल्य एवे गत्यर्थवृत्तेर्धातोः कौटिल्ये द्योत्य एव यङित्यर्थः। एवशब्दव्यवच्छेद्यमाह— क्रियासमभिहार इति। शब्देन्दुशेखरे तु गत्यर्थेभ्यः क्रियासमभिहारे यङस्त्ये प्रपञ्चितम्।

माधवीयधातुवृत्तिः। सेषिध्यते। कुटिलं गच्छतीत्यर्थः। "नित्यं कौ गतौ" इति यङ्। नित्यग्रहणं क्रियासमभिहारे यङो निवृत्तय इति वृत्तौ प्रतिपादि ( चौखाम्बा, पृः ४९ )

जैनेन्द्रव्याकरणम्। गत्यर्थात् कुटिले ॥२।१।३४

गत्यर्थाद् धोः ( =धातोः ) कुटिलेऽर्थे यङ् स्यात्। कुटिलं क्रामति चङ्क्रम जङ्गम्यते।

लुपसदचरजपजभदहदशगॄहदशो गर्हे ॥३१

एभ्यो गर्हेऽर्थे यङ् भवति। गर्हितं लुम्पति लोलुप्यते।

शाकटायनव्याकरणम्। गॄलुप्सद्दह्जब्जभ्चर्दृशगत्यर्था गर्ह कुटिलयोः ॥४।१।११

चिन्तामणिः। नियमार्थोऽयं योगः। तेन भृशं निगिरति भृशं क्रामतीति न भवति। जङ्गम इति रूढिशब्दोऽयं लक्षणयाऽस्थावरमात्रविवक्षामात्रे वर्तते।

हैमशब्दानुशासनम्। गत्यर्थात् कुटिले ॥३।४।३३

बृहद्वृत्तिः। व्यञ्जनादेरेकस्वराद् गत्यर्थात् कुटिल एवार्थे वर्तमानाद् धातो भवति न भृशाभीक्ष्ण्ये। कुटिलं क्रामति चङ्क्रम्यते। दन्द्रम्यते। कुटिल केम्? भृशमभीक्ष्णं वा क्रामति। धात्वर्थविशेषणं किम्? साधने कुटिले मा कुटिलं पन्थानं गच्छति। तक्रकौण्डिन्यन्यायेन भृशाभीक्ष्ण्ययोर्निषेधार्थं वच भृशाभीक्ष्ण्ये कुटिलयुक्त एव यङ् न केवल इत्यन्ये। एवमुत्तरत्रापि। कथं जङ्ग रूढिशब्दोऽयं लक्षणया स्थावरप्रतिपक्षमात्रे वर्तते।

हेमचन्द्रलघुन्यासः। अयमर्थः। सामान्यलक्षणस्य विधेर्विशेषलक्षणो विधिर्बाधको वति।

सरस्वतीकण्ठाभरणं व्याकरणम्। कौटिल्यं एव गत्यर्थेभ्यः। १।३।३३

हृदयहारिणी। गत्यर्थेभ्यो धातुभ्यो हलादिभ्य एकाज्भ्यः कौटिल्य एव यङ्प्रत्ययो वति। कुटिलं क्रामति चङ्क्रम्यते। दन्द्रम्यते। कौटिल्य एवेति किम्? भृशं ामतीति क्रियासमभिहारे न भवति।

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्।१।३।३४

हृदयहारिणी। एवेत्येव। पुनः पुनर्भृशं वा लुम्पति कुटिलं चरतीत्यत्र न भवति।

संक्षिप्तप्रसारव्याकरणम्। गत्यर्थाद्गतिकौटिल्ये। तिङन्त ५।४०॥

वृत्तिः। कुटिलं क्रामति चङ्क्रम्यते। अन्यत्र भृशं क्रामति पुनः पुनरटति।

गोयीचन्द्रटीका। गत्यर्थाद् धातोर्गतिकौटिल्ये गम्यमाने यन् भवति, न भृशा-भीक्ष्ण्ययोः। प्रक्रियेयं सूत्रकारस्य यदा पूर्वोक्तार्थेऽपि प्रत्ययो विधीयते तदा समुच्चयसूचनाय चकारादयः क्रियन्ते। कौटिल्यं हि त्रिविधं भवति। कुटिलं क्रामति कुटिलं विषमदेशं क्रामति, कुटिलचित्तं वा क्रामति कुटिलगति वा क्रामतीति संशयनिरासार्थं गतिकौटिल्य इति कृतम्। यो ह्यल्पीयसि देशे गतागतानि करोति स कुटिलां गतिमासादयन् क्रामति।...गत्यर्थाद् गतिकौटिल्य एव यन् भवति न भृशाभीक्ष्ण्ययोः। एतदेव सूचयितुं पुनः पुनरटतीति प्रत्युदाहृतम्। अटाट्यत इत्यस्य तु चङ्क्रमणमेवार्थः।

टिप्पणी। कुटिलचित्तमित्यादि। कुटिलं चित्तं यस्य तं पुरुषं क्रामतीत्यर्थः। कुटिला गतिर्यत्रेति क्रियाविशेषणत्वात् कर्मत्वक्लीबत्वे। कुटिलगतिर्वेति रेफवत्पाठे पुरुष-विशेषणम्।

मुग्धबोधव्याकरणम्। गत्यर्थाद् गॄलुपसद्चरजपजभदन्शदहो वक्रगर्हे॥८२२॥

वृत्तिः। गत्यर्थाद् वक्रे प्रादेर्गर्हायां यङ् स्यान्न तु पूर्वोक्ते, तद्युक्ते तु स्यात्।

तर्कवागीशटीका। पूर्वोक्ते मुहुर्भृशार्थे। तेन पुनः पुनरतिशयेन वा गच्छति जपति वेति वाक्ये जङ्गम्यते जञ्जप्यत इति न स्यात्। तद्योगे मुहुर्भृशार्थयोगे तु स्यात्। यथा मुहुर्वक्रम् अतिशयवक्रं वा गच्छति जङ्गम्यत इति, एवं मुहुर्गर्हितं जपति जञ्जप्यत इति। [ ८२२ ] अटत्यर्थोः पूर्वसूत्रपाठात् मुहुर्भृशार्थे यङ् भवतीति कश्चित्। अन्ये तु गत्यर्थाद् वक्र एवेत्याहुः। [ ८२४ ]

कातन्त्रव्याकरणम्। धातोर्यशब्दश्चेक्रीयितं क्रियासमभिहारे। आख्यात ४८॥

वृत्तिः। गत्यर्थात् कौटिल्य एव। भृशं पुनः पुनर्वा कुटिलं क्रामति चङ्क्रम्यते। लुपादेर्गर्ह्यात्। भृशं पुनः पुन र्वा गर्हितं लुम्पति लोलुप्यते। एवं सासद्यते चञ्चूर्यते जञ्जभ्यते दन्दश्यते जञ्जप्यते दन्दह्यते निजेगिल्यते।

टीका। गत्यर्थात् कौटिल्य एवेति। एवकारः कौटिल्यादन्यत्र निषेधार्थः। तेन क्रियासमभिहारमात्रे न भवति। चङ्क्रम्यत इति। योऽल्पीयस्यध्वनि गतागतं करोति स एवमुच्यते। वृत्तिवाक्ययोर्भिन्नार्थत्वाद् वृत्त्या वाक्यं न शक्यते निवर्तयितुम्। तथाह्येकदैकपथं गच्छन् सर्पो गतिविशेषात् कुटिलं क्रामतीत्युच्यते। कथं परो नित्यग्रहणमाचष्टे? जङ्गम्यत इति जङ्गमः। पचाद्यच्। स्थावरविरहपक्षमात्रमभिधत्ते रूढिशब्दात्। लुपादेर्गर्ह्यादिति। लुपसदचरजपजभदन्शगॄभ्य एव विधानम्। परस्तु दन्शिः कृतनलोपं निर्दिशति दन्दशीति चेक्रीयितलुक्यपि यथा स्यादिति। गर्हितार्थाभिधायित्वाल् लुपादिरपि गर्ह्य उच्यते। केचिदनयोर्योगयोः क्रियासमभिहारं नानुवर्तयन्ति। येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक इति भृशं लुम्पतीति यो न भवति। भाष्यकारस्त्वेतावपि योगावनर्थकावभिधानादित्याचष्ट।

पञ्जी। लुपादेर्गर्ह्यादिति गर्ह्यार्थविषयत्वाल्लुपादिरपि गर्ह्य उक्तः।

कविराजः। नित्यं कौटिल्ये गताविति पाणिनिः। अस्मन्मते तु वाधिकारात् सिध्यतीत्याह—गत्यर्थादिति वृत्तिः। ननु परस्य नित्यग्रहणाद् वाक्यनिवृत्तिरभिधीयते, इह तु तदभावाद् वाक्यमपि स्याच्चेत् स्यादेवेत्याह—पुनरित्यादि। नित्यग्रहणेनापि तन्निरासस्याशक्यत्वात्। तथाहि कौटिल्ये वर्तमानाद्धातोर्यशब्दो नित्यं विधीयते, न च वाक्ये धातोः कौटिल्ये विधिरस्ति, भिन्नार्थत्वेन तन्निवर्तनस्याशक्यत्वात्। अत एव टीकायां वृत्तिवाक्ययोर्भिन्नार्थत्वाद् वृत्त्या वाक्यं निवर्तयितुं न शक्यत इत्युक्तम्।

चान्द्रव्याकरणम्। गत्यर्थात् कौटिल्य एव १।१।८२

सुपद्मव्याकरणम्। गत्यर्थात् कौटिल्य एव ॥३।१।१६

वृत्तिः। न भृशाभीक्ष्ण्ये। भृशं गच्छति।

सुपद्मविवरणपञ्जिका। नियमोऽयं कौटिल्य एवेति।

सुपद्ममकरन्दः। ननु कौटिल्य एवेति सावधारणमुक्तमित्याह—न भृशाभीक्ष्ण्य इति। तेन पूर्वविधिसिद्धोऽपि यङ् नियमबलाद् बाधितो भवति। दुर्गस्तु भृशं पुनः पुनर्वा कुटिलं क्रामतीति, परत्रापि भृशं पुन पुनर्वा लुम्पतीत्युदाजहार।...एभ्यो भाव-गर्हायामेव यङ्। गर्हितमिति क्रियाविशेषणम्। गर्हितत्वं वेदनस्य निरर्थकत्वाद् दोष-दुष्टत्वाच्च। (क्रमशः)

---

# महायोगी श्रीसोहिरोबानाथः

[ श्रीगजानन-लक्ष्मण-रेगे, बि-ए ]

अस्यां दुरवस्थायामपि दिव्या नाथस्य पद्यवाङ्मयव्यतिरिक्ताः सारपूर्णाः पञ्च ग्रन्था अवशिष्टा वर्तन्ते। ते च (१) सिद्धान्तसंहिता (२) अक्षयबोधः (३) महदनु-भवेश्वरी (४) पूर्णाक्षरी (५) अद्वयानन्द इत्येते पञ्च ग्रन्था अध्यात्मविषयकाः। प्रथमतस्तावत् सिद्धान्तसंहिता संस्कृतभाषायामनुष्टुप्छन्दसोपनिबद्धाऽष्टादशसर्गात्मिका ७२९ संस्कृतश्लोकपरिमिता स्वरचित-ओवी-बद्ध-महाराष्ट्रटीकासमेता। अस्मिन् ग्रन्थे सदात्मस्वरूपयोगः भूतकर्दमसंयोगः नैष्कर्म्यसिद्धियोगः विहगमीनमार्गसाधनयोगः शुद्धव्यतिरेकयोगः पूर्णसमाधियोग इत्यादीनामष्टादशविषयाणां विवेचनं रोचकतया प्रायश्चितम्। अहो आश्चर्यं यत्संस्कृतानभिज्ञेन जनेन वेदान्तविषयकोऽयं सारभूतो ग्रन्थः श्रीगहिनीनाथदर्शनानन्तरं वर्षमात्रेण निर्मितः। तस्यायमादिमः श्लोकः—

> निःसङ्गं निर्मलं शान्तं निराकारं निरञ्जनम्।
> नित्यतृप्तं निरावर्तं निगमातीतनिर्गुणम्॥ इति।

गुरुकृपां विना कथमेतत्साधितं स्यात्। स्मारयत्येतच्छ्रीज्ञानदेवानां ग्रन्थकर्तृत्वम्। पाठशालाध्ययनं विना कथं महाराजः साधुशिरोमणि र्ज्ञानदेवो भावार्थदीपिकासदृशं पण्डितमान्यं ग्रन्थं वयसोऽष्टादशवर्षे विरचयितुं समर्थोऽभवत्। अहो तच्छ्रीनिवृत्ति-नाथस्य कृपाप्रसादफलम्। शक्तिप्रचाररूपोऽयं योगप्रभावः। सिद्धान्तसंहिताविरचन-मुद्दिश्य सोहिरोबानाथः स्वयं निरूपयति ग्रन्थस्यान्ते—

> व्याकरणेऽनभिज्ञस्य शास्त्रमजानतश्च मे।
> सञ्जाता स्फूर्तिरेवैषा सहसा गीःप्रकाशिका॥

सोहिरारचितं शास्त्रं चैतन्योक्तं च मुक्तिदम्।
सिद्धान्तसंहिता नाम स्वात्मज्ञानफलप्रदम् ॥

येथ मानुषी बुद्धि न चले। आपसेंचि चैतन्य बोले। हेंचि पाहिजे जाणरिलें। साधुजनीं ॥५६७॥

सिद्धान्तसंहितानामको ग्रन्थोऽयमाद्रियते विद्वज्जनैः सर्वत्र वैराग्यविषयस्य सुबोध-मार्मिकप्रणयनात्।

सिद्धान्तसंहितामनु विवेकमुक्तलक्षणाद्यष्टयोगात्मकः ४८० मित-ओवीवृत्त-निबद्धोऽष्ट-प्रकरणात्मकः १७४९तमे ख्रिस्ताब्देऽक्षयबोधाख्यो रचितः। तदनन्तरं महदनुभवे-श्वरीति माहाराष्ट्र्यां लिखितोऽपरो ग्रन्थः श्रीज्ञानदेवरचितज्ञानेश्वरीग्रन्थस्य च्छाया-मनुहरति। अयमप्यष्टादशसर्गात्मको नवसहस्र-ओवीवृत्तोपनिबद्धो ग्रन्थः स्थाने स्थाने श्रीज्ञानराजं स्मारयति। श्रीसोहिरोबानाथो बाल्यात्प्रभृति श्रीज्ञानदेवोपासकः, ज्ञान-देवग्रन्थस्य पठनपाठनशीलः। ग्रन्थमिममुद्दिश्य "भक्तमञ्जरीमालायां" कविना राजाराम-प्रासादिनाऽभिप्रेतम्।

देहबुद्धि नसलां कांहीं। कृष्णस्वरूप तोची पाहीं।
ज्ञानेश्वरीशीं द्वैत नाहीं। रचिता वायीं ग्रन्थ सुन्दर ॥
महदनुभवेश्वरी म्हणती जन। ज्ञानदेवींची प्रतिभा पूर्ण।
अनुभव होये श्रवणपठणें। अवलोकन करिती ॥५५॥ अ० ९४ ॥

अस्य तात्पर्यम्—

महदनुभवेश्वरी नाम रोचकोऽयं ग्रन्थो जीवन्मुक्तयवस्थायां प्रणीतः प्रसिद्धज्ञानेश्वरी-ग्रन्थस्य तुलामर्हति। अपरा ज्ञानेश्वरीयम्। अस्याः श्रवणपठनाभ्यां साधकाः प्रत्यक्षं ब्रह्मसाक्षात्कारमनुभवेयुः। अस्मिन्ग्रन्थे परमात्मयोगपरतत्त्वयोगज्ञानयोगराजयोगादि-विषयाणां व्याख्यानमत्यन्तसुलभतया कृतमस्ति। सिद्धान्तसंहिता महदनुभवेश्वरीत्येतस्य ग्रन्थद्वयस्यान्ते नाथेनैव स्वयं ग्रन्थकालो निर्दिष्टोऽस्ति। प्रथमः १६७०तम शकाब्दस्य चैत्रसुदि पञ्चम्यां समाप्तः। द्वितीयश्च १६७२ तमशकाब्दस्य मार्गशीर्षस्य कृष्णैकादश्यां तिथौ समाप्तः। मध्ये च अक्षयबोधाख्यो लघुग्रन्थः। प्रथमौ द्वौ मार्मिकौ सारगर्भौ स्वोपज्ञौ बृहदाकारौ ग्रन्थौ वर्षत्रयाभ्यन्तरे संस्कृतानभिज्ञ नैकाकिना वान्देग्रामनिवासिना समापिता इत्येतत्सर्वं विस्मयकरं खलु। ग्रन्थनिर्वाहे गुरुकृपैव शरणम् इति स्पष्टम्।

कवीन्द्र-रवीन्द्रनाथस्य

# कचं प्रति देवयानी-शापः

*[ विदाय-अभिशाप ]*

[ श्रीफटिकलाल-दासकृततात्पर्यानुवादः ]

कचः

आमन्त्रये त्वामयि देवयानि !
निष्ठां गतो मेऽद्य गुरौ निवासः।
यात्येष दासस्तव देवि ! नाकं
प्रीत्यानुजानीहि मम प्रयाणम्।
त्वत्तः शुभाशीरियमर्थ्यतेऽद्य—
या नाम विद्याधिगता मयात्र
सुमेरुशीर्षस्थितसूर्यकल्पा
प्रभातु चित्ते चिरमेव सा मे
समुज्ज्वलं रत्नमिवाक्षयांशु।

देवयानी

जानामि पूर्णोऽद्य मनोरथस्ते
विद्या गुरोर्यद् दिवि दुर्लभाप्ता।
समाः सहस्रं चरितं कठोरं
सिद्धं तपश्चापि यथाभिलाषम्।
विचिन्त्य चित्तं वद मां तथापि
किं नास्त्यपूर्णा तव कामनान्या ?

कचः

पश्यामि कामं हृदि नापरं मे।

देवयानी

किं नास्ति कश्चित्? पुनरेव पश्य।
वगाह्य सीमावधिमन्तरस्य
सन्धेहि सम्यग् यदि कापि वाञ्छा

स्यात् स्तोकलग्ना हृदयान्तराले
प्रायेण दृष्टे रविगोचरस्था
क्षुद्रापि दर्भाङ्कुरवत् सुतीक्ष्णा ।

कचः

पूर्णं कृतार्थं शृणु जीवितं मे ।
सुलक्षणे ! क्वाप्यभिलक्ष्यतेऽद्य
न दैन्यचिह्नं, न च शून्यतान्तः ।

देवयानी

तस्मात् सुखी त्वं भुवनत्रयेऽस्मिन् !
वहन् स्वकं गौरवमुच्चशीर्षं
गच्छेन्द्रलोकं स्वनियोगसिद्ध्यै ।
उत्थास्यति स्वर्गपुरेऽमराणां
हर्षध्वनिर्मङ्गलशङ्खनादैः ।
मृणालहस्तैरचिराचिताभिः
सुराङ्गना नन्दनकाननस्य
मन्दारवृक्षोद्भवमञ्जरीभि-
र्नूनं करीष्यन्ति तवोत्तमाङ्गम् ।
प्रयाणकाले पथि देवभूम्या
गणोऽप्सरःकिन्नरसुन्दरीणां
हुलुस्वनैर्माङ्गलिकैर्गलोत्थैः
सभाजनं चापि विधास्यते ते ।
निमज्जतस्तेऽत्र कठोरपाठे
विदेशभूमौ जनवर्जितायां
क्लेशैरशेषैर्विगतान्यहानि ।
सुखप्रदं स्मारयितुं गृहं स्वं
प्रवासदुःखान्यथवापहन्तुं
नासीत्कथं कोऽपि जनः स्वकीयः ।

स्वकं यदासीदिह दीनकुट्यां
तेनातिथेस्ते परितोषणाय
कृतो नु यत्नो निजसर्वशक्त्या।
परं क्व लभ्यं वद मादृशेन
जनेन नाके सुलभं सुखं यत्?
अनिन्दितं तन्नियतं प्रफुल्लं
क्व वात्र वक्त्रं सुरकामिनीनाम्?
आशा ममैषा ननु केवलास्तु
न मंस्यसे त्वं गत एव नाक-
मातिथ्यदोषान् विहितान्मयात्र।

कचः

आप्रश्नवाक्यान्यत एव देवि
कल्याणहासैर्वद मामिदानीम्।

देवयानी

हासः सखे कुत्र ममास्ति हन्त—
नेयं स्थली स्वर्गपुरी त्वदीया।
कीटः प्रसूनेष्विव नित्यमत्र
जागर्ति तृष्णा हृदि मर्ममध्ये।
स्ववाञ्छितं हा परिवृत्य वाञ्छा
भ्रमत्यवो धिक्कृतषट्पदालि-
र्यथारविन्दं निशि मुद्रितास्यम्।
गतेऽपि सौख्ये स्मृतिरस्य पृथ्व्या-
मेकाकिनी मुञ्चति शून्यगेहे
श्वासं निषण्णा भुवि दीर्घतप्तम्।
हासो न तस्मात् सुलभोऽत्र लोके।
वृथाविलम्बेन फलं किमस्ति,

स्यात् स्तोकलग्ना हृदयान्तराले
प्रायेण दृष्टे रविगोचरस्था
क्षुद्रापि दर्भाङ्कुरवत् सुतीक्ष्णा ।

कचः

पूर्णं कृतार्थं शृणु जीवितं मे ।
सुलक्षणे ! क्वाप्यभिलक्ष्यतेऽद्य
न दैन्यचिह्नं, न च शून्यतान्तः ।

देवयानी

तस्मात् सुखी त्वं भुवनत्रयेऽस्मिन् !
वहन् स्वकं गौरवमुच्चशीर्षं
गच्छेन्द्रलोकं स्वनियोगसिद्ध्यै ।
उत्थास्यति स्वर्गपुरेऽमराणां
हर्षध्वनिर्मङ्गलशङ्खनादैः ।
मृणालहस्तैरचिराचिताभिः
सुराङ्गना नन्दनकाननस्य
मन्दारवृक्षोद्भवमञ्जरीभि-
र्नूनं करीष्यन्ति तवोत्तमाङ्गम् ।
प्रयाणकाले पथि देवभूम्या
गणोऽप्सरःकिन्नरसुन्दरीणां
हुलुस्वनैर्माङ्गलिकैर्गलोत्थैः
सभाजनं चापि विधास्यते ते ।
निमज्जतस्तेऽत्र कठोरपाठे
विदेशभूमौ जनवर्जितायां
क्लेशैरशेषैर्विगतान्यहानि ।
सुखप्रदं स्मारयितुं गृहं स्वं
प्रवासदुःखान्यथवापहन्तुं
नासीत्तथा कोऽपि जनः स्वकीयः ।

स्वकं यदासीदिह दीनकुट्यां
तेनातिथेस्ते परितोषणाय
कृतो नु यत्नो निजसर्वशक्त्या ।
परं क्व लभ्यं वद मादृशेन
जनेन नाके सुलभं सुखं यत् ?
अनिन्दितं तन्नियतं प्रफुल्लं
क्व वात्र वक्त्रं सुरकामिनीनाम् ?
आशा ममैषा ननु केवलास्तु
न मंस्यसे त्वं गत एव नाक-
मातिथ्यदोषान् विहितान्मयात्र ।

कचः

आप्रश्नवाक्यान्यत एव देवि
कल्याणहासैर्वद मामिदानीम् ।

देवयानी

हासः सखे कुत्र ममास्ति हन्त—
नेयं स्थली स्वर्गपुरी त्वदीया ।
कीटः प्रसूनेष्विव नित्यमत्र
जागर्ति तृष्णा हृदि मर्ममध्ये ।
स्ववाञ्छितं हा परिवृत्य वाञ्छा
भ्रमत्यवो धिक्कृतषट्पदालि-
र्यथारविन्दं निशि मुद्रितास्यम् ।
गतेऽपि सौख्ये स्मृतिरस्य पृथ्व्या-
मेकाकिनी मुञ्चति शून्यगेहे
श्वासं निषण्णा भुवि दीर्घतप्तम् ।
हासो न तस्मात् सुलभोऽत्र लोके ।
वृथाविलम्बेन फलं किमस्ति,

प्रयाहि बन्धो ! दिवि सर्वदेवाः
समुत्सुकाः सन्ति यतस्त्वदर्थम् ।
प्रतिष्ठसे किं सुचिराय हन्त—
सर्वं समाप्तं किमु वाग्द्वयेन ?

कचः

को मेऽपराधो वद देवयानि !

देवयानी

येयं स्थली रम्यतरा वनस्य
ददावजस्रं शरदां सहस्रं
छायां सुशीतां तव तापशान्त्यै,
त्वां श्रावयामास विहङ्गगीतं
सार्धं द्रुपर्णोद्भवमर्मरैश्च,
तामेव हित्वा सुचिरं प्रभुः स्याः
खेदं विना हन्त कथं प्रयातुम् ?
म्लानेव तिष्ठत्यटवी समस्ता,
छाया द्रुमाणामपि शोकमग्ना
पश्याद्य कीदृक् तिमिरं तनोति,
पत्राणि शुष्काणि पतन्ति विष्वग्,
विरौति वायुः करुणं श्वसंश्च ।
समाजमेषां किमहो विहाय
स्मेराननो यास्यसि केवलस्त्वम् ?

कचः

यतोऽत्र जातं मम जन्म नूत्नं
वनस्थलीयं शृणु देवयानि !
नित्यं मयामन्यत मातृरूपा ।
अनादरस्तत्र कदापि न स्यात्,
प्रीत्या स्मरिष्यामि चिरं बतैनाम् । (क्रमशः)

## सर्वे मनस्विनः

मानसचिकित्सक उन्मादाश्रममागतः। केनचनाश्रमवासिना कथाप्रसङ्गेनासौ पृष्टः—कथं वा भवता ज्ञायते भवानेव पवननन्दनो भीम इति? इति। तेन प्रत्युक्तं स्वयं भगवता मह्यं कथितमिति। इति। पार्श्ववर्तिना जनेनोक्तम्—कदापि मया नैतत्कथितमिति।

———

## क्रीडेयं वा ताडयेयं वा

अर्भकः। मातः, अप्यहं बहिर्गत्वा प्रातिवेशिकस्य पुत्रेण क्रीडेयम्?

माता। नहि नहि। न खलु बालकोऽसौ मह्यं रोचते।

अर्भकः। अपि तर्हि बहिर्गत्वा तं ताडयेयम्?

———

## साहसिको भर्ता

पत्नी। अपि त्वं किमपि शृणोषि?

पतिः। अथ किम्? गृहे चौराः प्रविष्टा इति सम्भावयामि।

पत्नी। हा हन्त! सावधानो भव। किं कर्तुमुद्यतोऽसि त्वम्?

पतिः। शय्यागृहद्वारं तालकबद्धं करोमि।

———

## कुशलः परिचारकः

प्रणवकुमारस्य परिचारकोऽतीव कर्मकुशल आसीत्। एकदा कानिचन मित्राणि सप्रीतौ समामन्त्रितानि प्रणवकुमारमहाशयेन। यावत्सर्वाणि मित्राणि कथाप्रसङ्गेन व्याप्टतान्यासन्, तावत् परिचारककुलललामायमानेन रामदासेन चा-पानीयमानीतम्। प्रणवकुमारेणोक्तम् अरे रामदास, शय्यागृहं गत्वा मम कञ्चुककोषात् पत्रमेकमानयेति। रामदासेनोक्तम्, बाढमानयामि, देव। परं कतरत्पत्रं भवतापेक्ष्यते—भवतो दुहितुः श्वशुरगृहात् पलायनं यत्र वर्णितम्, आहोस्विद् यत्र भवत्तनयस्य परीक्षायामसिद्धि-रुल्लिखिता? इति।

———

## अहो औत्तराध्र्यम् [ऋग्भाष्य १।१७।६]

"सनेम नि च धीमहि" [ऋ० सं० १।१७।६] इत्यकृपादस्य मुद्रिते सायणभाष्ये दृश्यते—सनेम। आशिषि लिङ्। तस्य मस्। नित्यं ङित इति सकारलोपः किदाशिषीति यासुट्। छन्दस्युभयथेति सार्वधातुकत्वमप्यस्तीति लिङः सलोपोऽनन्त्यस्येति सकारलोपः। अतो येय इतीयादेशः। लोपो व्योर्वलीति यलोपः। लिङ्याशिष्यङ् इत्यङ्। आद् गुणः। पादादित्वान्न निघात इति। म्याकूसमुयेलरेणै मुद्रापितम्, पुण्यपत्तनेनापि तस्मिन् बहुमानात् तस्य पाठः श्रद्धया स्वीकृतः, कलिकाता विश्वविद्यालयेनापि श्रौतपाठे स एव पुरस्कृतः।

---

## सायणभाष्यपाठविमर्शः

### ऋधाथे—वर्धाथे

यामृधाते सधस्तुतिम् [ऋ० सं० १।१७।९] इत्यस्य मुद्रिते सायणभाष्ये दृश्यते ऋधाथे युवां वर्धाथे। ..ऋधु वृद्धौ। लट्। व्यत्ययेनात्मनेपदम्। मध्यमद्विवचने श्नोर्बहुलं छन्दसीति लुक्। इति॥ अत्र वर्धाथे इति पदं लिपिकरप्रमादकृतमिति विस्पष्टमेव प्रतीयते। ऋधधातोश्छान्दसे विकरणलुकि व्यत्ययेनात्मनेपदे च ऋधाथे इति रूपम्। भाषायां तु वर्धतेर्विकरणलङ् न सम्भवति। अत एव सायणाचार्येण वर्धेथे इति विलिखितमिति प्रतिभाति। Max Müller-महोदयेन वर्धाथे इति मुद्रापितम्। पुण्यपत्तनपुस्तकेऽपि गतानुगतिकतया स एव पाठः स्वीकृतः। कलिकाताविश्वविद्यालयेन श्रौतपाठस्य प्रथममुद्रणे वर्धेथे इति मुद्रितम्। संशोधितमुद्रणे (Revised Edition) Max Müller ग्रन्थमनुसृत्य वर्धाथे इति पाठ एव समादृतः। भवति विज्ञतमः क्रमशो जनः।

## मूलं मृग्यते

(१) कर्णाकर्णि प्रथितमयशः।

(२) हस्ताहस्तिमिषात् स्पृशन् कुचतटीम्। (महेशचन्द्र ण)

(३) सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्।
न शैत्येन न चौष्ण्येन वह्निः क्वापि विशेष्यते॥ (वेङ्कटाचार्येण)

---

# विचित्रम्

"रविवासरीय आनन्दबाजारपत्रिका"यां ( ११इ पौष १३६६, पृः १० स्त० ४ ) दृष्टम्—

## बोकाकथार नूतन संज्ञा

एलाहाबाद, २५शे डिसेम्बर—श्री नेहेरु आज 'बोका' कथाटिर एकटि नूतन संज्ञा दान करेन। स्थानीय कंग्रेस कमीटीर बैठके श्री नेहेरु बलेन, ये व्यक्ति अपरेर अभिज्ञतार सुयोग ग्रहण करेन ताँहाके 'विज्ञ लोक' बला चले एवं यिनि ताँहार निजस्व अभिज्ञतार सुयोग ग्रहण करेन ताँहाके अपेक्षाकृत 'कम विज्ञ लोक' बला चले। किन्तु ये व्यक्ति निजेर अथवा अपर काहारओ अभिज्ञतार सुयोग ग्रहण करेन ना ताँहाके 'प्रकृत बोका' बला चले। इति। अयमस्य सारः। मूढशब्दस्याभिनवा संज्ञा। [ अस्य को वार्थः ? ] श्रीनेहेरुरद्य मूढशब्दस्यैकां नूतनां संज्ञामदात्। [ अस्यापि को वार्थः ? ] यस्तावत्परस्याभिज्ञतया स्वयं ज्ञानवान् भवति स विज्ञ इति व्यपदिश्यते, यः स्वानुभवेन ज्ञानमर्जयति स स्वल्पविज्ञ इति कथ्यते। यस्तावन्न वा स्वस्य नापि परस्यानुभवेन ज्ञानमर्जयति स परमार्थत एव मूढ इति व्यपदेशमर्हति। इति।

वङ्गेषु हालिका अप्येतद् विजानन्ति, नात्र नूतनं किमप्यस्ति। तथा च वङ्गीयानामाभाणकः - केह देखे शेखे केह ठेके शेखे, केह दुइयेर बार ( कोऽपि दृष्ट्वा शिक्षते, कोऽपि वा प्रतिहतः शिक्षते, कोऽपि वा द्वयोरपि बाह्यः ) इति। शिशुपालवधेऽपि दृश्यते—नै परोपहितो न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः [ १६।४० ] इति।

---

# बिन्दुद्वन्द्वम्

विसर्जनीय एव संस्कृतस्य संस्कृतत्वमापादयति, विसर्गविहीनं संस्कृतं वलयविहीनमिव ललनारत्नं लेशतोऽपि न शोभते। तन्नैतदाश्चर्यं यद्रूपाञ्जलिपत्रिकायाः कार्त्तिकाङ्के ( १३६६ ) ८६५तम पृष्ठे—"अधिकन्तु न दोषायः" इति, १०२७ पृष्ठे च "न देवायः न धर्मायः" इति च मुद्रितम्। अधिकन्तु न दोषाय!

---

( तस्या रूपस्य मोहस्य हस्तान्निष्कृतिलाभो दुःसाध्यकरः ) इति। वचनत एवैतत् सविशेषं प्रतीयते !

तत्रैव ६७मपृष्ठे दृश्यते—हेलेन दि ट्रयेर कथा। Cedric the Saxon अत एव Helen the Troy !

---

## कुम्भकर्णे भकारोऽस्ति

दैनिकवसुमतीपत्रिकायां ( १७ई पौष, १३६६ ) सम्पादक-प्रबन्धस्य शिरोभागे बृहत्तरैरक्षरैर्मुद्रितं "कंग्रेसेर रसायण" इति।

रामायणे णकारोऽस्ति नारायणेऽपि वर्तते।
रसायणे कथं न स्याज्जराव्याधिविनाशिनि ॥

"वसुमती"करणाल्ये "श्रीरामकृष्णायण"-पुस्तकं क्रय्यं वर्तते।

वङ्गसाहित्यस्येतिहासग्रन्थेऽपि परिच्छेदस्य नाम दृष्टम्—"कामायण" इति !

---

## अनुप्रासस्य माहात्म्यम्

Encounter पत्रे (December, 1959, पृः २९ ) Willard Thrup महोदयस्य The well of English, now defiled समाख्ये साम्प्रतिकदोषदुष्टाङ्गल-भाषाप्रदर्शनपरे प्रबन्धे दृष्टम्—The writer of M-English is unconscious of the fact that his *pages resembles* nothing else under the sun.

Statesman पत्रे (February 5, 1960) दृष्टम्—Bigger cars *every years*.

---

## ब्रह्मसूत्र-मितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

भेदव्यपदेशात् ।१।३।४

"तमेवैकं जानथ आत्मानम्" "ओमित्येवं ध्यायथ आत्मानम्" "तद्विज्ञानेन परिपश्यन्ति धीराः" इति ज्ञातृज्ञेयभावेन "अनीशया शोचति मुह्यमानो जुष्टं यदा पश्यत्यन्यमीशम्" इति स्पष्टमेव जीवब्रह्मणो भेदेन व्यपदेशाच्च जीवो द्युभ्वाद्यायतनम् ॥४॥

### प्रकरणात् ।१।३।५

"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति ब्रह्मण एव प्रकरणात् तदेव द्युभ्वाद्यायतनं न जीव इत्यर्थः ॥५॥

### स्थित्यदनाभ्यां च ।१।३।६

किञ्च "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥"

इत्यत्र एकस्य कर्म्मफलमनश्नतो देहेऽवस्थानमात्रमुच्यते, अन्यस्य च कर्म्मफलभोग इति स्थित्यदनाभ्यां जीवब्रह्मणो निर्देशाद् ब्रह्मैव सर्वज्ञं सर्वशक्ति द्युभ्वाद्यायतनं भवितुमर्हति नत्वल्पज्ञः क्षुद्रशक्ति जीव इति ब्रह्मैव द्युभ्वाद्यायतनमिति सिद्धम् ॥६॥

### भूमा संप्रसादादध्युपदेशात् ।१।३।७

छान्दोग्ये श्रूयते "भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति । यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमाऽथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद् विजानाति तदल्पम् ।" इति ।

अत्र भूमा जीव ईश्वरो वा ? कुतः संशयोऽतिबृहत्त्वादीश्वरस्यैव तथात्वौचित्यात्, न, भूयःप्रश्नप्रवाहे नामाद्याशान्तेभ्यो गुणाधिक्याज्जीवस्यापि भूमत्वं न विरुध्यते। नह्यत्र नामाधिक्यमेव विवक्षितम्, आद्यान्तानां भूयःप्रश्नोत्तरदर्शनात्। भूमशब्दश्चात्र न भावपरः किन्तु भाविपर एव, "नाल्पे सुखमस्ती"त्यल्पप्रतियोगित्वेन भूम्नः कथनात् "भूमैव सुखमि"ति । किमत्र प्राप्तम् ? जीव एव भूमा. आशान्तानां भूयःप्रश्नोत्तरवत् प्राणात् परं न प्रश्नोत्तरं दृश्यते, दृश्यते च प्राणवेदिनोऽतिवादित्वम् "एवं विजानन्नतिवादी भवती"ति । सत्यवादिनश्चातिवादित्वमुक्त्वा विज्ञानादिक्रमेण तज्ज्ञानोपायं प्रदर्श्य"यो वै भूमा तत् सुखमि"त्युक्तम् जीवस्य च ब्रह्मांशत्वात् सुखत्वमविरुद्धम्। प्राणशब्दश्चात्र जीवपरः "प्राणो ह पिता प्राणो माता" इति प्राणस्य चेतनत्वप्रत्ययात्, पित्रादीनां परुषभाषिणं प्रति "पितृहा वै त्वमसि मातृहा वै त्वमसी"तिनिन्दाश्रवणाच्च, न खल्वचेतनं प्राणं कश्चित् परुषं ब्रूते। परमात्मपरोऽपि प्राणशब्दो दर्शितः "अत एव प्राणः" "प्राणस्तथानुगमादि"ति, तदंशत्वाच्च जीवस्यापि प्राणत्वम्, अत एव "यो नाम ब्रह्मेत्युपास्ते" इतिवत् प्राणो ब्रह्मेत्युपास्ते इति नोक्तम् अंशांशित्वादनयोरिति जीव एव भूमेति प्राप्ते आह— "भूमा संप्रसादादध्युपदेशादि"ति । भूमा परमात्मैव भवति । कुतः ? संप्रसादादधि ऊर्ध्वं भूम्न उपदेशात्। तथाहि प्राणविदोऽतिवादित्वश्रवणान्नातोऽन्यद् भूयोऽस्तीति मन्वान एव विरराम प्रश्नशब्दः, सनत्कुमारस्तु स्वयमेव ततोऽपि भूयो दर्शयितुं प्राणविद एव

नातिवादित्वं किन्तु सत्यवादिमात्रस्यैवेति प्रथमं प्रत्यायनार्थमाह "एष तु वा" इति तदनुकम्प्यैव च विज्ञानादिक्रमेण भूमानं दर्शयामास। प्राणविदेव नातिवादी किन्तु सत्यवादिमात्रमिति च व्युत्पादयितुं तु-शब्दः। प्राणतत्त्वं विदित्वा यस्तद् ब्रूते तस्यापि सत्यवादित्वादेवातिवादित्वमित्यर्थः। सत्यब्रह्मविद एव चातिवादित्वे "एतद् विजानन्नतिवादी भवता"ति व्याहन्येत, इष्टापत्तौ स्वयमेव स्वविरुद्धं वदन् कथमुपादेयवचनः स्यात्? सत्यं ब्रह्म भागश्च, "सत्यं ज्ञानमनन्तं ब्रह्म" "अन्नात् प्राणो मनः सत्यम्" "ततो वै समजायते"ति श्रुतिभ्यः। भूयःप्रश्नप्रतिवचनाभ्यां यथाऽर्थान्तरप्रतीति स्तथा सत्यादिजिज्ञास्यभेदाजिज्ञासाभेदाच्चार्थान्तरप्रत्ययः स्यादिति सत्यादीनां प्राणादर्थान्तरत्वमिति प्राणादूर्ध्वं भूम्नो निर्देशः। संप्रसादो जीवः, "एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतेः। सर्वत्र जीवस्यैव ब्रह्मत्वप्राप्तिदर्शनात्। न च प्राणस्य स्वं रूपं भवति ब्रह्म, सम्यक् प्रसीदति ब्रह्मदर्शनादिति संप्रसाद इति निर्वचनम्, अन्यथा प्राणादधीत्येवोच्येत। न च "स वा एष संप्रसादे रत्वा चरित्वा" इति श्रुतेः संप्रसादः सुषुप्तिरिति वाच्यं, सुषुप्तौ रमणादेरसम्भवात्, "यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति" "न कस्यचन वेदे"ति श्रुतेः, अत एव "उभावन्तावनुसञ्चरति स्वप्नान्तञ्च बुद्धान्तञ्चे"ति मत्स्यदृष्टान्तेन स्वप्नान्तबुद्धान्तावेवोक्तौ न सुषुप्तिः। अतः संप्रसाद इत्येव पाठः। संप्रसादो जीव एतस्मिन् बाह्ये जगति रमणादिकं कृत्वा स्वप्नाय यातीत्यर्थः। एवञ्च प्राणतत्त्वविदोऽतिवादित्वमुक्त्वा तत्र सत्यवादित्वं कारणं सत्यवदने च विज्ञानमित्येवं क्रमेण कृतिपर्यन्तमुक्त्वा कृतौ सुखप्राप्तेर्हेतुत्वमुक्तम्। ततः "सुखं भगवो विजिज्ञासे" इति सुखजिज्ञासायां "यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य" इत्युक्तम्। सुखं च निरवच्छिन्नं ब्रह्मैव "विज्ञानमानन्दं ब्रह्म" "एषोऽस्य परम आनन्द" "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"तिश्रुतिभ्यः। भूमा च प्रतिपादितः-"यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाती"ति, यत्र ब्रह्मणि दृष्टे किञ्चिदपि ततो भिन्नं न पश्यति न शृणोति न विजानाति स भूमा सर्वस्यैव विकारजातस्य कारणाद् ब्रह्मणोऽभिन्नत्वादित्यर्थः। नहि जीवज्ञानं सर्वविज्ञाने हेतुरुक्तः किन्तु ब्रह्मविज्ञानमेव "आत्मनि खल्वरे दृष्ट इदं सर्वं विदितमि"ति। भूमविज्ञानेन च सर्वज्ञत्वं दर्शितम्, तदुपायाश्च कृत्यादयो दर्शिताः। श्रुत्यन्तरञ्च "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्य" इति। न च जीवज्ञानार्थम् एते उपाया उक्ताः, तस्माज्जीवतत्त्वविदोऽतिवादित्वं तत्र च सत्यवादित्वं हेतुमुक्त्वा तदूर्ध्वं परमात्मज्ञानमेव सपरिकरं दर्शितमिति जीवादूर्ध्वं भूम्न उपदेशाद् ब्रह्मैव भूमेत्यर्थः। आह च भगवान् उपवर्षः "भूमा त्वेवेति भूमा ब्रह्म नामादिपरम्परयाऽऽत्मन ऊर्ध्वमस्योपदेशादि"ति।

प्रकरणं च परमात्मन एव "तरति शोकमात्मविदि"ति "सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु" इति शोकमोक्षार्थमेव नारदस्य सनत्कुमारं प्रत्यनुरोधात्, तेन च नानोपासनमारभ्य भूमविद्यापर्यन्तमुक्तं तत्फलं चोक्तं "स स्वराड् भवति सर्वेषु लोकेषु कामचारो भवती"ति। उपसंहारे च शोकातीतब्रह्मदर्शनमेवोक्तं "तस्मै मृदित-कषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति। ब्रह्मविद एव च शोकतरण-मन्यत्राप्युक्तं "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकं तरति पाप्मानमि"ति ॥७॥ (क्रमशः)

---

## पृच्छा

समु पूष्णा गमेमहि ( ६।५४।२ )।

पदपाठः—ऊँ इति...।

तपो ष्वग्ने ( ३।१८।२ )।

पदपाठः—तपो इति। सु। अग्ने।

न कथम्—तप। ऊँ इति ?

अभूदु भा उ ( १।४६।१० )।

पदपाठः—अभूत्। ऊँ इति। भाः। ऊँ इति।

यांश्चो नु ( ६।६६।३ )।

पदपाठः—यान्। चो इति। नु।

कथमीदृगसामञ्जस्यम् ?

## उत्तरम्

ऋग्वेदस्य पदपाठस्य प्रणेता भगवाञ्छाकल्यः। यदा निपात उकारः शुद्धरूपेणाव-तिष्ठते तदा शाकल्येन "ऊँ इति" इति पठ्यते। अत्र च प्रातिशाख्यसूत्रम् [१।७५]—उकारश्चेतिकरणेन युक्तो रक्तोऽपृक्तो द्राघितः शाकलेन" इति। रक्तोऽनुनासिकः। यदा पूर्वस्वरेण संहित उकार ओकारभावं भजते तदा पूर्वपदमुकारश्चैकपदत्वेन प्रतीयते समुदायस्य च प्रगृह्यसंज्ञा भवति। अतः समुदायादनन्तरमितिकारो दृश्यते। अत्र च प्रातिशाख्यसूत्रे [ १।३९-४७० ]—पदं चान्यः। अपूर्वपदान्तगश्चेति।

कथो नु ते परि चराणि विद्वान्वीर्या मघवन्या चकर्थ।
या चो नु नव्या कृणवः शविष्ठ प्रेदु ता ते विदथेषु ब्रवाम ॥

इति मन्त्रस्य [ ५।२९।१३ ] पदपाठः—

कथो इति। नु।...या। चो इति।...प्र। इत्। ऊँ इति। इति।

---

कवीन्द्र-रवीन्द्रस्य

# जन्मकथा

[ अनुवादकः—भट्टपल्लीस्थश्रीविष्णुपदभट्टाचार्यः ]

आहूय बालो जननीमपृच्छ "न्मातः कुतस्तावदिहागतोऽस्मि ।"
कस्मिन्नु देशेऽधिगतस्त्वयाऽहं" श्रुत्वा शिशुं वक्षसि तत्-प्रसूतिः ॥१॥
सहासमाश्लिष्य सरोदनञ्च प्रोवाच वाचं "ननु पूर्वकाले ।
रूपं मदिच्छात्मकमाददानस्त्वमध्यवात्सी हृदयं मदीयम् ॥२॥ ( युग्मकम् )
"पाञ्चालिकाभिः सह खेलने मे स्थितस्त्वमासीरथ वासरादौ ।
पुण्यक्षणेऽहं शिवपूजनस्य त्वामेव भंक्त्वा निरमाञ्च भूयः ॥३॥
"पूजार्थ-सिंहासनमास्थितस्त्वं व्यराजथा मे सह दैवतेन ।
तमर्चयन्त्या ननु ते सपर्या निर्वाहिताऽऽसीदसकृन्मयाऽपि ॥४॥
"चिरन्तनाशा-विषयस्त्वमेव प्रेम्णां तथाऽन्तर्निहितोऽखिलान्यम् ।
मम प्रसूतेरथ तत्-प्रसूतेः प्राणेष्वपि त्वं रचिताधिवासः ॥५॥
पुरातनेऽस्मद्भवने बतास्मिन्नङ्काधिरूढो गृहदेवतायाः ।
को नाम जानाति कियच्चिरं वा निलीयमानः स्थित एव मत्तः ॥६॥ (युग्मकम्)
"यदा विकासं नवयौवनेन प्राप्तं मदन्तःकरण-प्रसूनम् ।
तदा निगूढस्तु तदन्तराले पुष्पस्य सौरभ्यमिव स्थितस्त्वम् ॥७॥
"प्ररूढतारुण्य-मदङ्गकानि त्वमश्नुवानश्च सहोषितस्तैः ।
स्वकीयलावण्यमथ स्वकीयं सञ्चारयंस्तेषु च सौकुमार्यम् ॥८॥
"सर्वामराणां बहुमानपात्रं त्वं प्राक्तनस्तिष्ठसि सर्वकालम् ।
प्रभात-भातेर्वयसा समानं वयस्तवाऽपीत्यवधारयामि ॥९॥"
*"नूनं जगत्-स्वप्न-समुत्थितः सन्नानन्द-वन्या-रभसाऽऽगतस्त्वम् ।
सत्तां दधानोऽभिनवीकृतां मद्वक्षोविलग्नो भजसे विलासम् ॥१०॥
"त्वां निर्निमेषं खलु वीक्षमाणा न त्वद्रहस्यावगमक्षमाऽस्मि ।
यस्त्वं पुरा विश्वजन-स्वभूतः स त्वं मदीयः कथमद्य वृत्तः ॥११॥
"पुत्रीभवन्मेऽद्य तव प्रसूते स्तन्वाऽमुया देहमिमं विचुम्बन् ।
बिभ्रन्मुखे ते मधुरं स्मितञ्च प्रत्यक्षमाविर्भवसीह लोके ॥"१२॥

———

"एकोऽहं बहु स्यां प्रजायेय" इति श्रुतिमनुसृत्य सर्वमिदं सचराचरं जगदादौ ब्रह्मणः रूपेण स्थितम् इति कविना निजाप्रतिमवचनभङ्ग्या प्रकाशं नीयते ।

# "Inglish Az She Shood Be Spelt"

LONDON, Jan. 19.—A new method of spelling the English language, invented by a Swede, is described in today's Daily Telegraph.

The newspaper gives its report, under the headlines "Inglish Az She Shood Be Spelt," according to the spelling of the reformer, Dr. Axel Wijk.

The report reads: "A niew propozal for the reform ov Inglish spelling, which 'wood bring greit advaantages to teaching in schooles and to forreners hoo wish to lern the language', iz put forward by a Swedish man az the latest addition to the speit ov language reforms.

"Unlike udher spelling reformers, he seeks to chainge oenly between 5% and 10% ov the wurds in the vocabulary.

"He haz establisht, by statistical investigation, whot iz the normal, moste frequent spelling for the various Inglish speech sounds.

"Dr Wijk claims that hiz propozal, which he cauls regularized Inglish, wood not only bring greit advaantages to the Inglish-speaking peeples, but wood increase very considerably the prospects ov Inglish becumming a truly international language."—REUTER.

---

# वीराङ्गना

## *वीरबाला लुण्टाकस्य पादं भनक्ति*

जानुयारी-मासस्य सप्तविंशे दिवसे वर्धमानान्तर्गतासानसोलपत्तने महीशील्कलोनी-पल्ल्यां कस्यचन गृहस्थस्य भवने लुण्टाकाः समागत्य लौहदण्डेन परिवारस्य पञ्च पुरुषान् भृशं ताडयामास। ततश्च कुमारी मायाराणी भद्रजा सहसैव सरभसमभिपत्य लुण्टाकमेकं समाहत्य तस्य जानु चूर्णपेषमपिनट्। स च तत्रावशो न्यपतदनन्तरञ्च समागतेनारक्षिकवर्गेण गृहीतः। ततश्च रक्षापुरुषैश्चत्वारो जना धृता लोप्त्रस्यापि कियांश्चन भागो गृहीतः। (Statesman, January 29, 1960)

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

[ कलिकाता-विश्वविद्यालयः। द्वारस्य समीपेऽध्यापक आसन्द्यां समासीनो वर्तते। तस्य दक्षिणतस्त्रयोदशच्छात्र्यो वामतश्चोनपञ्चाशच्छात्राः काष्ठासनेषूपविष्टा दृश्यन्ते। ]

अध्यापकः। वत्साः, सावधानाः शृणुत यूयम्। पाठ इदानीं प्रारभ्यते। अद्य ओदितश्च इति सूत्रमध्येयम्। तस्य चार्थः—ये धातवो धातुपाठे ओकारानुबन्धा आम्नाता स्तेभ्यो निष्ठाप्रत्ययश्चेत् निष्ठातकारस्य स्थाने नकारो भवति। धातुपाठे रुजो भङ्गे इति पठ्यते। तत्र धातुस्तु रुज्, ओकारोऽनुबन्धः। अनुबन्धस्तु प्रक्रियादशायां नावतिष्ठते, तेन सूचितं कार्यं पुनर्भवत्येव। अत एव रुजधातोर्निष्ठायां रुग्णः रुग्णवान् इति पदद्वयं भवति।

धृष्टचन्द्रः। आर्य! किमित्योकारेणानुबन्धेनैतत् सूच्यते? किं वापराद्धं वर्णान्तरैः।

अध्यापकः। अरे जाल्म! अरे दुर्वृत्त! अरे पाटच्चर! अरे मलिम्लुच! अरे दग्धवदन! मुनिप्रवरस्य पाणिनेरिच्छैवात्र नियामिका। पाणिनिर्यद्यत्रानुबन्धमोकारम् उपासीत के वयं कीटकास्तत्र प्रत्यवस्थातुम्।

धृष्टचन्द्रः। आर्य! कात्र वार्ता प्रत्यवस्थानस्य? किमत्र कारणमित्येव पृष्टं मया।

अध्यापकः। ग्रन्थकर्तुरिच्छैवात्र कारणम्। ये कारणान्तरमन्विष्यन्ति ते मूढा दुर्वृत्ता नराधमाः पुरुषापसदाः।

आण्टनी। Theirs not to reason why,
Theirs not to make reply.
Theirs but to do and die.

फिलोमेना। आर्य, आङ्गलभाषायां प्रायेण ओकारान्ता धातव एव निष्ठायां तकारं परिहृत्य नकारमुपाददते, यथा go gone, do done, अत एव ओकार उपासितः पाणिनिना।

अमलः। आर्य! बङ्गीयलिप्याम् ओकार-क्तयोः सविशेषं सौसादृश्यं वर्तते ( ओ—क्त—) अत एव निष्ठाविषये ओकारोऽनुबन्ध आसज्यते। त्रिकालदर्शिना ऋषिणाङ्गलवङ्गीयाद्यः सर्वा भाषा निखिलाश्च लिपयः परिज्ञाताः।

रसमयः। आर्य! ओदनो तावदोकारो वर्तते, ओदन एव च निष्ठा जीवलोकस्य, त एव निष्ठायामोकार उपास्यते वैयाकरणैः।

## कस्य प्रमादः ?

कासौ कुरूपा योच्चै विजल्पन्ती वर्तते ?

मम पत्नी ।

मर्षयतु भवान् । मम प्रमादः ।

नहि नहि । मम प्रमादः ॥

---

## सर्वं सत्यं न शंसनीयं सर्वेभ्यः

व्यवहाराजीवः ( बन्दिनं प्रति ) । तव पक्षसमर्थनार्थं सर्वं तथ्यं मयावगन्तव्यम् । कच्चित् सर्वमेव मह्यं त्वया कथितम् ?

बन्दी । आर्य सर्वमेव कथितं केवलं लोप्त्रं कुत्र निगूढं तन्न विवृतम् । तत्तु स्वात्मनः कृते रक्षितमित्यवेहि ।

---

## पुस्तक-परिचयः

केनोपनिषत् । श्रीशङ्करभाष्यद्वयसंयुता । श्रीसच्चिदानन्देन्द्रसरस्वती-संयमिभिः संशोधिता भाष्यटिप्पणेन समलङ्कृता । मूल्यं रूप्यकद्वितयमात्रम् । Adhyatma Prakasa Karylay, Holenarsipur, Hassan Dist इत्यतो लभ्या ।

शाङ्करभाष्यसनाथा उपनिषदो बहुकृत्वो मुद्रिता भारते वर्षे, परं संस्कर्तॄणां ज्ञानस्य प्रयत्नस्योभयोर्वाभावात् प्रायेण प्रमादशतशबलमेव भाष्यं दृष्टिपथमुपयाति । विविध-शास्त्रपारदृश्वभिः श्रीसच्चिदानन्देन्द्रसरस्वतीसंयमिभिः सुसम्पादितेऽस्मिन् प्रबन्धे प्रमादाः प्रायेण नैव दर्शनपथमवतरन्ति । प्रथमतः प्रस्तावनायाम् "उपनिषदः स्थानम्" "उपनिषदो भाष्यद्वयम्" "भाष्यटीकाकारः" "भाष्यद्वयतुलना" "वाक्यभाष्यस्यापि शाङ्करत्वेन कैश्चिदङ्गीकारः" "उपनिषत्प्रतिपाद्यो मुख्यविषयः" इतीमे विषया निपुणमालोचिताः । ततश्च भाष्यद्वयसनाथा केनोपनिषत्, भाष्यगतविषमस्थलबोधकं श्रीमत्सच्चिदानन्दसरस्वतीकृतं टिप्पणं च । अन्ते च पदभाष्यानुसारेण संगृहीतः केनोपनिषत्सारो भाष्यस्य मुख्यशब्दा-नामर्थप्रतिपादिका सूची च सन्निविष्टौ । प्रबन्धोऽयं केनोपनिषदं बुभुत्सूनां परमोपकाराय स्यादिति न पृथग् वक्तुमावश्यकम् । त्वरन्तां वाचकमहाभागाः पुस्तकस्यास्य संग्रहणाय ।

४८तमे पृष्ठे भाष्ये दृश्यते—"मघवान् बलवत्त्वात्" इति । टिप्पणे दृश्यते—यज्ञवत्त्वादिति पाठं केचिदिच्छन्ति । तत्रोपपत्तिं न पश्यामः । इति ॥ उपपत्तिस्तु शतपथब्राह्मण उपलभ्यते । तथाहि तत्र श्रूयते—तत इन्द्रो मखवानभवत् । मखवान् ह वै तं मघवानित्याचक्षते परोऽक्षम् ( ४।१।२।१५-१६ ) इति ।

२२तमपृष्ठे भाष्यगतस्य जिह्वामूलादिष्वष्टसु स्थानेषु विषक्तमित्यस्य टिप्पणं दृश्यते—अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ इत्युक्तेषु, ( आ॥ गि ॥ ) छा० भा० ७।२।१ ) केन-च्छन्दोगयोरुभयोरपि भाष्ययोः 'जिह्वामूलादि' इत्येवारम्भादुन्नीयते क्वचिदाकरे जिह्वामूलाद्यनुक्रमो दृष्ट इति ॥

वाजसनेयिप्रातिशाख्ये वर्णानां स्थानविवरणप्रसङ्गे नादावेव जिह्वामूलस्योल्लेखो विहितः—ऋ॒ᳵकौ जिह्वामूले [ १।६५ ] इति। प्रातिशाख्यकाराणां मतेन कवर्गस्य जिह्वामूलीयत्वात् कवर्गस्य च वर्गेषु प्राथम्यात्प्रथमत एव जिह्वामूलस्य कथनं युक्तमेव। स्वराणामल्पीयस्त्वाद् व्यञ्जनानुषङ्गेण प्रतिपादनम्।

श्रीवैदेहीविवाहम्। गद्यकाव्यम्। महामहोपाध्यायपण्डितराजशास्त्ररत्नाकरादिबिरुदभाजां मद्रप्रान्तास्थानविद्वत्कविपदमलङ्कृतवता के एस् कृष्णमूर्तिशास्त्रिणा प्रणीतम्। मूल्यं रू २-८-०। No. 15, VI Main Road, Rája Annamalaipuram, Madras 28 इत्यतो लभ्यम्।

बाणभट्टीयां रीतिमनुसृत्य विरचितमिदं गद्यकाव्यं प्रतिपदमेव रचयितुरनितरसाधारणं पाण्डित्यप्रकर्षं सुगभीरं शास्त्रज्ञानं दुर्लभं गद्यपद्यग्रन्थननैपुण्यं च प्रत्याययति। अत्र रामायणस्य बालकाण्डगतस्य सीतापरिणयान्तस्य वृत्तान्तस्य सुमनोहरेण गद्येन वर्णनमुपलभ्यते। समासभूयस्त्वसनाथेऽप्यस्मिन् प्रबन्धे प्रायेण प्रसादोऽपि नात्यन्ताय परित्यक्तः। काव्यरत्नमिदं व्युत्पित्सूनां बालानां व्युत्पन्नानां च सममेव प्रमोदकरम्। विरलाः खलु पण्डितकृष्णमूर्तिशास्त्रिसब्रह्मचारिणः सुपण्डिताश्च सहृदयाश्च साम्प्रतं भारते वर्षे। यद्यपि ग्रन्थकारस्यास्वस्थतया सञ्जाता मुद्रणप्रमादाः प्रायेण शुद्धिपत्रे प्रदर्शिताः, तथापि केचनावशिष्यन्ते। तथाहि ४५तमपृष्ठे मुद्रिताया ऋचः शुद्धं शरीरम्—

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥

इति। एवमेव ४६तमे पृष्ठे मुद्रिताया ऋचः शुद्ध आकारः—

पूर्वापरं चरतो माययैतौ शिशू क्रीळन्तौ परि यातो अध्वरम्।
विश्वान्यन्यो भुवनाभि चष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥

११०तमपृष्ठे दृश्यते—वैषयिकानन्दानुभवपराकाष्ठामधिरोढुकामोऽयम् इति। ४६तमे पृष्ठे परां काष्ठामिति शुद्धरूपमुपलभ्यते।

सत्स्वप्येतादृशेषु केषुचन मुद्रणप्रमादेषु गद्यकाव्यमिदमवश्यं संग्राह्यं काव्यानुरागिभिः।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

| March, 1960. | १८८१-शकीय चैत्रस्य १४श-वर्षस्य सप्तमी संख्या | Vol. XIV No. 7 |
|---|---|---|

## बहुव्रीहिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

तैत्तिरीयब्राह्मणे [ ३।८।५।२-३ ] श्रूयते—अस्यै विशः। बहुग्वै बह्वश्वायै बह्वजाविकायै। बहुव्रीहियवायै बहुमाषतिलायै। बहुहिरण्यायै बहुहस्तिकायै। बहुदासपूरुषायै रयिमत्यै पुष्टिमत्यै। बहुरायस्पोषायै राजास्त्विति। इति। व्याख्यातं चेदं भट्टभास्करेण—विट् प्रजा राष्ट्रं वा। बहुगुः प्रभूतगुः। गोस्त्रियोरिति ह्रस्वत्वम्। बहोर्नञ्वदिति नञ्वद्भावः। नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। इति। सायणाचार्येण च व्याकृतम्—विट् प्रजा, सा विशेष्यते। बहवो गावो यस्या विशः सा बहुगुः। तथा बह्वश्वादीनि विशेषणानि। रयिमती प्रभूतधनयुक्ता। पुष्टिमती शरीरपुष्टियुक्ता। बहुरायस्पोषा बहुविधमणिमुक्तादिधनपुष्टियुक्ता। यथोक्तविशेषणविशिष्टायाः प्रजाया अयं यजमानो राजास्तु। इति।

बहुग्वैप्रभृतीनि षष्ठ्यन्तानि वैदिकानि पदानीति बोध्यम्। एतदेव श्रुतिवाक्यं बहुव्रीहिसमासव्यपदेशस्य मूलमिति प्रतिभाति।

———

१। He has no fault except that he has no fault.
Latin. Nihil peccat, nisi quod nihil peccat.

दोषास्तावत्तस्य नैव विद्यन्ते, केवलमेक एवायं दोषो यत्तस्य दोषा न विद्यन्त इति ।

२। Greek. Halletai ophthalmos meu ho dexios.

स्पन्दते मे दक्षिणं नेत्रम् । (अचिरादेवाभीष्टदर्शनं भविष्यतीति सूच्यते ।)

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां भवन्ति द्वाराणि सर्वत्र ॥ शाकुन्तलम् ।

३। Greek. Hamartanei toi kai sophoū sophōteros.
Even the wisest of the wise may err.

प्राज्ञानां प्राज्ञतमा अपि प्रमाद्येयुः ।

४। दोलाचलचित्तवृत्तिः । रघुवंशः ।

नैति मे संशयभ्रान्तमेकपक्षावलम्बनम् ।
सम्भेदावर्तपतितं प्रसूनमिव मानसम् ॥ राजतरङ्गिणी ।

Remain'd like the ass 'twixt two bottles of hay,
Without ever moving an inch either way.

समान्तरालतृणगुच्छद्वयमन्तरा रासभ इव कस्मिन्नपि पार्श्वे प्रसृतिपरिमितमप्यगत्वा निश्चलमेवावतस्थे ॥

रेखामात्रमपि स्थानान्नाचलत्पार्श्वयोर्द्वयोः ।
तृणपिञ्जूलयोर्मध्ये वर्तमानः खरो यथा ॥

न खलु परिभोक्तुं नापि शक्नोमि हातुम् । शाकुन्तलम् ।

Greek. Aidesthen men anēnasthai, deīsan d' hupodekhthai HOMER, *Iliad*, vii. 93.

Ashamed to refuse, but yet afraid to take.

प्रत्याख्यातुं त्रपते, परिग्रहीतुं पुनर्बिभेति ।

Like children with a piece of ice, they are not able to hold it nor willing to let it go.

Greek. Hōsper hoi paīdes ton krustallon oute dunantai katekhein out' apheinai thelousi. PLUTARCH.

तुषारखण्डसनाथा बाला इव न खलु ते धारयितुमेतच्छक्नुवन्ति न वा परिहातुमेतदभिलष्यन्ति ।

# राशिवडेकरश्रीमदप्पाशास्त्रिविद्यावाचस्पतयः

[ वासुदेव-नागेशशास्त्री औदुम्बरः ]

विदितमेव प्रायः सर्वेषामपि शारदोपासकानां यत्किल सर्वप्रथमतोऽमरवाणीं द्वारीकृत्यैव जगति प्रादुर्भूतं सारस्वतं तेज इति। समुद्घोष्यते च नैकैः संशोधकप्रवरैः "पृथिव्यां विद्यमानानां सर्वासामपि भाषाणां प्रायः संस्कृतसरस्वत्येव मूल"मिति। प्राचीनत्वेन परिगणितानां भाषाणां मध्ये भगवती सुरभारत्येव सुसमृद्धेत्यपि सुतरां विज्ञातमेवेद-मखिलानाम्। किन्तु कालमाहात्म्यादिदानीं सम्पन्नापीयं वाङ् नितरामपकर्षं समुपगता दृश्यते। यैः पुनरस्या अदर्शनप्रसङ्गस्तूलोत्क्षेपं समुत्क्षिप्तस्तेषामेव प्रभावोऽयम्, यद्यापि विश्वस्मिन् विश्वे सुरसरस्वती समभ्यस्यते गौरवेण पूज्यते चेति। ये चैतादृश्याः संस्कृत-वाण्याः सेवाकर्मणि बद्धकक्ष्याः समभूवन् विद्वांसः, तेषु विद्यावाचस्पतयो राशिवडेकर-श्रीमदप्पाशास्त्रिणः प्रधानत्वेन निर्देष्टव्याः सन्ति।

महाराष्ट्रेषु कोल्हापुरमण्डले राशिवडेसंज्ञके ग्रामे गुलवणीत्युपाख्यः सदाशिव-शास्त्रिशर्मा विप्रप्रवरः १७९७तमे शकवर्षे विद्यावाचस्पतेर्जन्मना पुत्रवत्तां लेभे। किन्तु बाल्य एवास्य सोऽयं कैलासमलञ्चकार। तदनु मात्रा समुपलालितोऽयमध्ययनार्थं कोल्हापुरनगरं समाजगाम बालो विद्यावाचस्पतिः। तत्र पण्डितराजेत्युपाह्वविद्वद्वरश्रीकान्ता-चार्याणां निकटे समुष्य प्राधान्येन वैयाकरणानां विषयं प्रज्ञया समुल्लङ्घितवान्। स्वभावत एव स्वकीयप्रतिभाया उत्तरोत्तरं समृद्धिशालित्वादप्पाशास्त्री सर्वेष्वेव प्रस्थानेषु प्रावीण्यं प्राप्तवान्। तथापि समासादितपाण्डित्यस्यास्य व्याकरणं साहित्यं च प्रेष्ठतां प्रापतुः।

वङ्गेषु सिद्धान्तभूषणोपाधिक-श्रीजयचन्द्रशर्मणा पण्डितेन प्रचारितायां संस्कृत-चन्द्रिकाख्य-संस्कृतमासिकपत्रिकायां श्रीमदप्पाशास्त्रिणां 'मातृभक्तिः' इत्याख्यः प्रबन्धः पुष्कलेष्वेवाङ्केषु प्रकाशयामास नैजं समृद्धं स्वरूपम्। तस्य च चन्द्रिकायां भूयसी प्रशंसा संवृत्ता। श्रीमान् सम्पादकमहोदयश्च श्रीमदप्पाशास्त्रिणां गीर्वाणवाणीनैपुण्यमवेक्ष्य वङ्गदेशीयसंस्कृतपरिषदि समुपस्थितिमेतेषां प्रार्थयामास। तत्र च तेषां वैदुष्यसमुद्गारि-सुललितरमणीयवक्तृत्वपीयूषमास्वाद्य प्रमोदलहरीषु विलोठमानो वङ्गीयविबुधनिकु-रम्बस्तान् विद्यावाचस्पतिबिरुदसमर्पणेन सत्कृतवान्। तदानीमेव श्रीजयचन्द्राख्यविदुषा १८२० शाकवर्षे संस्कृतचन्द्रिका पञ्चमवर्षारम्भे विद्यावाचस्पतिभ्यः समर्पिता। विद्या-वाचस्पतिभिर्नव्यरम्यत्वपरिष्कृतेयं चन्द्रिका तदानीं प्रचलितसंस्कृतपत्रिकासु प्राधान्यं लब्धवती। श्रीमदम्बिकादत्तव्यासविरचितं प्रसिद्धं शिवराजविजयं नाम गद्यमहाकाव्य-

मत्रैव प्रथमत आत्मानमाविर्भावयामास। इयं चन्द्रिका प्रथमतः कोल्हापुरात्प्रचलिता। अनन्तरं कञ्चित् समयं यावत् वाईक्षेत्रे प्रकाशमासादितवती। अन्ततश्च सेयं पुण्यपत्तने विद्यावाचस्पतिभिः स्वीय एव मुद्रणालये प्रादुर्भाविता। १८२७तमशकवर्षमारभ्य सूनृतवादिनी नाम संस्कृतसाप्ताहिकपत्रिकाऽपि संस्कृतचन्द्रिकायाः सहचारिणी बभूव। एतयोः पत्रिकयोश्च नानाविधविषयेषु प्रबन्धान् विलिख्य विद्यावाचस्पतिभिः प्रदर्शितमात्मनः संस्कृतभाषायां प्रभावशालित्वम्। एवं पत्रिकाद्वयसम्पादनेन सह संस्कृतग्रन्थानां महाराष्ट्रभाषायामनुवादः, संस्कृतग्रन्थेषु व्याख्याविरचनम्, सभादिषु समुपस्थानमित्यादयोऽप्पाशास्त्रिणां कार्यकलापाः प्राचलन्। श्रीमदप्पाशास्त्रिणां कृतिषु—महाकविः श्रीकालिदासः ( चरितम् ), मालविकाग्निमित्रवेणीसंहारयोष्टीका, प्राचां भूगोलविज्ञानम्, लावण्यमयी ( लघुकथा ), विष्णुपुराणस्य महाराष्ट्रभाषानुवादश्चेत्यादयः प्रबन्धाः प्रसिद्धाः। भूयांसः पुनरुत्कृष्टाः प्रबन्धाः केवलं पत्रिकाङ्केष्वेव वर्तन्ते।

श्रीमदप्पाशास्त्रिणां साहित्यप्रियता तत्र तत्रात्मानमाविष्करोति। भाषासरणिश्चैतेषां निस्तुलं रमणीयत्वमावहति। विषयविवेचनं च सुविशदत्वमलङ्करोति। यथा किल लेखनम् एवं भाषणमप्येतेषां सुचिरं सुश्रव्यमासीदिति वृद्धानां मतम्। सङ्क्षेपतस्तु भाषासौष्ठवमेवैतेषां प्रमुखं वैशिष्ट्यम्। काव्यविवेचनात्मकप्रबन्धेषु च साहित्यशास्त्रपारदृश्वत्वमेषां सुस्पष्टं दृश्यते। धर्मशास्त्रीयरहस्याभिज्ञत्वं चैतेषां तत्तद्विषयकप्रबन्धेषु स्पष्टीभवति। आर्यधर्मेऽविचला दृढश्रद्धा तदनुसारी चाचारः, तद्विरोधकानां विरोधश्चेत्येतदेतेषां लेखनी सुस्पष्टं प्रतिपादयति। एतेषां च संस्कृतभाषाप्रभुत्वस्य भूरि भूरि स्तोत्रमनुगीतं तादात्विकैर्विद्वद्भिः। वाराणसेयभारतधर्ममहामण्डलेनापि विद्यालङ्कारमहोपदेशकेतिपदवीद्वयेन बहुसंमानिता एते। एवं विश्रुतयशसो विद्यावाचस्पतयः स्ववयसोऽष्टात्रिंशात्मके वर्षे १८३९ शकवत्सरे स्वकीयं भौतिकं कलेवरं समुत्सृष्टवन्तः। एतेषां च विवाहत्रयं सञ्जातम्। अपत्यलाभस्तु नाभूत्। एते परमशिवोपासका आसन्। एतैः किल संस्कृतगद्यविलेखने क्रान्तिरेव कृता। तेषां पत्राङ्केष्वेव विद्यमानानां लेखानां स्वतन्त्रपुस्तकरूपेण मुद्रणमावश्यकम्। चन्द्रिका सूनृतवादिनी च विद्यावाचस्पतिभिः साकं महाकाले विलीने। संस्कृतभाषायां नैपुण्यसम्पादनाय श्रीमदप्पाशास्त्रिविद्यावाचस्पतिरचितप्रबन्धानां पठनमावश्यकमेवेति मन्यामहे।

स्वर्गताप्पाशास्त्रिणां

# लावण्यमयी

## षष्ठः परिच्छेदः

## *योगीन्द्रः*

अथापृच्छ्य तापसीं विनिर्गता किल योगिनी महीयांसं प्रदेशमतिक्रम्य निरन्तरप्ररूढानेकतरुनीरन्ध्रितं नानाविधसत्त्वसंकुलं विजनप्रायं किमप्यरण्यं प्राविक्षत्। गगनमध्यमारूढः किलेदानीं भगवान् सविता प्रखरतरैः किरणैरनलमिव प्रकिरन् प्रातापयद् भुवनम्। प्रचण्डतमतापविह्वला इदानीं पतत्रिणः प्रविश्य कोटराणि शीतलशीतलानि च किसलयान्याश्रित्य प्रच्छादितगात्रा अवतस्थिरे। आरण्यकपशुकदम्बकान्यपि विहाय वनपरिभ्रमणं प्रविक्लवा अधिष्ठाय प्रच्छायशीतलानि तरुमूलानि रोमन्थमावर्तयामासुः। नेदानीं काननेऽस्मिन् मानुषो नाम कोऽपि दृष्टिपथमापेदे। केवलं तु प्रगल्भाकृतिस्त्रिंशद्वर्षदेशीये वयसि वर्तमाना सौन्दर्याधिदेवतेव विग्रहिणी योगिन्येवैयमेकाकिनी पन्थानमतिलङ्घयन्त्यासीत्। सावेगं च प्रयान्ती सेयं समयेन कियतापि समुल्लङ्घ्य कियन्तमप्यध्वानमटव्या एतस्या मध्यप्रदेशमुपागच्छत्।

तत्र च समुन्नमय्येव शीर्षमवलोकमानः काननश्रियम् अभ्रंलिहशाखाशतसमाकुलः कोऽपि पादपः समभूत्। एतस्य च च्छायायां मध्याह्नभानुकरतापतप्ताः प्रक्रान्ततया प्रसार्य ग्रीवां निषण्णाः कतिपयो गावश्च महिष्यश्च। पत्रच्छायासु लीनानां च प्रावर्तत श्रवणसुभगं कूजितं विहङ्गानाम्। नातिदूरे चास्य तरुमूलस्य प्रसारितालोलजिह्वो विनिःश्वसन् विश्रब्धमिव प्रसुप्तः कोऽपि कुक्कुरः समभूत्। सर्वतः किल प्रदेशेऽस्मिन् विललास प्रकामं शान्तिः। उपस्थितायां पुनरत्र योगिन्यां विलयोन्मुखीवासौ समभूत्। प्रादुरासीच्च सम्भ्रमः सर्वत्र। अवेक्षमाणाश्च योगिनीम् आलस्यजडेन चक्षुषा सपदि समुदतिष्ठन् समाधूतगात्रा गावः। साध्वसेनेव च समाक्रान्ताः पर्यत्यजन् मधुरमधुराणि कूजितानि पक्षिणां निवहाः। सरभसं च पार्श्वपरिवर्तनेनोत्थाय विलोलयन् रसनां समुपससर्प श्वा पादमूलं योगिन्याः। नूनमतिमात्रं हृदयहारिणीदानीं काननश्रीः समभूत्। योगिनी पुनरसावननुगृह्यैव दृग्विक्षेपेणैनं तरुशिखरव्यापारितविलोचना योगीन्द्र योगीन्द्रेति तारतरमाचक्रन्द।

समाकर्ण्य चैतदस्या आक्रन्दितं तदात्व एव निबिडतमतरुशाखान्तरालविनिर्गतः समवारुरोह भुवस्तले कोऽपि वामनः पुरुषः।

एष किल शिरस्यायतायतैरपि स्नेहसंपर्कशून्यतया सर्वाङ्गीणमिव रौक्ष्यमावहद्भिः पर्याकुलप्रायैर्मूर्धजैः प्रव्याप्तचुबुकमूलप्रसृतेन चानाभि प्रलम्बमानेन नातिकृष्णेन

कूर्चिकाकलापेन समुल्लसितः कपोलतलव्यापिना च कूर्चिकाकलापस्पर्शिना श्मश्रुजालेन नितान्तमेव दुरुन्नेयमुखकुहरो विभीषणवदनः शोणविलोचनो निर्मांसप्रायगात्रयष्टिः करकलितनातिपीनायतवेणुदण्डः प्रशान्तभीषणाकारः समभूत्।

योगिनी पुनरवेक्ष्यैनमप्रभीतैवोपसृत्य कृतप्रणामा सप्रश्रयं च सस्मितं च सपरिहासमिव च वक्तुमारेभे।

योगिनी। साधु योगीन्द्र! साधु। पर्यङ्कमप्यधिशयिता नाधिगच्छन्ति प्रस्वापमवस्थायामीदृश्यामितरे। श्रीमान् पुनस्तरोरस्य शाखास्वेव प्रगाढं संवेशसुखमनुभवति।

योगीन्द्रः। सुन्दरि! एवमिदम्। अनभिज्ञाः खलु पारमार्थिकस्य सुखस्यैते। वयं पुनः सर्वथा सुखिनः। अत एव च बलादिव गृह्णाति नो निद्रा।

योगिनी। कुतो नाम वार्तापि सौख्यस्य। एतत् पुनर्विभाव्यत एव केवलं समाहितेन मनसा भवता। यदा पुनः समनुभूयमानेयं भवता दुःसहतरा विपत् प्रादुष्करोति मे मनस्यात्मानं तदा खलु वज्रोपहतमिव भवति मे चेतः। भवतु, का गतिः? सर्वथा विश्वम्भरः शरणम्।

योगीन्द्रः। प्रेयसि! कुतो नामेदानीं मे व्यसनम्? यथा हि पूर्वमेवं नैतदधुनापि मे मनः स्पृशति। यस्य किल नामापि शृण्वन्तः साध्वसकम्पिता इवाभवन् परिपन्थिनो भूपा यमेव चोपजीव्य सुखमत्यवाहयन् समयं परःसहस्रा महात्मानो यस्यैव च बाहुबलमवलम्ब्य पर्यत्यजद् भयं वसुधा किमिव नामास्य व्यसनम्? केवलं तु श्रीमत्यैव समनुभूयमानमेतद्व्याकुलीकरोति मे चेतः। अनर्हा हि सर्वथास्या विपदः शिरीषकुसुमपेशलेयमाकृतिः श्रीमत्याः।

योगिनी। नाथ! किमिति वा नेदानीमपि नगरप्रवेशे मनः क्रियते। सप्तदशः किलायं वत्सरो नगरं परित्यक्तवतामस्माकम्। अपि नाम गृह्णीयुरिदानीमप्यस्माननुशास्तारः। न खल्वेतत् सम्भाव्यते। तदनुमन्यतां मे प्रणयः। शक्यं हि मन्दिर आत्मनः कथमपि सुखमेव कालमतिवाहयितुम्।

योगीन्द्रः। प्रेयसि! नास्ति खलु म्लेच्छानां राज्ये क्षमा नाम। तत्र खलु निर्दोषा अपि दोषित्वेन गृह्यन्ते दोषिणोऽपि च नियतमेव निर्दोषतामापद्यन्ते। वयं खलु गोपालपुराधीशाः। सर्वतः प्रसृते च प्रक्षोभे समादाय नालिकास्त्राणि सुदूरमपनीतः प्रत्यवस्थायिनां मदोऽस्माभिः, प्रादायि च म्लेच्छेभ्यः साहाय्यम्। दूरे तावत् कर्मणोऽस्य कृते नः पारितोषिकम्। वयमेव पुनरत्रापराधित्वेन निर्णीताः। प्रकाश्य चास्माकं शारीराभिज्ञानानि प्रतिश्रुतं चाघोषितं चास्मदुपलम्भ-

वार्तावेदकेभ्यः पारितोषिकद्रव्यम्। मार्गयन्ति खल्विदानीमप्यस्मान् निगूढचारिणश्चारा म्लेच्छानाम्। यत्तु कालमेतावन्तम् आश्रित्य काननमिदं जीवामः सोऽयमनुग्रह एव केवलं भगवतो धातुः। प्रेयसि! का कथा षोडशानां सप्तदशानां वा वर्षाणाम्। एते खलु व्यतीतेष्वपि पञ्चाशदभ्यधिकेषु वर्षेषु प्रत्यक्षीकृतानस्मान् गृह्णीयु वियोजयेयु-श्चोद्बध्य प्राणै निर्वासयेयुर्वाप्यपुनरागमनाय राष्ट्रात्। अत एव युक्ततरोऽयमिदानीं विजन एव वासोऽस्माकम्।

योगिनी। अलमाशङ्कया। को हि नामेदानीं वेषेणामुना समाच्छन्नं श्रीमन्त-मभिजानीयात्? सर्वथा हि परिवृत्त इदानीं भवदीय आकारः।

तथा किलेदं वचनमुदीरितं प्रणयपरिप्लुतान्तःकरणया श्रीमत्या योगिन्या यथा श्रवणकुहरप्रविष्ट एवैतस्मिन् प्राद्रवद्योगिनो हृदयम्। प्रत्याह चायं सुदीर्घमुष्णं च निःश्वस्य 'प्रेयसि! कुत इदानीं नगरे नः सुखस्य प्रत्याशा?' इति।

योगिनी। सा तु चिरायैव परित्यक्तास्माभिः।

योगीन्द्रः। तत् क इवेदानीं चिन्ताया अवसरः? ( स्मरणमभिनीय ) प्रेयसि! कथमिदानीं वत्सा?

योगिनी। बाढं कुशलिनी।

योगीन्द्रः। उत्कण्ठते मे हृदयं सकृदपि तावदेनां साक्षात्कर्तुम्।

योगिनी। तत् को विलम्बः? सम्प्रति हि सह कुमारसुधाकरेणोपवनसन्निहितया तया भवितव्यम्।

योगीन्द्रः। प्रेयसि! यदि नाजीवयिष्यत् कुमारं श्रीमतो रमेशचन्द्रमहोदयस्य श्रीमती तदा कुतः सम्भावनापि नाम परिणयस्य वत्सायाः? न खलु प्राभविष्यदात्मानं वा मामपि वा प्रत्यभिज्ञापयितुं भवती। अविज्ञातकुलशीलायाश्च योगिन्याः कन्यकां को वा परिणेतुमीहेत?

इत्येवमभिधाय च योगीन्द्रः सुदीर्घं निशश्वास। योगिन्यपि दीर्घं निःश्वस्य निजगाद 'सर्वथा प्रभवति विश्वभावनो भगवान्। आस्तामेतत्। कच्चिदागमिष्यति श्रीमान्?'

योगीन्द्रः। प्रेयसि! मा तावत्। न खल्वद्य प्रभवाम्यागन्तुम्। न जाने कुतो वा व्याकुलीक्रियते मे हृदयं सपदि साध्वसातिशयेनेति।

योगिनी। तत् कदा पुनरनुग्रहीष्यत्यार्यः?

योगीन्द्रः। जानात्येव भवती यथाहमस्मिन्नेव प्रदेश उपतिष्ठ इति।

योगिनी। जानाम्येतत्। तथापि वाञ्छामि नियतं कमपि समयमवबोद्धमार्या-गमनस्य।

# विनायकं हि कुर्वाणो रचयामास वानरम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

युवं दक्षं धृतव्रत मित्रावरुण दूळभम् [ ऋ० सं० १।१५।६ ] इत्यस्य Max Müller-मुद्रिते सायणभाष्ये दृश्यते—दूळभं दुर्दहं। शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्थः।... दूळभं। दह भस्मीकरण। दुःखेन दह्यत इति दुर्दहं। ईषद्दुःसुष्वित्यादिना। पा० ३. ३. १२६। दुर्युपपदे दघेः खल्। व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य च भकार इति।

एतदत्यद्भुतमिव प्रतिभाति। तत्र कारणानि निर्दिश्यन्ते।

१। पदपाठे विस्पष्टमेव दुःऽदभम् इति व्याकृतिर्दृश्यते। आधुनिका भारतवर्षीयाः पदपाठमवकरप्रायं मन्यन्ते, माधव-स्कन्दस्वामि-सायणप्रभृतीनां पुनः पदपाठे गरीयसी श्रद्धासीत्। अयमेव प्रथमं वेदव्याख्यानमिति तेषां मतम्। पदपाठे दभधातोः समुल्लेखात् गरीयः कारणमन्तरेण सायणेनापि तस्मादेव धातो र्व्युत्पादितो दूळभशब्द इति सम्भाव्यते। तथाविधं च किमपि कारणमत्र नोपलभ्यते।

२। निघण्टुना निरुक्तेन च सायणस्य घनिष्ठः परिचय आसीत्। निघण्टौ दभ्नोतिर्गतिकर्मसु वधकर्मसु चाम्नायते।

३। बहुषु प्रातिशाख्येषु दूडभशब्दगतस्य मूर्धन्यभावस्योल्लेखः कृतः, टीकाकृद्भिश्च दभधातुनिष्पन्नत्वं शब्दस्य प्रदर्शितम्।

४। वार्त्तिके भाष्ये च दभधातुनिष्पन्नत्वं दूळभशब्दस्य स्फुटमेव।

५। सायणानुसृतकाशिकायामपि वार्त्तिकं दृश्यते।

६। सायणात् पूर्ववर्तिभिष्टीकाकारैरस्यामेव ऋचि दम्भधातुनिष्पन्नत्वं दूळभशब्दस्य स्वीकृतम्।

७। सायणेनापि ऋग्भाष्येऽन्यत्र दम्भधातोरेव शब्दोऽयं व्युत्पादितः। तथाहि अप्रच्युतानि दूळभ व्रतानि [ २।२८।८ ] इत्यत्रोक्तम्—दूळभ दुर्दभ दम्भितुं हिंसितुमशक्येति।

८। दम्भधातोर्दूळभ इति सर्वत्र वैदिकनिकाये प्रसिद्धम्।

९। प्रकृते सायणभाष्ये दघेः खलिति दृश्यते। तत् कोऽयं दघिर्नाम ? सघि-स्तावदस्माकं सुपरिचिता, परं सप्तद्वीपायां वसुमत्यां निरवधौ च काले-काप्यन्यत्र दघेः साक्षात्कारो लभ्यते वा ? न च दहधातोः श्तिपा निर्देशोऽयमिति वक्तव्यम्, तथात्वे उत्सर्गतो दहतेरित्येव स्यात्। अतोऽनुमीयते दम्भेरिति पदं लिपिसादृश्याद् दघेरिति सञ्जातम्। तदनुरोधेन च लिपिकरैरपरिचितप्रायस्य दभस्य स्थाने दहो विहितः। त्रिवेन्द्रामपत्तनतः

योगीन्द्रः। अतः परं मासेनैकेनास्मिन्नेव वासरे समागमिष्यामि।

योगिनी। तत् किमिति सम्प्रत्येव नानुगृह्यत इयं परिचारिका कुटीरागमनेन? तत्रैव हि वत्सां लावण्यमयीमानेष्यामि।

योगीन्द्रः। सति सौकर्ये विधास्याम्येतत्। अन्यथा पुनः श्रीमत्येव मे कुटीरमुपायातु।

योगिनी। (सविनयम्) नाथ! एतानि तावद्भवन्तु वः पञ्चाशद्रूप्यकाणि। अनुगृह्यतामियं दासी स्वीकरणेनैतेषाम्। (इति रूप्यकाण्यर्पयति)

योगीन्द्रः। (सोद्वेगं रूप्यकाण्यवलोक्य) आर्ये! नूनं श्रीरेव भवती नः सदनस्य। (अश्रूण्युन्मुच्याकाशे लक्ष्यं बद्ध्वा) भगवन् कृतान्त! किमित्युपेक्ष्यतेऽयं जनः? अनुगृहीतो हि त्वया स्मरणशेषतामापन्नः क्लेशानां पुनरेतेषां भाजनं न भविष्यामि।

योगिनी। नाथ किमेतत्? परिचारिका नन्वियं भवदीया। विहाय चैनां का वाऽन्या जीवितनिर्विशेषं परिचरेदार्यम्? तदलमस्थाने शोकेन। यथा चैक एवावयोरात्मा तथा भवदीयमेव नन्वेतद् द्रविणम्। तदलमनौचित्यसम्भावनया।

समाकर्ण्य वचनमेतद् योगिन्या वज्रोपहत इव तूष्णीं बभूव योगीन्द्रः। उत्थाय च ससम्भ्रमं निर्वर्ण्य पुनर्योगिनीं कथमपि गृहीतद्रविणः प्रायासीत्। यावच्चासौ नान्तर्हितो वनराज्या तावदेनं निस्तरलतारकेण चक्षुषा वीक्षमाणा योगिनी तिरोहिते तस्मिन्नायततरं निश्वस्य कुटीरोन्मुखी प्रातिष्ठत।

इति लावण्यमय्यां षष्ठः परिच्छेदः।

---

# स्वाभाविकात् कृत्रिममन्यदेव!

नाटकाभिनयस्य सन्नाहः क्रियते। संलापस्तावत् परां काष्ठामधिरूढः। रङ्गभूमिगतवज्रपतनस्य विद्युद्विकासस्य चावसरः सम्प्राप्तः। सार् हेनरी आरविङ्महोदयेन रङ्गभूमितक्ष्णे आदेशः प्रदत्तः, समनन्तरमेव नालिकास्त्रशब्दानुकारी घोषः श्रुतः।

आर्विङ्महोदयेन नेपथ्य उक्तम्, अपीमं वज्रं व्यपदिशामः? लेशतोऽपि वज्रेणास्य साम्यं नास्तीति।

तक्ष्णोक्तम्, आर्य, प्रभञ्जनध्वनिना नाकर्णितो मया भवत आदेशः। परमार्थत एव वज्रपतननिर्घोषः श्रुतोऽस्माभिः। इति।

# विनायकं हि कुर्वाणो रचयामास वानरम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

युवं दक्षं धृतव्रत मित्रावरुण दूळभम् [ ऋ० सं० १।१५।६ ] इत्यस्य Max Müller-मुद्रिते सायणभाष्ये दृश्यते—दूळभं दुर्दहं। शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्थः।... दूळभं। दह भस्मीकरण। दुःखेन दह्यत इति दुर्दहं। ईषद्दुःसुष्वित्यादिना। पा० ३. ३. १२६। दुर्युपपदे दघेः खल्। व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य च भकार इति।

एतदत्यद्भुतमिव प्रतिभाति। तत्र कारणानि निर्दिश्यन्ते।

१। पदपाठे विस्पष्टमेव दुःऽदभम् इति व्याकृतिर्दृश्यते। आधुनिका भारतवर्षीयाः पदपाठमवकरप्रायं मन्यन्ते, माधव-स्कन्दस्वामि-सायणप्रभृतीनां पुनः पदपाठे गरीयसी श्रद्धासीत्। अयमेव प्रथमं वेदव्याख्यानमिति तेषां मतम्। पदपाठे दभधातोः समुल्लेखात् गरीयः कारणमन्तरेण सायणेनापि तस्मादेव धातो र्व्युत्पादितो दूळभशब्द इति सम्भाव्यते। तथाविधं च किमपि कारणमत्र नोपलभ्यते।

२। निघण्टुना निरुक्तेन च सायणस्य घनिष्ठः परिचय आसीत्। निघण्टौ दभ्नोतिर्गतिकर्मसु वधकर्मसु चाम्नायते।

३। बहुषु प्रातिशाख्येषु दूडभशब्दगतस्य मूर्धन्यभावस्योल्लेखः कृतः, टीकाकृद्भिश्च दभधातुनिष्पन्नत्वं शब्दस्य प्रदर्शितम्।

४। वार्त्तिके भाष्ये च दभधातुनिष्पन्नत्वं दूळभशब्दस्य स्फुटमेव।

५। सायणानुसृतकाशिकायामपि वार्त्तिकं दृश्यते।

६। सायणात् पूर्ववर्तिभिष्टीकाकारैरस्यामेव ऋचि दम्भधातुनिष्पन्नत्वं दूळभशब्दस्य स्वीकृतम्।

७। सायणेनापि ऋग्भाष्येऽन्यत्र दम्भधातोरेव शब्दोऽयं व्युत्पादितः। तथाहि अप्रच्युतानि दूळभ व्रतानि [ २।२८।८ ] इत्यत्रोक्तम्—दूळभ दुर्दभ दम्भितुं हिंसितुमशक्येति।

८। दम्भधातोर्दूळभ इति सर्वत्र वैदिकनिकाये प्रसिद्धम्।

९। प्रकृते सायणभाष्ये दघेः खलिति दृश्यते। तत् कोऽयं दघिर्नाम ? सघिस्तावदस्माकं सुपरिचिता, परं सप्तद्वीपायां वसुमत्यां निरवधौ च काले-काप्यन्यत्र दघेः साक्षात्कारो लभ्यते वा ? न च दहधातोः श्तिपा निर्देशोऽयमिति वक्तव्यम्, तथात्वे उत्सर्गतो दहतेरित्येव स्यात्। अतोऽनुमीयते दम्भेरिति पदं लिपिसादृश्याद् दघेरिति सञ्जातम्। तदनुरोधेन च लिपिकरैपरिचितप्रायस्य दभस्य स्थाने दहो विहितः। त्रिवेन्द्रामपत्तनतः

प्रकाशितायामृक्संहितायामपि स्कन्दस्वामिभाष्ये दभधातोः पाठविपर्ययः प्रत्यक्षीक्रियते। तथाहि तत्र १०९तमपृष्ठे दृश्यते—दूळभम् द (ह्वाबृह्यो ? ह्नो) तेर्वधकर्मण एतद्रूपमिति। प्रायेण हिंसार्थानामेषैव गतिर् भवति। दम्भेरिति पदानुसारेण भाष्यमित्थं पठनीयमिति प्रतिभाति—दूळभं दुर्दभम्। शत्रुभिर्दम्भितुं विनाशयितुमशक्यमित्यर्थः।...दूळभम् दम्भ हनने (अथवा दम्भ नाशकरणे, अथवा दम्भु दम्भे, अथवा दभ्नोतिर्वधकर्मा)। दुःखेन दभ्यत इति दुर्दभम्। ईषद्दुःसुष्वित्यादिना दुर्युपपदे दम्भेः खल्। व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो (मकारस्य च लोपः, अथवा मकारलोपं सिद्धवत् कृत्वा) डकारस्य च ळकारः इति। मद्राजविश्वविद्यालयतः प्रकाशिते स्कन्दस्वामिभाष्ये 'दम्भु हनने' इति दृश्यते। मन्ये सायणाचार्येणापि तदेव विलिखितम्, दहवासनावासितचित्तैर्लिपिकरै र्दहनने इति पठितम्, आनर्थक्यनिराकरणाय च दह भस्मीकरणे इति संशोधितम्।

---

# विनायकं हि कुर्वाणो रचयामास वानरम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## दूळभ-

व्यतीते माघे मासि दूळभमधिकृत्य मञ्जूषायां यदस्माभिर्लिखितं तत्र विप्रतिपद्यते श्रीमाधवपटवर्धनमहाभागः। श्रीमता पटवर्धनमहोदयेन लिखितं—

श्रीमतां पत्रे दूळभशब्दविषये सायणभाष्यीया व्युत्पत्तिरयुक्तेति प्रतीयते।

इति। अहो प्रमादः! सायणेन सुसमीचीना व्युत्पत्तिः प्रदर्शिता लिपिकरपरम्पराप्रमादेन जामातृसंशोधनेन च पाठभ्रंशः सञ्जात इत्येव साधयितुं प्रयतितमस्माभिः। यैः प्राचीनहस्तलिखितानि पुस्तकानि परीक्ष्यन्ते तैर्बहुशो दृश्यते कालक्रमेण पाठस्यान्यथाभावो भवतीति। तथाहि ऋग्वेदे श्रूयते—इमा धाना घृतस्नवः [ १।१६।२ ] इति। अत्र Max Müller मुद्रिते भाष्ये दृश्यते—धाना भ्रष्टयवतण्डुलान् इति। पुण्यपत्तनपुस्तके मूले स एव पाठः स्वीकृतः, पत्रस्य पाददेशे पाठान्तरं दृश्यते—ग-ण-र—मृष्ट° इति। कलिकाताविश्वविद्यालयतः प्रकाशिते श्रौतपाठे प्रथममुद्रणे भ्रष्टयवतण्डुलानिति पाठः, सम्प्रतिप्रकाशिते द्वितीये संस्कृतमुद्रणेऽपि स एव पाठः। यदस्माभिरेतत् प्रदर्श्यतेऽच्येत च—अत्र पाठान्तरं वर्ततां वा मा वा वर्तिष्ट Max Müller-महोदयेन संशोधनमण्डलस्थपण्डितप्रकाण्डैः कलिकाताविश्वविद्यालयस्य विद्वद्वृन्दारकैश्च यथेष्टं प्रत्यवस्थीयतां

तथापि सायणाचार्येण भृष्टयवा इति विलिखितं न पुनर्भ्रष्टयवा इति, अत्र पाठ एव भ्रष्टो न पुनर्यवाः, अन्यत्र Max Müllerग्रन्थे [ ३।३५।३, ७ प्रभृतिभाष्येषु ] पुण्यपत्तन-पुस्तके च भृष्टयवा इत्येव पाठ इति, तर्हि किमसौ भाष्यकारस्योपर्याक्षेपः स्यात् ?

ततश्च पटवर्धनमहोदयेन लिखितम्—

भाष्ये दूळभमित्यस्य न दुरो दाशनाशदभध्येष्विति वार्त्तिकतोऽत्र सिद्धिर्मन्यते। अत एव बाहुल्येनात्र ऊकारलोपडकारभकारादीनां साधनं प्रतिपाद्यते। तत्र नायं नियमो यद् दूळभपदं दम्भेरेव साधनीयं न दहेरिति, वैदिकत्वाद् पस्य।

इति। सत्यं नायं नियमः। एवमेव नायं नियमो यद् वृधधातोः शानचा वर्धमान-शब्दो निष्पादनीयः, वर्धमाने बाहुल्येन सीताभोग-मिहिदानयोर्मृष्टान्नयोः सद्भावात् सीताभोगशब्दान्मिहिदानाप्रत्ययेनापि पृषोदरादित्वाद् वर्धमानशब्दस्य सिद्धिरुपपादिता-स्माभिर्मञ्जूषायां रसमञ्जर्याम्। काष्ठशब्दाद् inch-प्रत्ययेन bench-शब्द-निष्पत्तिरपि प्रदर्शितपूर्वैवास्माभिर्वाचकमहाभागेभ्यः। वाल्वायतो वैदूर्यशब्दस्य विश्रवसो रावणशब्दस्य च व्युत्पत्तिः सुप्रसिद्धैव। परं दूळभशब्दो दम्भधातुनिष्पन्न इति सर्वेऽपि वैदिका विजानन्ति, पदपाठेऽपि दुःऽदभमिति व्याकृतिः संशयोच्छेदिनी। वाजसनेयिप्रातिशाख्ये दृश्यते—उकारं दुर्दे [ ३।४२ ] इति। व्याख्यातञ्च उमुवटेन—दुरित्ययं विसर्जनीय उकार-मापद्यते दकारे प्रत्यये उकारात् परश्च दन्त्यो मूर्धन्यमापद्यते। यथा दुः दभः परि ते दूडभो रथः इति। आथर्वणप्रातिशाख्यव्याख्याने दृश्यते[२।६३]—अपर आह—ध्य-नाश-दाशदभेषु लुप्येत, उपधायाश्च दीर्घः, तवर्गीयस्य टवर्गीय इति। ऋक्प्रातिशाख्यव्याख्याया-मपि [ ११।४० ]—दूळभो रथः। दुर्दभ इति दुःऽदभ इति क्रमपाठ उद्धृतः। निघण्टौ गतिकर्मसु वधकर्मसु च दभ्नोतिराम्नायते।

स्कन्दस्वामिभाष्ये दृश्यते—दम्भु हनने। दूढ्यदूणाशदूळभप्रवादा इति दीर्घत्वम्। इति।

एवं दूळभेत्यत्र भकारस्य जाज्वल्यमानत्वेऽपि निघण्टौ वधकर्मसु दभ्नोतेराम्नातत्वेऽपि पदपाठे दभस्य जागरूकत्वेऽपि प्रातिशाख्येषु दभधातुनिष्पन्नत्वे प्रदर्शितेऽपि स्कन्दस्वामि-प्रभृतिभिर्विस्पष्टमेव दम्भधातोः समुल्लेखेऽपि स्वयमेवान्यत्र दम्भधातुनिष्पन्नत्वे दर्शितेऽपि केवलमाहोपुरुषिकया विद्वद्वृन्दवरेण्यः सायणाचार्यो दहधातुनिष्पन्नत्वं दूळभशब्दस्य कथं प्रतिजानीत? को वा प्रेक्षावान् प्रयोजनविशेषमन्तरेण विद्वज्जनक्षुण्णं पन्थानं परित्यज्यापथे पदमर्पयेत्?

समस्य वाक्यस्य पाठभ्रंशेऽपि सर्वेष्वेव हस्तलिखितेषु पुस्तकेषु परिदृश्यमानं दग्धेरिति पदं पारमार्थिकं पाठं संसूचयति। इकृश्तिपौ धातुनिर्देशे इति वार्त्तिकेन दहधाते

श्तिपा निर्देशे दहतेरिति स्यात्। सायणाचार्येण प्रायेण सर्वत्रैव स्वभाष्येऽनयैव रीत्या धातुनिर्देशः कृतः। भाष्यकारेणापि पचेब्रूहि पचतेब्रूहीत्युदाहरणमुपन्यस्यतैतदेव स्फुटीकृतम्। अत एव—

"श्तिपि प्रत्यये शित्त्वात् सार्वधातुकत्वादिडभावे हो ढ इति ढत्वे घत्वे जश्त्वे तद्रूपसिद्धे र्निर्बाधकत्वात्। न चात्र शपः प्राप्तिः श्तिपः कर्तृवाचित्वाभावात्। सुनोत्यादिष्वकर्तृवाचित्वेऽपि निर्देशात् श्नुप्रभृतीनां प्रवृत्तिः। ज्ञापकस्यासार्वत्रिकत्वाच्चात्र तत्सम्भवस्तस्मादत्रत्यं भाष्यं विनायकमिति न्यायविषयो नेति दिक्।"

इति पटवर्धनमहोदयस्य वचनमाग्रहमूलकमिव प्रतिभाति। श्तिपा निर्देशे श्तिपः शित्त्वात् सार्वधातुकत्वाच्छबादिविकरणादीनां प्रवृत्तिः स्यादेवेति टीकाकृतः प्रयोगा अप्यत्रानुकूलाः। कथं वात्रैव ज्ञापकस्यासार्वत्रिकत्वमवलम्ब्येत भाष्यकृता ?

किञ्च भाष्यमिदं विनायकमिति न्यायस्य विषय इति क्वाप्यस्माभिर्नोक्तम्। अधुनातनपुस्तकेषु दृश्यमानं जामातृसंशोधनमेव न्यायस्य विषय इत्यस्माकं सावधारणमभिमतम्। अत एव महता प्रयत्नेन स्वारसिकः पाठोऽस्माभिरन्विष्टः। बहुष्वेव स्थलेषु सायणभाष्यस्य विकृताः पाठाः Max Müller मुद्रिते पुस्तके दृश्यन्ते, ते च पाठा निर्विचारमेव पुण्यपत्तनस्थेन वैदिकसंशोधनमण्डलेन कलिकाताविश्वविद्यालयेन श्रीकुञ्जनराजप्रभृतिभिश्च स्वीकृता इति परं विषादस्थानमस्माकम्। इक्श्तिपौ धातुनिर्देशे इति वार्त्तिकमधिकृत्य विचारो वारान्तरे विधास्यते। ( क्रमशः )

---

# अहो प्रभावः सादृश्यस्य !

"रविवासरीय आनन्दबाजारपत्रिका"याम् ( ८इ फाल्गुन, १३६६ ) तृतीये सम्पादकप्रबन्धे दृष्टम्—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूयो एवाभिवर्धते॥

इति। भूयः वर्धते = भूयो वर्धते। भूयः अभिवर्धते = भूयोऽभिवर्धते। परं भूयः एवाभिवर्धते = भूय एवाभिवर्धते।

# महायोगी श्रीसोहिरोबानाथः

[ श्रीगजानन-लक्ष्मण रेगे, बि-ए ]

नाथस्य चतुर्थी कृतिः पूर्णाक्षरी नाम। इयं च ५०० ओवीवृत्तात्मिका ख्रिस्ताब्दे १७५१तमे प्रणीतेति तज्ज्ञानां मतम्। अत्र सिद्धानां लक्षणानि विस्तरेण वर्णितानि सन्ति। अद्वयानन्दो नाम पञ्चमी कृतिर्दशप्रकरणात्मिका सहस्रसंख्यापरिमिता च १७५३ तमेऽब्दे लिखितेत्यनुमीयते। ज्ञानभक्तिवैराग्यपराणां विविधवृत्तोपनिबद्धानां सङ्कीर्णपद्यानां संख्या पञ्चसहस्राधिका वर्तते। तेषां भूयांसि गानक्षमाणि तालबद्धानि रागाभिनिविष्टानि च। सार्वजनीनभजनपूजनकीर्तनपुराणवाचनादिप्रसङ्गेषु देवालयेषु च गानप्रियैः रसिकैः कीर्तनकारैश्च तानि पद्यानि सोल्लासं गीतानि श्रूयन्ते।

एवं भगवन्नामस्मरणगुणानुवादसंकीर्तनेषु वेदान्तग्रन्थपारायणकर्मस्वध्यात्मग्रन्थ-लेखनव्यापारेषु च व्यापृतस्य सोहिरोबानाथस्य समतीतानि बहूनि वर्षाणि। वयसः षष्ठितमे वर्षे नाथः पुत्रद्वयसमेतः काशीप्रयागादिपुण्यक्षेत्राणि दिदृक्षुरुत्तरभारतं प्रतस्थे। प्रस्थानसमये नाथस्य स्नुषैका शिशुद्वितीया गृह आसीत्। शिशुरपि तदात्वे ज्वराक्रान्तः कथं मामेकाकिनीमभागां गतधवामसहायामत्र विहाय दूरदेशं प्रस्थातुमर्हन्ति भवन्तः। पश्यन्त्वस्य बालस्य दशाम्। भवतां पश्चात् को नौ रक्षिष्यतीतिवादिनीं विलपन्तीं स्नुषां दृष्ट्वा सोहिरोबानाथो व्यथितान्तःकरणोऽभवत्, भगवन्तं च साहाय्यार्थं ययाचे। भोः कृपानिधे न किमपि मयाऽद्ययावत् भवत्सविधे याचितम्। अनामयं कुरु बालक-मेनम्। निक्षिप कृपादृष्टिम्। एवमुक्त्वा बालकस्याङ्गमस्पृशत्। स्पृशत्येव तस्मिन् बालको निरामयो भूत्वेतस्ततश्चलितुमारेभे। अनाकलनीयानि खलु साधूनां चरितानि। तदनन्तरं स्नुषां समाश्वास्योपदिश्य च सोहिरोबानाथः पुत्रद्वयसमेतोऽपरेद्युस्तीर्थाटनायोत्तरां दिशं प्रतस्थे। नैकविधानि पुण्यक्षेत्राणि दृष्ट्वा चतुष्पञ्चैः संवत्सरैस्तदानीं सर्वविश्रुतां ग्वाल्हेरनगरीं प्राप्तः। ग्वाल्हेरसंस्थानस्य शासिता तदानीं श्रीमान्महादजी शिन्देनामको विख्यातः प्रतापशाली पुरुष आसीत्। श्रीजिवाजी-बल्लालबक्षीनामा गोमान्तकनिवासी तस्य सेनानायकः। सेनापतिना साधुवर्यस्य सोहिरानाथस्य ग्वाल्हेरनगर आगमनं श्रुत्वा सत्कारपूर्वकमसौ स्वगृह आहूतः। संस्थानाधिप आतिथ्यशीलः काव्यस्य भोक्ता निर्माता च। नाथस्य काव्यप्रभुत्वं वैराग्यशीलत्वं चाचिरेणैव कालेन राज्ञः कर्ण-पथमगच्छताम्। बहुमानपूर्वकं नृपेण नाथो राजसभायामाहूतः। तस्य पुरतः स्वकाव्यकृतिं निधाय "अप्येषा भवतः सम्मता काव्यगुणसम्पन्ना चे"ति राजा सप्रश्रयं पप्रच्छ। साधुः प्रत्युवाच, "साधुः स्यादेषा कृतिः किन्तु निष्फल एष उद्यमः। भगवद्गुणसङ्कीर्तनाभावे ज्ञानभक्तिवैराग्यहीना सुवर्णालङ्कारविभूषिता सौभाग्यविहीना कामिनीव मे प्रतिभातीयं

श्तिपा निर्देशे दहतेरिति स्यात्। सायणाचार्येण प्रायेण सर्वत्रैव स्वभाष्येऽनयैव रीत्या धातुनिर्देशः कृतः। भाष्यकारेणापि पचेब्रूहि पचतेब्रूहीत्युदाहरणमुपन्यस्यतैतदेव स्फुटीकृतम्। अत एव—

"श्तिपि प्रत्यये शित्त्वात् सार्वधातुकत्वादिडभावे हो ढ इति ढत्वे घत्वे जश्त्वे तद्रूपसिद्धेर्निर्बाधकत्वात्। न चात्र शपः प्राप्तिः श्तिपः कर्तृवाचित्वाभावात्। सुनोत्यादिष्वकर्तृवाचित्वेऽपि निर्देशात् श्नुप्रभृतीनां प्रवृत्तिः। ज्ञापकस्यासार्वत्रिकत्वान्नात्र तत्सम्भवस्तस्मादत्रत्यं भाष्यं विनायकमिति न्यायविषयो नेति दिक्।"

इति पटवर्धनमहोदयस्य वचनमाग्रहमूलकमिव प्रतिभाति। श्तिपा निर्देशे श्तिपः शित्त्वात् सार्वधातुकत्वाच्छबादिविकरणादीनां प्रवृत्तिः स्यादेवेति टीकाकृतः प्रयोगा अप्यत्रानुकूलाः। कथं वात्रैव ज्ञापकस्यासार्वत्रिकत्वमवलम्ब्येत भाष्यकृता ?

किञ्च भाष्यमिदं विनायकमिति न्यायस्य विषय इति काप्यस्माभिर्नोक्तम्। अधुनातनपुस्तकेषु दृश्यमानं जामातृसंशोधनमेव न्यायस्य विषय इत्यस्माकं सावधारणमभिमतम्। अत एव महता प्रयत्नेन स्वारसिकः पाठोऽस्माभिरन्विष्टः। बहुष्वेव स्थलेषु सायणभाष्यस्य विकृताः पाठाः Max Müller मुद्रिते पुस्तके दृश्यन्ते, ते च पाठा निर्विचारमेव पुण्यपत्तनस्थेन वैदिकसंशोधनमण्डलेन कलिकाताविश्वविद्यालयेन श्रीकुञ्जनराजप्रभृतिभिश्च स्वीकृता इति परं विषादस्थानमस्माकम्। इक्श्तिपौ धातुनिर्देशे इति वार्त्तिकमधिकृत्य विचारो वारान्तरे विधास्यते। ( क्रमशः )

---

## अहो प्रभावः सादृश्यस्य !

"रविवासरीय आनन्दबाजारपत्रिका"याम् ( ८इ फाल्गुन, १३६६ ) तृतीये सम्पादकप्रबन्धे दृष्टम्—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूयो एवाभिवर्धते॥

इति। भूयः वर्धते = भूयो वर्धते। भूयः अभिवर्धते = भूयोऽभिवर्धते। परं भूयः एवाभिवर्धते = भूय एवाभिवर्धते।

# महायोगी श्रीसोहिरोबानाथः

[ श्रीगजानन-लक्ष्मण रेगे, बि·ए ]

नाथस्य चतुर्थी कृतिः पूर्णाक्षरी नाम। इयं च ५०० ओवीवृत्तात्मिका ख्रिस्ताब्दे १७५१तमे प्रणीतेति तज्ज्ञानां मतम्। अत्र सिद्धानां लक्षणानि विस्तरेण वर्णितानि सन्ति। अद्वयानन्दो नाम पञ्चमी कृतिर्दशप्रकरणात्मिका सहस्रसंख्यापरिमिता च १७५३ तमेऽब्दे लिखितेत्यनुमीयते। ज्ञानभक्तिवैराग्यपराणां विविधवृत्तोपनिबद्धानां सङ्कीर्णपद्यानां संख्या पञ्चसहस्राधिका वर्तते। तेषां भूयांसि गानक्षमाणि तालबद्धानि रागाभिनिविष्टानि च। सार्वजनीनभजनपूजनकीर्तनपुराणवाचनादिप्रसङ्गेषु देवालयेषु च गानप्रियै रसिकैः कीर्तनकारैश्च तानि पद्यानि सोल्लासं गीतानि श्रूयन्ते।

एवं भगवन्नामस्मरणगुणानुवादसंकीर्तनेषु वेदान्तग्रन्थपारायणकर्मस्वध्यात्मग्रन्थ-लेखनव्यापारेषु च व्यापृतस्य सोहिरोबानाथस्य समतीतानि बहूनि वर्षाणि। वयसः षष्टितमे वर्षे नाथः पुत्रद्वयसमेतः काशीप्रयागादिपुण्यक्षेत्राणि दिदृक्षुरुत्तरभारतं प्रतस्थे। प्रस्थानसमये नाथस्य स्नुषैका शिशुर्द्वितीया गृह आसीत्। शिशुरपि तदात्वे ज्वराक्रान्तः कथं मामेकाकिनीमभागां गतधवामसहायामत्र विहाय दूरदेशं प्रस्थातुमर्हन्ति भवन्तः। पश्यन्त्वस्य बालस्य दशाम्। भवतां पश्चात् को नौ रक्षिष्यतीतिवादिनीं विलपन्तीं स्नुषां दृष्ट्वा सोहिरोबानाथो व्यथितान्तःकरणोऽभवत्, भगवन्तं च साहाय्यार्थं ययाचे। भोः कृपानिधे न किमपि मयाऽद्ययावत् भवत्सविधे याचितम्। अनामयं कुरु बालक-मेनम्। निक्षिप कृपादृष्टिम्। एवमुक्त्वा बालकस्याङ्गमस्पृशत्। स्पृशत्येव तस्मिन् बालको निरामयो भूत्वेतस्ततश्चलितुमारेभे। अनाकलनीयानि खलु साधूनां चरितानि। तदनन्तरं स्नुषां समाश्वास्योपदिश्य च सोहिरोबानाथः पुत्रद्वयसमेतोऽपरेद्युस्तीर्थाटनायोत्तरां दिशं प्रतस्थे। नैकविधानि पुण्यक्षेत्राणि दृष्ट्वा चतुष्पञ्चैः संवत्सरैस्तदानीं सर्वविश्रुतां ग्वाल्हेरनगरीं प्राप्तः। ग्वाल्हेरसंस्थानस्य शासिता तदानीं श्रीमान्महादजी शिन्देनामको विख्यातः प्रतापशाली पुरुष आसीत्। श्रीजिवाजी-बल्लालबक्षीनामा गोमान्तकनिवासी तस्य सेनानायकः। सेनापतिना साधुवर्यस्य सोहिरानाथस्य ग्वाल्हेरनगर आगमनं श्रुत्वा सत्कारपूर्वकमसौ स्वगृह आहूतः। संस्थानाधिप आतिथ्यशीलः काव्यस्य भोक्ता निर्माता च। नाथस्य काव्यप्रभुत्वं वैराग्यशीलत्वं चाचिरेणैव कालेन राज्ञः कर्ण-पथमगच्छताम्। बहुमानपूर्वकं नृपेण नाथो राजसभायामाहूतः। तस्य पुरतः स्वकाव्यकृतिं निधाय "अप्येषा भवतः सम्मता काव्यगुणसम्पन्ना चे"ति राजा सप्रश्रयं पप्रच्छ। साधुः प्रत्युवाच, "साधुः स्यादेषा कृतिः किन्तु निष्फल एष उद्यमः। भगवद्गुणसङ्कीर्तनाभावे ज्ञानभक्तिवैराग्यहीना सुवर्णालङ्कारविभूषिता सौभाग्यविहीना कामिनीव मे प्रतिभातीयं

श्तिपा निर्देशे दहतेरिति स्यात्। सायणाचार्येण प्रायेण सर्वत्रैव स्वभाष्येऽनयैव रीत्या धातुनिर्देशः कृतः। भाष्यकारेणापि पचेब्रूहि पचतेब्रूहीत्युदाहरणमुपन्यस्यतैतदेव स्फुटीकृतम्। अत एव—

"श्तिपि प्रत्यये शित्त्वात् सार्वधातुकत्वादिडभावे हो ढ इति ढत्वे घत्वे जश्त्वे तद्रूपसिद्धेर्निर्बाधकत्वात्। न चात्र शपः प्राप्तिः श्तिपः कर्तृवाचित्वाभावात्। सुनोत्यादिष्वकर्तृवाचित्वेऽपि निर्देशात् श्नुप्रभृतीनां प्रवृत्तिः। ज्ञापकस्यासार्वत्रिकत्वान्नात्र तत्सम्भवस्तस्मादत्रत्यं भाष्यं विनायकमिति न्यायविषयो नेति दिक्।"

इति पटवर्धनमहोदयस्य वचनमाग्रहमूलकमिव प्रतिभाति। श्तिपा निर्देशे श्तिपः शित्त्वात् सार्वधातुकत्वाच्छबादिविकरणादीनां प्रवृत्तिः स्यादेवेति टीकाकृतः प्रयोगा अप्यत्रानुकूलाः। कथं वात्रैव ज्ञापकस्यासार्वत्रिकत्वमवलम्ब्येत भाष्यकृता ?

किञ्च भाष्यमिदं विनायकमिति न्यायस्य विषय इति काप्यस्माभिर्नोक्तम्। अधुनातनपुस्तकेषु दृश्यमानं जामातृसंशोधनमेव न्यायस्य विषय इत्यस्माकं सावधारणमभिमतम्। अत एव महता प्रयत्नेन स्वारसिकः पाठोऽस्माभिरन्विष्टः। बहुष्वेव स्थलेषु सायणभाष्यस्य विकृताः पाठाः Max Müller मुद्रिते पुस्तके दृश्यन्ते, ते च पाठा निर्विचारमेव पुण्यपत्तनस्थेन वैदिकसंशोधनमण्डलेन कलिकाताविश्वविद्यालयेन श्रीकुञ्जनराजप्रभृतिभिश्च स्वीकृता इति परं विषादस्थानमस्माकम्। इक्श्तिपौ धातुनिर्देशे इति वार्त्तिकमधिकृत्य विचारो वारान्तरे विधास्यते। ( क्रमशः )

---

## अहो प्रभावः सादृश्यस्य !

"रविवासरीय आनन्दबाजारपत्रिका"याम् ( ८इ फाल्गुन, १३६६ ) तृतीये सम्पादकप्रबन्धे दृष्टम्—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूयो एवाभिवर्धते॥

इति। भूयः वर्धते = भूयो वर्धते। भूयः अभिवर्धते = भूयोऽभिवर्धते। परं भूयः एवाभिवर्धते = भूय एवाभिवर्धते।

# महायोगी श्रीसोहिरोबानाथः

[ श्रीगजानन-लक्ष्मण रेगे, बि·ए ]

नाथस्य चतुर्थी कृतिः पूर्णाक्षरी नाम। इयं च ५०० ओवीवृत्तात्मिका ख्रिस्ताब्दे १७५१तमे प्रणीतेति तज्ज्ञानां मतम्। अत्र सिद्धानां लक्षणानि विस्तरेण वर्णितानि सन्ति। अद्वयानन्दो नाम पञ्चमी कृतिर्दशप्रकरणात्मिका सहस्रसंख्यापरिमिता च १७५३ तमेऽब्दे लिखितेत्यनुमीयते। ज्ञानभक्तिवैराग्यपराणां विविधवृत्तोपनिबद्धानां सङ्कीर्णपद्यानां संख्या पञ्चसहस्राधिका वर्तते। तेषां भूयांसि गानक्षमाणि तालबद्धानि रागाभिनिविष्टानि च। सार्वजनीनभजनपूजनकीर्तनपुराणवाचनादिप्रसङ्गेषु देवालयेषु च गानप्रियै रसिकैः कीर्तनकारैश्च तानि पद्यानि सोल्लासं गीतानि श्रूयन्ते।

एवं भगवन्नामस्मरणगुणानुवादसंकीर्तनेषु वेदान्तग्रन्थपारायणकर्मस्वध्यात्मग्रन्थ-लेखनव्यापारेषु च व्यापृतस्य सोहिरोबानाथस्य समतीतानि बहूनि वर्षाणि। वयसः षष्ठितमे वर्षे नाथः पुत्रद्वयसमेतः काशीप्रयागादिपुण्यक्षेत्राणि दिदृक्षुरुत्तरभारतं प्रतस्थे। प्रस्थानसमये नाथस्य स्नुषैका शिशुर्द्वितीया गृह आसीत्। शिशुरपि तदात्वे ज्वराक्रान्तः कथं मामेकाकिनीमभागां गतधवामसहायामत्र विहाय दूरदेशं प्रस्थातुमर्हन्ति भवन्तः। पश्यन्त्वस्य बालस्य दशाम्। भवतां पश्चात् को नौ रक्षिष्यतीतिवादिनीं विलपन्तीं स्नुषां दृष्ट्वा सोहिरोबानाथो व्यथितान्तःकरणोऽभवत्, भगवन्तं च साहाय्यार्थं ययाचे। भोः कृपानिधे न किमपि मयाऽद्ययावत् भवत्सविधे याचितम्। अनामयं कुरु बालक-मेनम्। निक्षिप कृपादृष्टिम्। एवमुक्त्वा बालकस्याङ्गमस्पृशत्। स्पृशत्येव तस्मिन् बालको निरामयो भूत्वेतस्ततश्चलितुमारेभे। अनाकलनीयानि खलु साधूनां चरितानि। तदनन्तरं स्नुषां समाश्वास्योपदिश्य च सोहिरोबानाथः पुत्रद्वयसमेतोऽपरेद्युस्तीर्थाटनायोत्तरां दिशं प्रतस्थे। नैकविधानि पुण्यक्षेत्राणि दृष्ट्वा चतुष्पञ्चैः संवत्सरैस्तदानीं सर्वविश्रुतां ग्वाल्हेरनगरीं प्राप्तः। ग्वाल्हेरसंस्थानस्य शासिता तदानीं श्रीमान्महादजी शिन्देनामको विख्यातः प्रतापशाली पुरुष आसीत्। श्रीजिवाजी-बल्लालबक्षीनामा गोमान्तकनिवासी तस्य सेनानायकः। सेनापतिना साधुवर्यस्य सोहिरानाथस्य ग्वाल्हेरनगर आगमनं श्रुत्वा सत्कारपूर्वकमसौ स्वगृह आहूतः। संस्थानाधिप आतिथ्यशीलः काव्यस्य भोक्ता निर्माता च। नाथस्य काव्यप्रभुत्वं वैराग्यशीलत्वं चाचिरेणैव कालेन राज्ञः कर्ण-पथमगच्छताम्। बहुमानपूर्वकं नृपेण नाथो राजसभायामाहूतः। तस्य पुरतः स्वकाव्यकृतिं निधाय "अप्येषा भवतः सम्मता काव्यगुणसम्पन्ना चे"ति राजा सप्रश्रयं पप्रच्छ। साधुः प्रत्युवाच, "साधुः स्यादेषा कृतिः किन्तु निष्फल एष उद्यमः। भगवद्गुणसङ्कीर्तनाभावे ज्ञानभक्तिवैराग्यहीना सुवर्णालङ्कारविभूषिता सौभाग्यविहीना कामिनीव मे प्रतिभातीयं

कविता।" इति। अनेन वचसा नृपः क्रोधाध्मातोऽभूत्। सभा च निस्तब्धा संवृत्ता। राजानं रक्ताक्षं दृष्ट्वा नाथो झटिति स्वासनादुत्थाय प्रतिवचनरूपेण पद्यत्रयं सद्य एव निर्माय तारस्वरेणापठत् सभास्थानाच्च बहिर्जगाम। प्रसिद्धान्येतानि पद्यानि मराठीहिन्दीविदां कृतेऽधस्तादुद्ध्रियन्ते। ( क्रमशः )

---

## कुम्भकर्णे भकारोऽस्ति

"रविवासरीय आनन्दबाजार" पत्रिकायां ( कलिकाता १७इ माघ १३६६ ) प्रथम एव पृष्ठेऽतिकायैरक्षरैर्मुद्रितं निस्क्रिय करार चेष्टा इति।

निस्तेजसि सकारोऽस्ति तथा पुरस्क्रियापदे।
निष्क्रिये स कथं न स्याद्विद्वज्जनानुकम्पया॥

तस्यामेव पत्रिकायां ७-पृष्ठे सप्तमस्तम्भे दृष्टम्—"क्षुण्णिवृत्ति" इति।

क्षुण्णशब्दे मूर्धन्यणकारद्वयं वर्तते, अत एव क्षण्णिवृत्तिशब्देऽपि मूर्धन्यणकारद्वयेन विराजितव्यम्।

Statesman पत्रे (Calcutta, Monday, February 1, 1960) दृष्टम्—The death occurred at his Calcutta residence of the well-known Bengali *literateur* इत्यादि। literature शब्दे द्वौ tकारौ वर्तेते, अत एव literateur शब्देऽपि द्वाभ्यां tकाराभ्यां स्थातव्यम्। अभिधानकोषेषु पुनस्त्रितकारको litterateur शब्दः सन्दृश्यते।

---

## छात्रहितैषिणी

### चत्वारि शृङ्गा⋯आ विवेश

[ श्रीवेङ्कटाचार्यः ]

चत्वारि शृङ्गा त्रयोऽस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश॥

शृङ्गा इत्ययं मन्त्रो वैदिकप्रहेलिकारूपो भाति (Vedic riddle)। अस्मिंश्च, शब्दे वृषभत्वरूपणं क्रियते। लोकप्रसिद्धस्य वृषभस्य द्वे शृङ्गे, चत्वारः पादाः, एकं शीर्षं, नैकोऽपि हस्तः, स च वृषभः कण्ठे परं बद्धः, कदाचिदेव शब्दं करोति, न तु क्रियासमभिहारेण इति वस्तुस्थितिः। "यान्येतानि गोयुक्तकानि संघुष्टकानि

भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति।" ( महाभाष्य १।१।५० ) अयं शब्दरूपस्तु वृषभस्तस्माल्लोकप्रसिद्धादतिरिक्तः। अस्य हि शब्दरूपस्य वृषभस्य चत्वारि शृङ्गाणि, त्रयः पादाः, द्वे शीर्षे, सप्त हस्ताः, त्रिधा चायं बद्धः, नापि तद्दयं कदाचिदेव रौति, किंतु क्रियासमभिहारेण। तदिदं रोरवीतीत्युच्यते यङ्लुगन्तेन। तदत्र शब्दविषये शृङ्गादयः शब्दा न मुख्यार्थबोधकाः, किंतु लाक्षणिकार्थपराः। नामाख्यातनिपातोपसर्गरूपेण चतुर्विधानि पदजातानि चत्वारि शृङ्गाणि इत्यनेन विवक्षितानि। यावन्तः शब्दाः संस्कृते सन्ति तावन्तः सर्वेऽप्येतच्चतुर्विधशब्दान्तर्गता एव, न कश्चिदपि तद्बहिर्भूतोऽस्ति। त्रयः पादा इत्यनेन भूतभविष्यद्वर्तमानरूपास्त्रयः कालाः; द्वे शीर्षे इति च द्वौ शब्दात्मानौ नित्यः कार्यश्चेति—नित्यो व्यङ्ग्यः स्फोटपदाभिधेयः, कार्यस्तु व्यञ्जको ध्वनिव्यपदेशभाक्। सप्त विभक्तयो नाम सप्त हस्ता उच्यन्ते। शिक्षोक्तरीत्या उरसि, मूर्धनि, कण्ठादिस्थाने चायं बद्धः। वर्षणक्रियामाश्रित्य शब्दो वृषभ इत्युच्यते। वर्षणमत्र ईप्सितार्थसम्पादनं मन्तव्यम्। शब्दरूपभाषावशात् किल मनुष्यो व्यवहर्तुं समर्थो जातः। नक्तन्दिवं तादृशशब्दप्रयोगद्वारा हृद्गतमभिप्रायमाविष्करोति। इत्थं स्वापेक्षितमंशं सम्पादयति। भाषणसमर्थो मनुष्यः भाषितुमशक्ताः पशव इति द्वयोर्भेदः शब्दव्यवहारनिबन्धनः। ईदृशं स्वाभीप्सितसम्पादनं वर्षणमभिलक्ष्य शब्दो वृषभ इत्यभिधीयते। अस्य च शब्दस्य प्रातरारभ्य नक्तं स्वापपर्यन्तं बहुभिः पुरुषैर्बहुषु स्थलेषु बहुधा च प्रयोगोऽपलपितुमशक्यः, तत एव रोरवीतीति निर्दिश्यते। पशुष्वविद्यमानं शब्दरूपभाषाप्रयोगसामर्थ्यं मनुष्येष्वेवोपलभ्यते। तदिदं मनुष्याणां दैवानुग्रहनिबन्धनमित्यभिप्रायेण महान् देवः शब्दरूपेण मनुष्यानाविवेशेति ऋङ्मन्त्रेण प्रतिपाद्यते। एतादृशस्य दैवानुग्रहलब्धस्य साधुशब्दस्य समीचीनरीत्या ( असाधु-शब्दपरिहारपुरस्सरं ) यदि प्रयोगः क्रियते तर्हि शब्दद्वारा महता देवेन सायुज्यमधिगतं स्यात्, देवस्यैव साधुशब्दरूपेण प्रवृत्तेः। एवंविधसायुज्यसाधनभूतस्य साधुशब्दस्य परिज्ञानं व्याकरणायत्तम्। तस्मात् साधुशब्दपरिज्ञानार्थं व्याकरणमध्येयम् इत्यनर्घमुपदेशरत्नं चत्वारि शृङ्गेति ऋङ्मन्त्रप्रतिपाद्यं तत्रभवान् पतञ्जलिर्दर्शयामास। अन्यथाप्येतदर्थवर्णनमितरैः कृतमित्यन्यदेतत्। विस्तरस्तु मञ्जूषाकार्यालये लब्धव्ये Mahābhāṣya—Paspaśāhnika ग्रन्थे द्रष्टव्यः।

---

कवीन्द्र-रवीन्द्रनाथस्य

# कचं प्रति देवयानी-शापः

*[ विदाय-अभिशाप ]*

[ श्रीफटिकलाल-दासकृततात्पर्यानुवादः ]

देवयानी

तलं तदेतद् वटपादपस्य
गोचारणार्थं प्रतिवासरं त्वं
मध्याह्नकाले समुपेत्य यत्र
सुप्तः स्थिताऽभूः खरतापखिन्नः
स एव वृक्षोऽतिथिवत्सलत्वात्
त्वत्क्लान्तदेहोपरि शीतदीर्घां
छायां समायच्छत नित्यमेव ;
वातैश्च धूत्वा मृदुपल्लवानां
तवानयन्नेत्रसुखप्रसुप्तिम् ।
प्रयाहि बन्धो यदि गम्यमेव,
तथापि ते संस्तुतवृक्षपादं
गत्वा क्षणं तत्र निषीद नाम ।
गृहाण सम्भाषणमन्तिमं च
तस्याकुलस्निग्धमनातपस्य ।
दण्डद्वयं चेदिह तिष्ठसि त्वं
स्वर्गस्य तेनाल्पविलम्बनेन
कापि क्षतिर्नो भवितेति मन्ये ।

कचः

प्रयाणकाले बत बन्धुसङ्घा
विभाति सर्वैश्चिरसंस्तुतोऽपि
चित्रं ! ममायं नवयाद्य मूर्त्या !

पलायकं बन्धुजनं निबद्धु-
मुत्कण्ठताः स्नेहभरेण सर्वं
तन्वन्ति मन्ये नवपाशजालं,
विस्तारयन्तः सुषमामपूर्वां
कुर्वन्ति संवेदनमन्तिमं च ।
सदाश्रितानामयि नित्यबन्धो
वनस्पते ! त्वच्चरणे नतोऽस्मि ।
पान्थाः कियन्तस्तव सेवमाना-
श्छायां सुशीतां विगतक्लमाः स्युः
छात्राः कियन्तो जनशब्दशून्ये
प्रच्छायदेशेऽत्र तृणासनस्थाः
पतङ्गमानां कलकूजितेन
पाठं पठिष्यन्ति पुरा यथाहम् ।
प्रभातकाले विहिताभिषेकाः
सुता ऋषीणां निजवल्कमार्द्रं
शुष्कं करिष्यन्ति लतासु ते च ।
मध्याह्नतापे पशुपालबाला
नेष्यन्ति खेलाकुतुकैश्च कालम् ।
पुराणबन्धुर्यदहं त्वदीय
आशंसते तद् हृदयं मदीयं
स्मृतौ तवैभिः सहितो विराजे ।

देवयानी

रक्ष स्मृतौ नः प्रियहोमधेनुम् ।
निपीय नाकस्य सुधां कदापि
न विस्मरेमामपि दूरसंस्थः ।

कचः

सुधाधिकं मत्सविधे पयोऽस्याः,
पापक्षयश्चापि तदीक्षणात् स्यात् ।
सुधावदाता च पयस्विनीयं
सन्मातृरूपा निलयश्च शान्त्याः ।
विस्मृत्य तृष्णां क्षुधमङ्गखेदं
सेवामकार्षं सततं हि तस्याः ।
दिनं च दीर्घं सहितस्तयाहं
पर्यभ्रमं सान्द्रवनान्तराले
सुश्यामशष्पास्तृतसिन्धुकच्छे
यथाभिलाषं परिपूर्णतृप्त्या
सुनिम्नवेलोपरि कोमलान् सा
पर्याप्तमास्वाद्य तृणप्ररोहान्
देहं स्वकं मन्थरमावहन्ती
तरोस्तलं प्राप्य तृणासनस्था
रोमन्थमावर्तयदाप्रदोषम् ।
स्निग्धप्रशान्तायतनेत्रयुग्म-
कृतज्ञदृष्टिप्रतिचालनेन
विलोचनाभ्यामसकृच्छरीरं
लेढि स्म सा मे सुतवत्सलेव ।
तामेव दृष्टिं न हि विस्मरामि
तनूं च शुभ्रां मसृणां सुपुष्टाम् ।

देवयानी

कलस्वना वेणुमती नदी नः
स्थास्यत्यवश्यं सततं स्मृतौ ते ।

# राष्ट्रियो वा राष्ट्रीयो वा

वङ्गभाषायां राजकीयशब्दसादृश्येन दीर्घेकारोपेतो राष्ट्रीयशब्दः प्रयुज्यते। यद्यपि वैदिकसंस्कृते शतपथब्राह्मणादिषु राष्ट्रीयशब्द उपलभ्यते तथापि लोके तस्य साधुत्वं नातिष्ठन्ते वैयाकरणाः। तथाच पाणिनीयं सूत्रम्—राष्ट्रावारपाराद् घखौ [ ४।२।९३ ] इति। हेमचन्द्रेण राष्ट्रादियः [ ६।३।३ ] इति सूत्रस्य बृहद्वृत्तावुक्तम्—राष्ट्रक्रीतः कुशलो जातो भवो वा राष्ट्रियः। शेष इत्येव। राष्ट्रस्यापत्यं राष्ट्रिः। इति। राष्ट्रादिय इति सुपद्मसूत्रस्य [ ५।३।३ ] मकरन्द उक्तम्—राष्ट्राच्छेष इयः स्यात्। राष्ट्रे भवः कृतः लब्धः क्रीतः कुशलः सम्भू [ म्भृ ]तः प्रायभवः राष्ट्रादागतो वा राष्ट्रं गच्छति पन्था दूतो वा राष्ट्रमभिमुखेन निष्क्रामति द्वारं वा राष्ट्रो निवासोऽभिजनः सेव्यो वा राष्ट्रस्येदं वा राष्ट्रियम्। इति।

---

# यङर्थविमर्शः

[ श्रीक्षितीशचन्द्र चट्टोपाध्यायः ]

प्रयोगरत्नमाला। लुपादेर्भावगर्हायाम्। १४।६३४

वृत्तिः। लुप् सद् चर् जप् जभ् दन्श् अशुभ्यो यङ् स्यात्। गर्हितं लुम्पति लोलुप्यते।...

प्रभाप्रकाशिका। लुपादेर्धातो र्भावस्य धात्वर्थस्य गर्हायां गम्यमानायां यङ्। भावग्रहणमपि क्रियासमभिहारो भवति।

प्र० र०। कौटिल्ये गमनार्थकात्॥१४।६३५।

वृत्तिः। यङ् स्यात्। भृशं कुटिलं क्रामति चङ्क्रम्यते जङ्गम्यते सरीसृप्यते।

प्र० प्र०। कौटिल्ये गम्यमाने गमनार्थकाद् यङ् सामान्यक्रियासमभिहारस्यापरित्यागात्।...

गूढप्रकाशिका। कौटिल्ये क्रियासमभिहारे गमनार्थकाद् यङ् स्यादित्यर्थः। भृशमिति। सामान्यस्य क्रियासमभिहारस्यापरित्यागादिति भावः।

हरिनामामृतम्। गत्यर्थाद्यङ् कौटिल्य एव।२।८३५

वृत्तिः। कुटिलमटति अटाट्यते। नेह भृशमटति प्राटति वा।

टीका। गत्यर्थाद् धातोरुत्तरे कौटिल्य एव गम्यमाने यङ् भवतु, न तु पौनःपुन्यातिशययोः। कुटिलमिति क्रियाविशेषणम्।

इ०। लुपसदचरजपजभदहदशगभ्यो भावगर्हायामेव यङ्।२।८३८

वृत्तिः। गर्हितं लुम्पति लोलुप्यते। इह प्रोर्णोनूयते सञ्चेस्क्रीयते निजेगिल्यते उपपनीपद्यते इत्यादि तैरपि प्रयुज्यते। अतः सोपसर्गान्न स्यादित्यन्यैरुपेक्षितम्।

टीका।...एतेभ्य॰ उत्तरे भावगर्हायामेव गम्यमानायां यङ् भवति न तु पौनःपुन्यातिशययोः। इहेति यङ्प्रकरणे। तैरपि पूर्वाचार्यैरपीत्यर्थः। अत इति। अतः सोपसर्गाद् धातोरुत्तरे यङ् न भवतीत्यत्र तद्वाक्यमन्यैराचार्यैरुपेक्षितं त्यक्तम्।

[ हस्तलिखितपुस्तकात् ]

सारस्वतव्याकरणम्। गत्यर्थात् कौटिल्ये॥ आख्यात २।३

कुटिलं गच्छति जङ्गम्यते।

लुपादेर्भावगर्हायाम्॥आ० २।४

वृत्तिः। अत्यर्थं गर्हितं लुम्पति लोलुप्यते।

टीका। लुपादेरिति। प्रवृत्तिनिमित्तं भावः। तस्य गर्हाविवक्षायामिति। ( क्रमशः )

---

# रसगङ्गाधरे रसस्वरूपम्

[ श्रीसीतानाथ-गोस्वामी ]

नाट्यस्य दर्शनाच्छ्रवणात् पठनाद्वा सर्वेषां सहृदयानां रसोपलब्धिर्भवतीति निर्विवादम्। ननु कुत्र रसस्योपलब्धिः? रसोपलब्धिर्मनस्यन्तःकरणे वेति सर्वजनानां प्रतीतिः। मनसो बहवो धर्माः सन्ति। तेषु रत्यादयो नव भावा अलङ्कारशास्त्रेषु स्थायिभाव इति नाम्ना प्रसिद्धिं प्रापुः। ते च स्थायिभावा नवानां रसानामुद्बोधे नितरामावश्यकाः। स्थायिनि समुद्रेऽस्थायिनस्तरङ्गा यथा क्षणं समुल्लसन्तोऽपि पुनः समुद्रे विलीयन्ते तद्वच्छृङ्गारस्थले निर्वेदादयो व्यभिचारिणोऽस्थिरा भावा रतिरूपेण पर्यवस्यन्तीति रत्यादीनां स्थायिभावत्वम्। एकैकस्य रसस्यैकैकः स्थायिभाव आचार्यैः समुल्लिखितः। तथा ह्यादौ रसनवकमुल्लिख्यते—

शृङ्गारः करुणः शान्तो रौद्रो वीरोऽद्भुतस्तथा।
हास्यो भयानकश्चैव बीभत्सश्चेति ते नव॥

स्थायिभावाश्च— रतिः शोकश्च निर्वेदक्रोधोत्साहाश्च विस्मयः।
हासो भयं जुगुप्सा च स्थायिभावाः क्रमादमी॥

एतेषामन्तःकरणधर्माणामेव विभावादिकारणसहितानां रसत्वेन पर्यवसानं भवति। विभावादयः किंस्वरूपा इति चेदुच्यते।

विशेषेण रसं भावयन्त्युत्पादयन्तीति विभावाः। ते चालम्बनोद्दीपनभेदेन द्विविधाः। यमालम्ब्य विषयीकृत्य रसस्योदयस्तस्यालम्बनविभाव इति संज्ञा। यथा शृङ्गारस्य स्त्रीपुंसावालम्बने। येन च रसस्योद्दीपनं तस्योद्दीपनविभाव इति समाख्या। यथा शृङ्गारस्य चन्द्रिकावसन्तादयः।

अनु पश्चाद् भाव उत्पत्तिर्येषामित्यनुभावाः कटाक्षालिङ्गनादयः। कारणे रतौ सत्यामेव कटाक्षादीनामुत्पत्तिरिति कटाक्षोत्पत्तिं प्रति रतेः पूर्ववर्तित्वं कारणत्वं च, अनुभावानां पश्चाद्भावित्वं कार्यत्वञ्च भवति। अथवा अनुभावयन्तीत्यनुभावाः। नटो रतिमानिति न साक्षादनुभवगोचरः किन्तु नटः स्तम्भस्वेदादिमानिति तु साक्षादनुभवविषयः। अतोऽनुभावानामनुभवविषयीभूतत्वादनुभावकत्वमनुभावत्वं वा सम्यग् उपपद्यते। यद्यपि लौकिकदशायामनुभावा रत्यादेः स्थायिभावस्य बहिष्प्रकाशरूपा जनानां रत्याद्यनुमापने सहायाश्चेत्यनुभावानां कार्यरूपत्वमेवेति पण्डितराजैरपि कार्यरूपताऽङ्गीकृता तथापि सामाजिकानां रसास्वादं प्रति दुष्यन्तादीनां स्तम्भस्वेदादीनामनुभावानामपि कारणत्वं वक्तव्यम्। अत एवोक्तं विश्वनाथैः—

> कारणकार्यसञ्चारिरूपा अपि हि लोकतः।
> रसोद्बोधे विभावाद्याः कारणान्येव ते मताः॥ इति।

स्थायिभावे कदाचित् स्मृतिचिन्तादीनां भावानां सद्भावात्, सर्वदा विद्यमानताभावात् तेषां व्यभिचारित्वं भवतीति व्यभिचारिभावसंज्ञाया अन्वर्थत्वं जायते। रसपुष्टिं प्रति विशेषेण (वि) आभिमुख्येन (अभि) आनुकूल्येन प्रवर्तमानाः (चरन्तः) भावा व्यभिचारिभावा इत्यपि व्युत्पत्तिर्भवितुमर्हति। तथा च विश्वनाथकविराजैरुक्तम्—

> विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
> स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ॥ इति।

व्यभिचारिभावः सञ्चारिभावश्चेत्यनर्थान्तरम्। यथा सूचिभेद्ये गभीरे तिमिरे क्षणमुन्मग्नाया दीपशिखायाः पुन स्तत्क्षणादेव निमज्जने तमसः सर्वत्र सञ्चारणं भवति, गभीरतरत्वेन च तमस उपलम्भस्तथा करुणरसस्य स्थायिभावः शोकोऽधिकतया सञ्चारितो भवति यदि शोकार्तस्य हासः क्षणं समुल्लसेदनन्तरमेव च निमग्नो भवेत्। अत एवास्थायिनां व्यभिचारिभावानां सञ्चारिभाव इत्यभिधानं सार्थकमेव। एतेषामेव स्थायिभावसहकारित्वात् सहकारिकारणसंज्ञा जगन्नाथरायैरुरीकृता।

रमणीयार्थप्रतिपादकः शब्दः काव्यमिति जगन्नाथेन ग्रन्थप्रारम्भ उपपादितम्। एतादृशेन रसपोषणानुकूलेन काव्येन यदा शोभनपदविन्यासात् सहृदयहृदयेषु रसचर्वणाद्वारेण दुष्यन्तशकुन्तलादिव्यक्तिविशेषाणां विलयो भवति तदा एतेषामेव दुष्यन्त-

चन्द्रिकाश्रुपातचिन्तादीनामेव लौकिकत्वमपहायालौकिकत्वमेव सञ्जायते। एते चालौकिका भावा अलौकिकमेव व्यापारं जनयन्ति। सहृदयसामाजिकमनांसि तस्माद् विभावादि-कारणसमवायादानन्देनाप्लुतानि जायन्ते। तै र्योऽयमानन्दोऽनुभूयते नासाववच्छिन्नः, किन्त्वनवच्छिन्नानन्तानन्दस्वरूपमेव तैर्गोचरीक्रियते। सर्वथाऽलौकिकमिदं फलं यदवच्छिन्न-स्वरूपत्वेन चिन्तयन् प्रमाताऽत्मनो देशकालादिसर्वविधावच्छिन्नतां कियन्तंचन कालं नोपलभते, प्रत्युत स्वप्रकाशानन्दस्वरूपोऽहमिति वेत्ति। तस्मिन्नेव प्रमातरि रत्यादिः स्थायिभावः पूर्वत एव विनिविष्टः सन् रसत्वमुपैति। नन्ववच्छिन्नोऽपि प्रमाता केन व्यापारेणात्मनोऽनवच्छिन्नतारूपं फलं लब्धुं प्रभवतीति चेदुच्यते—स्वप्रकाशानन्द-स्वरूपस्यैवात्मनोऽज्ञानावरणवशादवच्छिन्नत्वेन भानं भवति। आवरकं चेत्तदज्ञानं विभावादि-चर्वणयाऽपसारितं तर्हि मेघापसरणेन स्वप्रकाशसूर्यप्रकाशवदात्मनः स्वरूपप्रकाशे न काचिद् बाधा समुल्लसेत्। अलौकिकविभावादिभिः कारणकूटैरात्मावरणभङ्गरूपो व्यापारः साध्यत इति रसगङ्गाधरे जगन्नाथाचार्यहृदयम्।

इदमेव रसलक्षणं मम्मटाचार्याणामप्यभिप्रेतमिति दर्शयितुं मम्मटप्रदर्शितलक्षणस्य स्वारस्यं निरूपयत्याचार्यो जगन्नाथः। "व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः" इति हि मम्मटाचार्यप्रदर्शितं रसलक्षणम्। व्यक्त इत्यस्य विवरणावसरे जग-न्नाथैरेवमभिहितम्—"व्यक्तो व्यक्तिविषयीकृतः। व्यक्तिश्च भग्नावरणा चित्।" एतेन विभावाद्यैर्व्यक्तः स्थायिभावो रस इति लक्षणस्यैवमर्थः सञ्जायते—विभावादिकृतावरण-भङ्गविशिष्टचिद्विषयः स्थायिभावो रसः। अत्र लक्षणे स्थायिभावस्य विशेष्यत्व चितश्च विशेषणत्वमिति लक्षणीयम्।

अत्रेयं शङ्का—ननु यथा केनचिदावरणेनावृतं वस्त्वावरणविनाशे सति प्रकाशितं भवति तथा चैतन्यस्याप्यावरणभङ्गे चैतन्यमात्रं प्रकाशेत, कथं स्थायिभावस्य रत्यादेर्वि-भावानुभावयोश्च प्रकाश इति। तत्र समाधानम्—यथा शरावादिनावृतो दीपः शरावाप-सारणे स्वयं प्रकाशते, स्वसन्निहितांश्च पदार्थान् प्रकाशयति तथा स्वप्रकाशानन्दस्वरूपस्य चैतन्यस्याप्यावरणेऽज्ञाने दूरीभूत आत्मचैतन्यं स्वयं प्रकाशते, स्वसन्निहितान् रत्यादीन् विभावादींश्च प्रकाशयति।

ननु तत्राप्यात्मचैतन्येन स्वसन्निहित आत्मस्थित आत्मधर्म एव प्रकाशितः स्यात्, कथमन्तःकरणधर्मस्य रत्यादेः प्रकाशो भवेद्, दूरमास्तां बाह्यानां विभावादीनां प्रकाशन-मिति। तत्रैवं सिद्धान्तिभिरुच्यते—सर्वेषामन्तःकरणधर्माणां सुखदुःखेच्छारत्यादीनां सत्त्वं न कदाप्यज्ञायमानं भवितुमर्हति। वर्तन्ते चेदेतेऽन्तःकरणधर्मास्तर्हि तेषां ज्ञान-मप्यवश्यमेव भवेदित्यत्र सर्वेषामनुभव एव प्रमाणम्। सुखमस्ति किन्तु न ज्ञायत इति

न कदापि भवितुमर्हति। एतेषां सदा प्रकाशमानत्वं यत् स्वभावत्वेन सर्वैरुररीकृतं तत् किन्निबन्धनमिति चेदुच्यते—नित्यस्वप्रकाशेन चैतन्यस्वरूपेण साक्षिणा साक्षिचैतन्येन वैते धर्मा भास्यन्ते इति साक्षिभास्यत्वादन्तःकरणधर्माणां सर्वथोपपन्नमेव साक्षिभास्यत्वमन्तःकरणस्यापि। यद्यन्तःकरणधर्माणां साक्षिभास्यत्वं न स्यादपि तु प्रमाणवेद्यत्वं भवेत्तर्हि प्रमाणप्रवृत्तेः पूर्वमुत्पत्तिकाले एते धर्मा अविज्ञाताः स्युरित्यनुभवविरोधादन्तःकरणधर्माणां प्रमाणवेद्यत्वमद्वैतवादिभिः परित्यक्तम्।

ननु पुना रत्यादीनामन्तःकरणधर्माणां साक्षिभास्यत्वादात्मचैतन्येन भाने स्वीकृतेऽपि कथं बाह्यानां विभावादीनां साक्षिभास्यत्वं स्यादिति चेदुच्यते—न ह्यस्ति कश्चन नियमो यदन्तःकरणधर्मस्यैव साक्षिभास्यत्वं भवेन्नान्यस्य कस्यचनेति। अनन्तःकरणधर्मत्वेऽपि साक्षिभास्यत्वं यथाऽद्वैतवादिभिः स्वप्नतुरगादीनां जाग्रद्दशायामपि प्रातिभासिकानां शुक्तिरजतादीनां रङ्गरजतादीनां वा साध्यते तथैवालङ्कारिकैरप्यनन्तःकरणधर्माणां विभावादीनामपि।

ननु च कथमद्वैतवादिभिः स्वप्नतुरगादीनां शुक्तिरजतादीनां वा साक्षिभास्यत्वमङ्गीक्रियते इति चेदुच्यते—एतानि ज्ञानानि प्रातिभासिकानि प्रतिभासकालमात्रस्थायीनि यावत् स्वप्नतुरगाणां शुक्तिरजतादीनां वा ज्ञानमस्ति तावदेव तेषां सत्त्वम्। अन्तःकरणधर्मवदेतेषामप्यज्ञातसत्त्वाऽभवात् साक्षिभास्यत्वमङ्गीकरणीयमिति। (क्रमशः)

---

## विश्वस्ते नातिविश्वसेत्

वर्धमानतः, मार्चमासस्य द्वितीयदिने।

अत्रत्यः कश्चिद् वस्त्रापणस्वामी तस्य च द्वौ सहकारिणौ प्रतारणापूर्वकार्थग्रहणाद् रक्षिकवर्गेण धृताः।

दुहितु विवाहे यौतुकदानाय केनचन वृद्धेन चिरमित्रस्यापणस्वामिनो हस्ते सप्तदशसहस्ररूप्यकसम्मितान्यर्थपत्राणि संन्यस्य विविधवस्तुक्रयाय विपणिं प्रति प्रस्थितम्। प्रत्यावृत्तश्चापणं पत्राणि प्रतिगृह्यासौ गृहं प्रत्यागतः, ततश्च वरस्य पित्रे प्रदानाय यावदर्थपत्राणि पश्यति तावत् कतिचन पत्रखण्डान्येवावलोकितवान्। आरक्षिका विज्ञापिताः। तैश्च वसनापणस्वामिनो गृहमन्विष्य सर्वाण्येवार्थपत्राणि लब्धानीति श्रूयते। पी० टी० आइ०।

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।
विश्वासाद् भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

---

# Fiance वा Fiance´ वा

**Fiance A Commoner.**

Princess Margaret's fiance is the son of a lawyer.

*Statesman*, February 27, 1960, p. 1.

Princess Margaret's fiance has given her a ruby ring set in gold and surrounded by diamonds in the shape of a flower.

*Statesman*, February 29, 1960, p. 1, Col. 2.

What sort of a man is Princess Margaret's fiance ?

*Ibid*, p. 8, Col. 4

Princess Met Fiance At A Party.

*Ibid*, p. 9, double column heading.

स्टेट्समानमतेन ईकार-एकारयोर्वर्णगत उच्चारणगतश्च भेदो दूरीकरणीयः। भेद एव मूलं विरोधस्य। अत एव भेदस्य मूले कुठारोऽर्पणीयः।

यथा क्रमेण त्रयाणां धूर्तानां वचनैर्ब्राह्मणस्य प्रत्ययो जातस्तेन शुनक एवोह्यते न पुनश्छागस्तथा स्टेट्समानपत्रे तथा जेमस् काउलीमहोदयस्य पत्रे Fiance-सन्दर्शनात्, इदमेव शुद्धं पदमिति प्रत्ययः सञ्जातः, अभिधानकोषसन्दर्शनेन निर्वचनालोचनेन च स ग्रीष्मसरिद्विलायं विलीनः। Fiancé इत्येव शुद्धम्।

---

## साहसिको भर्ता

[ श्रीमती कल्पना देवी )

अहं तावदारक्षिकाध्यक्षस्य सहधर्मिणी। एकदाहं मम भर्ता च निशीथे निर्भरं प्रसुप्तौ। सहसा कस्यचन पदध्वनिना निद्राभङ्गो मे समजनि। पुनः पुनः खश्खश शब्दः श्रवणसरणिं मे सम्प्राप्तः। ततश्च भीता भर्तारं प्राबोधयम्, गृहे चौरः प्रविष्ट इति प्रतिभाति, पदन्यासस्य खश् खश् ध्वनिः श्रूयत इति। तच्छ्रुत्वा पतिर्मे तदात्व एवोत्थाय शय्यामजहात्। परं तत ऊर्ध्वं पुनःपुनराकार्यापि तस्योत्तरं न लब्धम्। ततश्च दुर्गतिहारिणीं दुर्गादेवीं संस्मृत्य कथञ्चिद् धैर्यमवलम्ब्य पर्यङ्कतोऽवतीर्य वैद्युतालोकं प्राज्वलयम्। ततश्च द्वौ मूषिकौ पत्रमेकमादाय गृहं परिक्रामतस्तेन च खश्खश् शब्दः सञ्जायत इति सन्दृश्य स्वस्थाहं समवर्ते। ततश्च सुनिपुणमन्विष्य पतिदेवतां पर्यङ्कस्याधस्तात् सङ्कुचितगात्रं विवर्णमुखमवतिष्ठमानं न्यशामयम्। अवितथं खलूक्तमभियुक्तैः—The nearer the church, the farther from God—यथा यथा देवायतनस्य सान्निध्यं तथा तथा देवतो दूरत्वम्। इति।

---

# ऋक्प्रातिशाख्यपाठविमर्शः

ऋक्प्रातिशाख्ये [ २।३-४ ] दृश्यते—

एष स्य स च स्वराश्च पूर्वे भवन्ति व्यञ्जनमुत्तरं यदेभ्यः।

तेऽन्वक्षरसन्धयोऽनुलोमाः प्रतिलोमास्तु विपर्यये त एव ॥

तत्र प्रथमास्तृतीयभावं प्रतिलोमेषु नियन्त्यथेतरेषु।

ऊष्मा परिलुप्यते त्रयाणां स्वरवर्जं न तु यत्र तानि पद्याः ॥ इति।

अस्मद्दृष्टेषु सर्वेष्वेव पुस्तकेषु "न तु यत्र तानि पद्याः" इति सविसर्गकः पाठः सन्दृश्यते। व्याख्यातं चोवटेन एषः स्यः सः एतेषां मध्येऽन्यतमद् (?) यत्र यस्मिन् पदे सावग्रहं भवति तत्र विसर्जनीयलोपो न भवतीति।

यथास्माभिर्दृश्यते तथात्र पद्येति निर्विसर्ग एव पाठः स्वीकर्तव्यः। शेश्छन्दसि बहुलमिति शिलोपे नकारलोपः। ऋक्प्रातिशाख्ये यथाज्मध्यस्थडकारस्य ळत्वं विहितं तथात्रापि वैदिकप्रयोगानुसरेणच्छन्दोऽनुरोधेन शिलोपः स्वीकृतः। ता वशाङ्गमानि [ ४।१४ ] इत्यत्रोवटाचार्येणोक्तम्—ता तानि। निशब्दलोपोऽत्र द्रष्टव्यः। छन्दोवत् सूत्राणि भवन्ति। इति। उपोत्तमं नानुदात्तं न पद्यम् [ १।२९ ] इत्यत्र विशेष्यस्य नपुंसकत्वान्नपुंसकमेव पद्यम्। पादान्तेऽपद्यः सादनम् [ ९।३९ ] इति तु नोद्वेगं जनयति। पादान्ते वर्तमानोऽपद्यः सन् सादनमित्ययं शब्दः प्लवत इति व्याख्यानात्।

---

# को वा मूढः ?

भृत्यस्य मौढ्येन प्रभुर्भृशं कुपितः प्राह, कस्तावदावयोर्मूढस्त्वं वाहं वेति। प्रभुं प्रसादयितुकामः परिचारकः सप्रश्रयं प्रोवाच, स्वामिन् न खलु भवादृशो मूढं भृत्यं पोषयेदिति।

---

# ब्रह्मसूत्र-मितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

धर्म्मोपपत्तेश्च ।१।३।८

अत्रोक्तानां भूमधर्माणां च ब्रह्मण्येवोपपत्तेश्च ब्रह्मैव भूमेत्यर्थः। तथाहि "यो वै भूमा तदमृतमि"त्यमृतत्वं ब्रह्मण एव धर्मो मुख्यः, "ब्रह्मैवेदममृतं पुरस्तादि"ति श्रुतेः। जीवानां चामृतत्वमापेक्षिकं "ये तद्विदुरमृतास्ते भवन्ती"ति, "स्वे महिम्नी"ति स्वमहिम-

प्रतिष्ठत्वं "स एवेदं सर्वमि"ति सर्वात्मत्वं च ब्रह्मण एव धर्माविति भूमा परमात्मैवेति सिद्धम् ॥८॥

## अक्षरमम्बरान्तधृतेः ।१।३।६

बृहदारण्यके "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे"ति गार्गीप्रश्ने याज्ञवल्क्य उत्तरमाह "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वि"ति। किमत्राक्षरशब्देन सांख्योक्तं प्रधानमुच्यते परमात्मा वा? सांख्यैः प्रधानस्य नित्यत्वकथनान्न क्षरतीत्यक्षरत्वोपपत्तेरस्थूलत्वाद्युपपत्तेश्च प्रधानमेवाक्षरशब्दवाच्यं न परमात्माऽसिद्धेरिति प्राप्त आह "अक्षरमम्बरान्तधृतेरि"ति। अत्राक्षरशब्दवाच्यं परमात्मैव, न प्रधानम्। कुतः? अम्बरान्तस्य भूतजातस्य धृतेः, "यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चे"ति क्षित्यादिभूतजातस्याकाशप्रतिष्ठत्वमुक्त्वा "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे"ति प्रश्ने उत्तरमुक्तम् "एतद्वै तदक्षरमि"ति। तथाच क्षित्याद्याकाशान्तभूतजातस्य धृते ब्रह्मैवाक्षरं न प्रधानमित्यर्थः। धृतिश्च न धारणमात्रं किन्तु नियमनलक्षणमहिमसहितं तत्, "य आत्मा स सेतु विधृतिरि"ति श्रुत्यन्तरे सेतुदृष्टान्तेन नियमनसहिताया धृतेः कथनात्। न चैतादृशी धृतिरचतनप्रधानस्य सम्भवतीत्यक्षरं ब्रह्मैवेत्यर्थः। तर्हि धृतिमनुक्त्वा नियमनं कथं नोक्तम्? "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च"त्याधारप्रश्ने "एतद् वै तदक्षरमि"ति प्रतिवचनात्, सति सम्भवे विषयवाक्येणैव सिद्धान्तकथनस्य युक्ततमत्वाच्च। अत एवाक्षरं प्रशासनादिति न सूत्रितम्, न खलु शासनमेवाधिकरणमिति द्रष्टव्यम् ॥९॥

## सा च प्रशासनात् ।१।३।१०

कथमत्र नियमनसहिता धृतिरवगम्यते? तत्राह—सा चेति सा च विलक्षणा धृतिः प्रशासनाद् वेदितव्या, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति श्रुतेरित्यर्थः। प्रशासनम् आज्ञा ॥१०॥

## अन्यभावव्यावृत्तेश्च ।१।:।११

अन्यस्य भावोऽन्यभावो ब्रह्मभिन्नत्वं तस्य व्यावृत्तेश्च निषेधाच्चाक्षरशब्दवाच्यं ब्रह्मैव न प्रधानम्। तथाहि वाक्यशेषे "तद् वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ, एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे"त्यक्षरस्य द्रष्टृत्वश्रोतृत्वाभिधानाज्जडप्रधानभावव्यावृत्तिरिति। सर्वाधारत्वप्रश्ने जीवश्च सूक्ष्मः "अस्थूलमनण्वि"त्यणुत्वप्रतिषेधादेव न संशयास्पदम्। ओङ्कारस्य सर्वात्मत्वमार्थवादिकं तत्रैव सिद्धमिति ॥११॥

ईक्षतिकर्मव्यपदेशात् सः ।१।३।१२

"यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीते"त्याद्युक्त्वा "स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते"इत्युक्तम् । अत्र परं पुरुषमितिशब्दाद्धिरण्यगर्भ उच्यते परमात्मा वेति संशये हिरण्यगर्भ एव प्राप्तः । एकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिं द्विमात्रं प्रणवमुपासीनस्य सोमलोकप्राप्तिं चोक्त्वा त्रिमात्रं प्रणवमुपासीनस्य प्राप्यो ब्रह्मलोकः सोमलोकादूर्ध्वं हिरण्यगर्भलोक एव वाच्यः । तदधिपतिश्च हिरण्यगर्भो देहेन्द्रियादिभ्यः पराज्जीवरूपाच्चैतन्यघनात् परः, तस्याजरत्वादिकं चाप्रलयवृत्तित्वेन नेयम्, न परमात्मा, एकमात्रद्विमात्रोपासीनस्य ब्रह्माण्डान्तर्वर्त्तिलोकप्राप्त्यभिधानात् त्रिमात्रोपासीनस्यापि तथैव युक्तत्वादिति प्राप्ते आह—"ईक्षतिकर्मव्यपदेशात् स" इति । य एव हि अभिध्यानस्य कर्म तस्यैवेक्षणकर्मत्वव्यपदेशात् स परः पुरुषः परमात्मैव, एकमात्रोपासनया ऋग्भिर्मनुष्यलोकस्य द्विमात्रोपासनया यजुर्भिरन्तरिक्षलोकस्य त्रिमात्रोपासनया सामभिश्च ब्रह्मलोकस्य प्राप्तिरुक्ता । स च ब्रह्मलोकः परमात्मलोक एव, "स सामभिर्यत् तत् कवयो वेदयन्ते तमोङ्कारेणैवायतनेनान्वेति विद्वान यत् तच्छान्तमजरममृतमभयं परं चे"ति । सामभिः क्रान्तदर्शिवेद्यस्य शान्ताजरत्वाद्यसाधारणविशेषणान्वितस्य परस्यैव ब्रह्मणो निर्देशात्, "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्मे"त्येकवाक्यत्वात्, सति सम्भवेऽर्थसङ्कोचस्यान्याय्यत्वाच्च ॥१२॥

दहर उत्तरेभ्यः ।१।३।१३

छान्दोग्ये श्रूयते—"अथ यदस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव विजिज्ञासितव्यमिती"ति । अत्र ब्रह्मपुरे देहे यत् क्षुद्रं हृत्पद्मं तस्मिंश्च क्षुद्र आकाशो यः श्रूयते स किं भूताकाशो जीवः परमात्मा वा ? आकाशशब्दस्य लोके भूताकाशे प्रसिद्धावपि वेदे परमात्मन्यपि प्रसिद्धिरित्युक्तम् "आकाशस्तल्लिङ्गादि"त्यत्र । औपाधिकसूक्ष्मापेक्षया स्वतः सूक्ष्मो जीवो वाकाशपदार्थः, तस्याप्याकाशवत् स्वच्छत्वात्, हृदयस्थत्वाच्चेति संशये भूताकाशो वाच्यः, तस्यैव लोकसिद्धत्वात्, तस्मिन् यदन्तस्तदन्वेष्टव्यमित्युक्तश्च । न हि ब्रह्मणो यदन्तस्तदन्वेष्टव्यं भवति, ब्रह्मण एवान्वेष्टव्यत्वाद् विजिज्ञासितव्यत्वाच्च, "भूमा त्वेव विजिज्ञासितव्य" इति श्रुतेः । आकाशस्य च दहरत्वमौपाधिकं बाह्याकाशेन सहोपमानोपमेयभावश्चौपाधिकभेदापेक्षया बोध्य इति प्राप्ते आह—'दहर उत्तरेभ्य' इति । अत्र दहराकाशः परमात्मैव भवति । कुतः ? उत्तरेभ्यो हेतुभ्यः । उत्तरेषु वाक्येषु ये हेतवो निर्दिष्टास्तेभ्यः परमात्मैव दहराकाशो गम्यते । तथाहि भूताकाशेनोपमानोपमेयभावप्रदर्शनात् तस्माद् भेद एव

# विनियोगव्याख्यानम्

[ तृ० कृ० कृष्णस्वामी शर्मा ]

'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः[1]।' वेदेऽकृतश्रमः शूद्रत्वमेतीति च स्मार्तः सिद्धान्तः। अतो वैदिकं विज्ञानं विस्मृतं विनष्टं च मा भूदिति विचारेण काञ्चिद् वाचं प्रयुञ्ज[2]। बोद्धृबोधकसौकर्याय सायणभाष्यमधिकृत्य ऋक्संहितायाः पञ्चमसूक्तस्य विनियोगं[3] व्याख्यातुं प्रक्रमे[2]। प्रसङ्गेन तत्सहचरितवाक्यान्यपि यथावसरं विवृणोमि।

तत्र "आ त्विति द्वितीयं सूक्तं दशर्चम्। सुरूपकृत्नुं दशेत्यनुवृत्तावा तु युञ्जन्ति (अनु० १।१) इत्येवमनुक्रान्तत्वात्। ऋषिच्छन्दोदेवताविनियोगाः पूर्ववत्। विशेषविनियोगस्तु—अतिरात्रे तृतीयपर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः। अतिरात्रे पर्यायाणामिति खण्डे आ त्वेता निषीदत ( आ० श्रौ० ६।४ ) इत्युक्तत्वात्।" इति सायणाचार्याः।

ऋक्संहितागतमन्त्राणां स्वाध्यायार्थं विनियोगार्थं च तेषां याजनाध्यापनाभ्यां श्रेयोऽधिगन्तुं च भगवान् कात्यायनः प्रतिजानीत ऋग्वेदसर्वानुक्रमण्याम्— "अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्संख्यऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो यथोपदेशम्।" इति। 'न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः" इति च निर्दिशति। [ अनु० प० १ ]। तत्र सर्वेषां सूक्तानां प्रतीकेन ऋक्संख्यादीनां क्रमशो निर्देशाद् ग्रन्थोऽयं सर्वानुक्रमणीति नाम्ना प्रसिद्धः। अनुक्रम्यतेऽनयेत्यनुक्रमणी। करणे ल्युटि स्त्रियां ङीप्। तत्र पूर्वं द्वादशकाण्डी परिभाषा। ततो दाशतय्या दशमण्डल्या ऋक्संहिताया मण्डलशः[4] सूक्तानाम् ऋक्संख्यऋषिदैवतच्छन्दांसि कात्यायनः क्रमशो वदति।

ऋक्संहिताया द्वेधा विभाग एकः काण्डैरपरो मण्डलैः। अष्टकाण्डपरिमितत्वाद्

---

१ इति तै० स० भाष्यभूमिकायां सायणः।

२ प्रोपाभ्यां युजेरयज्ञपात्रेष्विति [ १।३।६४ ] प्रोपाभ्यां समर्थाभ्याम् [ १।३।४२ ] इति चात्मनेपदम्।

३ विनियोगो नाम कर्मभिः सम्बन्धो मन्त्राणाम्। कस्य केन कर्मणा विनियोगः कुतश्चेत्येतस्मिन् विषये ब्राह्मणश्रौतसूत्रमीमांसादय एव प्रमाणानि।

४ तु० "शतर्चिन आद्ये मण्डले। मण्डलादिष्वाग्नेयमैन्द्रात्।" [ अनु० प० २।२; १२।१२ ]

[1]अष्टकमित्युच्यते। दशमण्डलपरिमितत्वाद् दशतयी ( संहिता ) भूत्वा [2]दाशतयी-त्युच्यते। प्रतिकाण्डं ( प्रत्यष्टकम् ) अष्टावध्याया इति कृत्वा समूहरूपेणावयवरूपेण चाष्टकोऽयं सङ्घः। अष्टकाध्यायवर्गैः काण्डविभागः। अनुवाकसूक्ताभ्यां मण्डलविभागः। उभयत्र 'इकः' (unit) ऋगेव। वर्गः सूक्तं च ऋगात्मकमिति यावत्।

| प्रथमेऽष्टके— | | | प्रथमे मण्डले— | | |
|---|---|---|---|---|---|
| ( क ) | अध्यायाः | ८ | ( क ) | अनुवाकाः | २४ |
| ( ख ) | वर्गाः | २६५ | ( ख ) | सूक्तानि | १९१ |
| [ ( ग ) | सूक्तानि | १२१ ] | ( ग ) | ऋचः | २००६ |

एवं प्रथमोऽष्टकः प्रथममण्डलमध्ये समापितः।

दूर्वा वंशो वा यथा काण्डात्काण्डात्प्ररोहति, आपादचूडं शरीरे यथाऽवयवा उत्तरोत्तरं संयोजिताः सन्ति तथा वेदमूर्तेः स्वरूपमष्टकैर्निर्मितं भवति। परन्तु लेखनार्थं यथा मस्तिष्कस्य नेत्रयोः कराङ्गुलीनां च समवायः, यथा वा शरीरगतसप्तधातूनां यथायोगं विविधं मिश्रणं भवति भोजनपाचने, रोगनिवारणे, शरीरायासे, बुद्धिनियोगे च तथैव ऋङ्मन्त्राणामपि विशेषा विनियोगा भवन्ति विहरणविपर्यासावापोद्वापसमुद्धारादिकं च। विशेषविनियोगार्थमेव ऋषिच्छन्दोदैवतज्ञानमपेक्षितम्। तत्र विशेषविनियोगे क्वचिद् ऋचो विनियोगः, क्वचित्तृचस्य,[3] क्वचित्सूक्तस्य सूक्तयोः सूक्तानां वेति कृत्वैव सूक्तशो विभागः कृतोऽस्ति। एवं च दशमण्डलर्ध्येयः क्षुद्रसूक्ता महासूक्ता इति च व्यपदिष्टाः। एवं संहितायाः स्वरूपसंरक्षणमष्टकै भवति, संहितागतमन्त्राणां विशेष-विनियोगस्तु सूक्तविभागैर्भवति। एवमष्टको यदि सत्यं भवेद् मण्डलमृतं भवेत्। अष्टको यदि सोमो मण्डलं तद्रश्मिः। एवमष्टकमण्डले ऋक्संहिताया द्वैताद्वैतरूपे स्तः।

अथ आ त्विति। 'आ तु' इति मन्त्रस्य प्रतीकम्। मन्त्रगतस्याऽऽदिमशब्द-

---

१ अष्टकः सङ्घः। अष्टकं पाणिनीयम् इतिवत्। परिमाणार्थे कन्-प्रत्ययः। [ पा० ५।१।५८ ]

२ अवयवे तयप् प्रत्यये [ पा० ५।२।४२ ], स्वार्थेऽणि, संहितात्वेन विवक्षायां ङीपि 'दाशतयी' इति रूपम्।

३ तृचः तिसृणामृचां समाहारः। ऋक्पूरिति समासान्तः अः। 'त्रि ऋच् अ' इत्यवस्थायाम् 'ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि' इति वार्त्तिकेन [ ६।१।३७५ ] त्रेः सम्प्रसारणम्, ऋक्छब्दस्य ऋकारलोपश्च। अर्धर्चादीनामाकृतिगणत्वात् पुंस्त्वं च। [ पा० २।४।३१ ]।

द्वयस्यानुकरणात्मकमिदम्। तत्रानुकार्य्यानुकरणयोरभेदविवक्षास्यानर्थकत्वादप्रातिपदिकत्वान्न सुब्विभक्तिः, असन्देहार्थमपि। प्रथममण्डलस्यानुक्रमण्याम् "आ तु" इति सूत्रं पञ्चमम्। 'सूक्तं सूक्तादौ हीने पादे' (आ० श्रौ० १।१) इत्याश्वलायनेन श्रौतसूत्रग्रन्थे परिभाषितम्। "आ त्वेता निषीदत" इत्यृचः समग्रः पादः। तत्र 'आ तु' इति हीनपादत्वात् तस्य च सूक्तस्यादिमांशत्वाद् 'आ तु' इति पदद्वयेन समग्रं सूक्तं गृह्यते। एवमिदं सूक्तं संहितायां पञ्चमं भवति "आ तु" इति सूत्रस्यानुक्रमण्यां पञ्चमत्वात्। सूक्तेऽस्मिन् कत्यृच इति विचारे परिभाषा जागर्ति "सूक्तसंख्यानुवतत आन्यस्याः[1] सूक्तसंख्यायाः" (अनु० प० १२।१)। 'सुरूपकृत्नुं दशेन्द्रम्' इति चतुर्थं सूत्रम् (अनु० १।१।४)। एव चतुर्थे सूक्ते दशर्चः। इयं दशसंख्या दशमात् सूक्तात् (सूत्रात्) प्रागनुवर्तते, "गायन्ति द्वादशानुष्टुभं तु" (अनु० १।१।१०) इति दशमे सूत्रे द्वादशेत्यृक्संख्यादर्शनात्। एवं चतुर्थादारभ्य नवमं यावत् षट् सूक्तानि (४—९) दशर्चानि[2]।

प्रथमे मण्डले द्वितीयेऽनुवाके चत्वारि सूक्तानि चतुर्थपञ्चमषष्ठसप्तमानि। तत्रेदं द्वितीयम्। दशर्चं चेदम्। ऋचोऽत्र दश। अस्य ऋषिः, छन्दः, देवता, विनियोगश्च पूर्ववत् पूर्वस्य सूक्तस्येव। पूर्वस्मिन् सूक्ते भाष्यकारो वदति "पूर्ववन्मधुच्छन्दसो गायत्रस्य चानुवृत्तेस्ते एवर्षिच्छन्दसी" इति। "ऋषिश्चान्यस्मादृषेरवाविशिष्टः[3]" (अनु० प० १२।२) इति परिभाषया मधुच्छन्दा वैश्वामित्रोऽस्य चतुर्थसूक्तस्यर्षिः। "अग्निं नव मधुच्छन्दा वैश्वामित्रः" (अनु० १।१।१) इति नवर्चस्याग्निदेवताकस्य प्रथमसूक्तस्य मधुच्छन्दा नाम विश्वामित्रापत्यं वैश्वामित्र ऋषिः। स एवर्षिरुत्तरत्र नवसु (२-१०) सूक्तेष्वनुवर्तते। एकादशे सूक्ते "इन्द्रमष्टौ जेता मधुच्छन्दसः" (अनु० १।१।११) इत्यनुक्रान्तत्वात् पूर्वोक्त ऋषिर्मधुच्छन्दा वैश्वामित्रो नानुवर्तते। अस्यैकादशस्यर्षिर्मधुच्छन्दसः[4] पुत्रो माधुच्छन्दसो जेता नाम। एवं सति पूर्वस्यर्षेरपत्यमयम्।

'आदौ गायत्रं प्राग्घैरण्यस्तूपीयात्[5]' (अनु० प० १२।१४) इति परिभाषितत्वात्

---

१ अन्यस्याः सूक्तसंख्याया आ। अन्यां सूक्तसंख्यां मर्यादीकृत्येति।

२ दशर्चमिति बहुव्रीहिः। ऋक्पूरिति समासान्तोऽप्रत्ययः [पा० ५।४।७४]।

३ अवाविशिष्टः। न चेद् वा-विशिष्टः।

४ "मधु ह स्म वा ऋषिभ्यो मधुच्छन्दाश्छन्दति तन्मधुच्छन्दसो मधुच्छन्दस्त्वम् इति।" [ऐ० आ० १।१।३]

५ हिरण्यस्तूप+अण्+ङीप् > हैरण्यस्तूपी ऋक्। हैरण्यस्तूपं सूक्तम्। तदीयं छन्दो हैरण्यस्तूपीयम्। वृद्धाच्छः (पा० ४।२।११४)।

षष्ठानुवाकपर्य्यन्तं त्रिंशति सूक्तेषु सामान्येन गायत्रं छन्दः, गायत्रीछन्दस्का ऋचः। "यस्य वाक्यं स ऋषिः" (अनु० प० २।४) इति परिभाषया हिरण्यस्तूपसम्बन्धेन हैरण्यस्तूप्य ऋचः, तासां छन्दश्च हैरण्यस्तूरीयम्। त्रिंशति सूक्तेषु प्राधान्येन गायत्रस्य दर्शनात् तथा परिभाषितम्। यत्र विशिष्टं छन्दस्तत्र विशेषनिर्देशं करोति कात्यायनः, यथा "गायन्ति द्वादशानुष्टुभं तु" (अनु० १।१।१०) इति। अत्र तुह्यादिपरिभाषया[1] (अनु० प० १२।३) दशमैकादशयोः सूक्तयोरानुष्टुभं छन्दः। एवं पूर्ववत् चतुर्थसूक्तवदेवास्य पञ्चमस्य ऋषिच्छन्दसी। देवतापि पूर्ववल्लैङ्गिकी लिङ्गोक्ता। तथाहि पूर्वसूक्ते 'इन्द्रं पृच्छ' इति चतुर्थ्यामृचि [ ऋक् १।४।४ ] लिङ्गदर्शनाद् इन्द्रो देवता। अत्रापि सूक्ते पञ्चमे "इन्द्रं गायत" ( ऋक् १ ), "इन्द्रम्" ( २ ), "इन्द्राय गायत" ( ४ ) "इन्द्र सुक्रतो" ( ६ ). "इन्द्र गिर्वणः" (७), "शतक्रतो त्वां वर्धन्तु नो गिरः" ( ८ ), इन्द्र इम सनेत् ( ऋक् ९ ) इति लिङ्गदर्शनाद् इन्द्रो देवता। यद्यप्यनुक्रमण्यां "सुरूपकृत्नुं दशन्द्रम्" ( अनु० १।१।४ ) इति निर्दिष्टम् उत्तरत्र प्रतीकग्रहणेन 'आ तु' इति सूक्तमात्रं निर्दिष्टं तथाप्यस्यापि पूर्ववदेव देवतानिर्णयः। "मण्डलादिष्वाग्नेयमैन्द्रात्" ( अनु० प० १२।१२ ) इति परिभाषया च इन्द्र एव देवतास्य सूक्तस्य पूर्ववच्च तथा लिङ्गदर्शनात्।

प्रथमेऽध्याय आदावग्निर्देवताऽन्ते चाग्निर्मरुतश्च देवताः 'मरुद्भिरग्न आ गहि" इति प्रत्यचम् ( ऋक् १।१९।१-९ ) अग्नेर्मरुद्भिः सहाऽऽह्वानकरणात्।

अथ विनियोगः। पूर्वस्मिन् ( चतुर्थे ) सूक्ते "अभिप्लवषडहे ब्राह्मणाच्छंसिनः प्रातःसवने स्तोमवृद्धावावापार्थानि सुरूपकृत्नुमित्यादीनि षट् सूक्तानि ( आ० श्रौ० ७।५ ). इति" इति सायणः।

अयं सूक्तविनियोगः। एतद्व्याख्यानप्रसङ्गमिषेणैव यज्ञविषये किञ्चिदुच्यते। त्रिः सप्त कृत्वा यज्ञा एकविंशतिर्भवन्ति। औपासनहोमः, वैश्वदेवम्, पार्वणम्, अष्टका, मासिकश्राद्धम्, श्रवणा, शूलगव इति सप्त पाकयज्ञसंस्थाः। अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञादयो दर्विहोमा इति सप्त हविर्यज्ञसंस्थाः। अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, वाजपेयः, अप्तोर्याम इति सप्त सोमसंस्थाः।

श्रौतयज्ञविषये श्रूयते—"स एष यज्ञः पञ्चविधः, अग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि पशुः सोम इति।"

---

१. तु-हि-ह-वै-तच्छन्दविशिष्टान्यृषिदैवतच्छन्दांसि द्वि-त्रि-चतुष्-पञ्च-षट्-सूक्तभाञ्जि यथाक्रमम्।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

| April, 1960. | १८८२-शकीय-वैशाखस्य १४श-वर्षस्याष्टमी-संख्या | Vol. XIV No. 8 |
|---|---|---|

## कर्मधारयः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

गीतायां श्रीभगवतोक्तं गहना कर्मणो गतिरिति। ततश्च कर्मधारयस्य गतिरपि गहनेति दण्डापूपिकान्यायेन सिध्यति। तन्नैतदाश्चर्यं यत् कर्मधारयोऽयं शिरःशूलमुपजनयेच्छिक्षार्थिनां च शाब्दिकानां च। कर्मधारयस्य को वार्थः, किमयं द्विगु-तत्पुरुष-बहुव्रीहिवन्नायकशब्दः, आहोस्विदन्वर्थेयं संज्ञेत्येवंविधाः प्रश्ना विशकलयन्तीव मर्माणि शब्दतत्त्वगवेषकाणाम्। विषयमिममधिकृत्य प्रथमतः स्वमतमुपन्यस्यते।

१। नायकशब्दः।

कर्मधारयशब्दः कर्मधारयसमासस्य प्रकृष्टमुदाहरणं तेन च स्वसमानजातीयानां सर्वेषां समासानां व्यपदेशः। मन्प्रत्ययान्ताः शब्दाः कदाचित् कर्तृसाधनाः पुंलिङ्गा अन्तोदात्ताः, कदाचित् पुनर्भावसाधना नपुंसकलिङ्गा आद्युदात्ता भवन्ति, तथाहि पुंलिङ्गोऽन्तोदात्तो ब्रह्मन्-शब्दः स्तोतृपरः, नपुंसकलिङ्ग आद्युदात्तः स एव स्तोत्रपरः। अत एव कृधातो र्मनिनि घृतादित्वादन्तोदात्तः पुंलिङ्गः कर्मेति पदं कर्तृपरम्। अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेति-

सातिसाहिभ्यश्च [३।१।१३८] इति धारिधातोः कर्तरि शप्रत्यये धत्र्यर्थको धारयशब्दः। कर्मा चासौ धारयश्चेति कर्मधारयः। अत्र कर्मधारय-समासः स्फुट एव।

२। अन्वर्थसंज्ञा।

पाणिनिना महर्षिणा कर्मधारयस्य लक्षणं विहितं तत्पुरुषः समानाधिकरणः कर्मधारयः* [ १।२।४२ ] इति। अधिकरणस्य च लक्षणमभियुक्तैः प्रणीतम्—

कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम्।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥

इति। अत एव कर्मणः क्रियाया धारयः कर्मधारय इति विग्रहो महर्षेरभिप्रेत इति प्रतिभाति। तत्पुरुषसमास उत्तरमेव पर्व क्रियान्वय-मनुभवति, कर्मधारये पुनरुभयमेव पर्व क्रियया अन्वीयते, कर्म धारयतीति यावत्। अत एव प्रक्रियासर्वस्वकारेणोक्तम्—

द्वयोर्हि पदयोरेकद्रव्यवृत्त्याखिलं पदम्।
क्रियासम्बन्धि यत्र स्यात् स शान्तः कर्मधारयः॥ इति।

संक्षिप्तसारटिप्पण्यामभिरामविद्यालङ्कारेणाप्युक्तम्—कर्म क्रियान्वयं धारयतीति कर्मधारय इति।

प्रयोगरत्नमालायामप्युक्तम्—कर्म क्रियां धारयति स्वपदार्थे व्यवस्था-पयतीति कर्मधारयः। ( ६।७६५ ) इति। व्याख्यातं चेदं प्रभा-प्रकाशिकायाम्—कर्मपदेन क्रियोच्यते। धारयतीत्यस्यार्थः स्वेति। स्वं समस्यमानपदं तस्यार्थे समस्यमानपदानतिरिक्तपदार्थे धारयति व्यवस्थापयतीति।†

( क्रमशः )

---

* "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति पाठे श्लोकार्धं स्यात्।

† विस्तरस्तु मञ्जूषायाः सप्तमवर्षस्य दशमाङ्के द्रष्टव्यः।

# चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्

तैत्तिरीयब्राह्मणे [ ३।१२।३।२ ] श्रूयते—

मनसो वशे सर्वमिदं बभूव । नान्यस्य मनो वशमन्वियाय ।
भीष्मो हि देवः सहसः सहीयान् । स नो जुषाण उप यज्ञमागात् ॥

इति । व्याख्यातं चेदं सायणाचार्येण—सर्वमिदं जगन्मनसो वशे [ विधेयत्वे ] बभूव [ भवति, वर्तते ], न त्वेतन्मनः अन्यस्य कस्यचिद् वशम् [ विधेयत्वम् ] अन्वियाय अनुगच्छति । सर्वस्य मनोऽधीनत्वं श्रुत्यन्तरे दर्शितम्—"मन एव मनुष्याणां कारणं बन्ध-मोक्षयोः" इति । मनस इतराधीनत्वाभावश्च स्मर्यते—असंशयं महाबाहो मनो दुर्निग्रहं चलम् [ गीता ६।३५ ] इति । तादृशमनोऽभिमानी देवः भीष्मो हि भयहेतुत्वेन प्रसिद्धः । मनसः सर्वदुःखापादकत्वं सर्वैरप्यनुभूयते, सुप्ते मनसि दुःखमात्रस्याभावात् । तस्मादयं मनोदेवः सहसः [ सहस्वतः ] सहीयान् बलवतोऽप्यत्यन्तं बलीयान् । [ विन्मतोर्लुक् इति लुक् । ] अत एव स्मर्यते—चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् [ गीता ६।३४] इति । स तादृशो मनोदेवो जुषाणः प्रीतियुक्तः सन् नोऽस्मदीयं यज्ञमुपागात् प्राप्नोतु । इति ।

---

## आभाणकमाला

१ । एवं कुकर्म सर्वस्य फलत्यात्मनि सर्वदा ।
यो यद्वपति बीजं हि लभते सोऽपि तत्फलम् ॥

कथासरित्सागरः ।१७।१४८

"As he has sown his seed, so must he reap his corn." TROLLOPE.

As you have sown, so shall you reap.
Latin. Ut sementem feceris, ita metes.
Greek. Ho gar ean speirēi anthrōpos, toūto kai therisei.
Latin. Quae enim seminaverit homo, haec et metet.
German. Wie gesät, so geschnitten.
French. Qui sème, recueille.
French. Qui sème des chardons, recueille des épines.
He who sows thistles must reap thorns.
If you sow thorns, you cannot reap jasmines.

कण्टकानि वपसि चेन्न खलु सुमनःसुमानि लप्स्यसे ।
न जातु लप्स्यते जातीं कण्टकानीह यो वपेत् ॥

He who sows thorns will not gather grapes.

यः खलु कण्टकानि वपति नासौ जातुचिद् द्राक्षाफलानि सञ्चिनुयात् ।

# शाकुन्तलश्लोकविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

शाकुन्तलस्य तृतीयाङ्कस्य प्रारम्भे दृश्यते—

भगवन् कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजन-सार्थः। कुतः ?

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥

इति। अत्र यद्यपि चूर्णके श्लोकस्य प्रथमचरणे चादौ कुसुमायुधस्योपादानं पश्चादिन्दो-स्तथापि श्लोकस्योत्तरार्धे प्रथमत इन्दोस्ततः कुसुमशरस्य वर्णनमिति प्रक्रमभङ्गः। तत्र राघवभट्टः। उत्तरार्धे क्रमप्रक्रमभङ्गो विरहिणो राज्ञो वचनमिति परिहर्तव्यः। 'त्वमिह कुसुमबाणान् वज्रसारान् विधत्से विसृजति स च वह्निं शीतगर्भैर्मयूखैः' इति वा पाठः। इति।

बहुत्र च विपश्चिद्भिरन्ते यदुक्तमुपस्थितिन्यायेन तस्यैवादौ वर्णनं विधीयते। तथाच निरुक्ते दृश्यते—इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति [ ऋ० सं० ६।४।७ ] इति वायुलिङ्गं चेन्द्रलिङ्गं चाग्नेये मन्त्रे [ ७।१७ ] इति। अत्र यद्यपि मन्त्र इन्द्रस्य प्राथम्ये-नोपादानं तदनन्तरं वायोस्तथापि महर्षिणादौ वायुलिङ्गं तत इन्द्रलिङ्गमित्युक्तम्।

---

# निर्वचनवैचित्र्यम्

[ भाषातत्त्वगहनवनस्पतिना लिखितम् ]

## १। Letter

प्रियमहाभागाः, न खल्वेतन्न विदितं भवतां यत् पृथिव्यां सर्वभाषागताः सर्वे शब्दाः संस्कृतसरस्वतीतः समुद्भूता इति। अथाङ्लभाषागत-letter-शब्दस्य व्युत्पत्तिः प्रदर्श्यते। लेखस्य पत्रस्य च सङ्करेण समुत्पन्नोऽयं letter यदधीनं खलु प्रणयिनां जीवितं च सुखं च, यत् किल यथाकालं कान्तोदन्तं सुहृद्वृत्तान्तं च समुपनमयति।

लेख+पत्र = letter.

## ऋक्प्रातिशाख्यपाठविमर्शः

आदिस्वरश्चोत्तरेषां पदेऽपि [ ४।८१ ] इत्यृक्प्रातिशाख्यभाष्ये दृश्यते—उत्तरेषां पदानामादिस्वरोऽनुनासिको वेदितव्यः। पदेऽपीत्यपिशब्दप्रयोगः संहितायामेतदविधानमिति द्योतनार्थः। इति। अत्र श्रीमङ्गलदेवशास्त्रिणा पादटीकायामित्थं पाठान्तराणि प्रदर्शितानि—एतदविधानमिति $B^2$, Reg.; एवैतदविधानमिति $B^3$ $I^2$ (-ध-$I^2$), एवैतद्विधानमिति $B^n$ इति। अन्ते च टिप्पण्यामुक्तम्—

पदेऽपि...द्योतनार्थः means as the nasalization apppears in the text it will of itself occur in the Saṁhitā text and consequently no prescription is required for the latter case. cp. Regnier who takes the passage in that sense. P. reads पदेऽपोत्यपिशब्दप्रयोगात्संहितायामेतद्विधानद्योतनार्थः॥ इति।

यथास्माभिर्दृश्यते मङ्गलदेवमहोदयानुसृतं पाश्चात्यविपश्चितो व्याख्यानं न मूलतः सिध्यति, महता कण्ठेन समुच्चयवाच्यपिशब्दोच्चारणात्। अत्र पदेऽपीत्यपिशब्दप्रयोगः संहितायामेतद्विधानमिति द्योतनार्थ इति पाठः समीचीनतया प्रतिभाति। अस्मिन् प्रकरणे यद् यत्कार्यमुक्तं सामान्यतः संहितायामेव तद् भवतीति हृदयम्। यद्वा, पदेऽपीत्यपिशब्दप्रयोगः संहितायामप्येतद्विधानमिति द्योतनार्थ इति स्वारसिकः पाठः।

---

## पितुः प्रतिकृतिः पुत्रः

माधवः। अहो बहोः कालादनन्तरं दृष्टोऽसि। अपि कुशलं ते ?

यादवः। परमेश्वरस्य प्रसादेन सर्वथा कुशल्येवास्मि।

माधवः। अपि परिणयः स्वीकृतस्त्वया ?

यादवः। अथ किम्। पञ्चवर्षदेशीयः पुत्रोऽपि मे वर्तते। ( सहर्षम् ) स च मदीया प्रतिकृतिरिति जनाः कथयन्ति।

माधवः। ( कुरूपं यादवं निरीक्षमाणः ) भवतु। स्वस्थश्चेदसौ का हानिः ?

---

## अधिकन्तु न दोषाय

The leastest with the mostest.

महिष्ठतमेन लघिष्ठतमम्।

## नहि नहि

सुप्रसिद्धस्य फराशीसाख्यानिकस्य नाटककारस्य च डुमामहोदयस्य नाम केन वा न श्रुतम् ?

कस्याञ्चन निशायां प्रधानतमे रङ्गमञ्चे मित्रप्रवरस्य सुमेमहोदयस्य नाटकेऽभिनीयमाने सामाजिकमेकं सुखसुप्तमपश्यड् डुमामहाभागः। सुहृदश्च सुमेमवदत्—अपि पश्यस्येतत् ? भवदीयैवेयं कृतिः। इति।

परेद्यवि डुमामहोदयस्य नाटकमभिनीयते स्म। तदानीमपि सामाजिक एकः प्रसुप्तोऽदृश्यत। सुमेमहोदयेनोक्तम्, प्रियमित्र, पश्य पश्य। तवापि नाटकं स्वापमुपजनयेत्। इति।

डुमामहोदयेन प्रत्युक्तम्, नहि नहि। अयमेव ह्यो भवदीयनाटकप्रयोगावसरे प्रसुप्त आसीत्। इदानीमप्यस्य स स्वापो न भग्नः। इति।

---

## पुनरपि संज्ञा

स्तिमित-रूपायितौतप्रोतशब्दा इव संज्ञाशब्दोऽपि वङ्गीयलेखकानामतीव प्रियः। "रविवारेर युगान्तर"पत्र (६३ फाल्गुन १८८१, पृः ख, स्त० ९) दृष्टम्—भालोवासार संज्ञा आमि जानि ना (अनुरागस्य संज्ञामहं न जानामि) इति।

भवतु भद्र भवतु। लक्षणं ज्ञायते वा ?

---

## कुम्भकर्णे भकारोऽस्ति

"रविवासरीय आनन्दबाजारपत्रिका"यां (कलिकाता, रविवार १०इ माघ, १३६६) दृष्टम्—आबालवृद्धवणिता (पृः २, स्त ३-८) इति। भणितशब्दे मूर्धन्यो णकारो वर्तते, परं वनिता-शब्दस्य नकारो दन्त्यः, सगोत्र-Venus-शब्दस्यापि नकारो दन्त्यः।

तस्या एव पत्रिकायाः सप्तमे पृष्ठे सप्तमे स्तम्भे दृष्टम्—"निरन्ध्र तमिस्रा" इति। निर्गतानि रन्ध्राणि यस्याः सा नीरन्ध्रा। अत्र रेफयोरेकस्य लोपे क्षतिपूरणार्थमिकारस्य दीर्घो भवति।

---

## सौवर्णं प्रस्तरकरकम्

The biggest small car in the country.

देशे बृहत्तमं क्षुद्रधूमशकटम्।

# छात्रहितैषिणी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## नूनम्

ऋग्वेदे श्रूयते [ १।१३।६ ]—

वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः।
अद्या नूनं च यष्टवे ॥

इति। अत्र भाष्यकृता सायणाचार्येणोक्तम्—अद्य अस्मिन् दिने नूनम् अवश्यं यष्टवे यष्टुम्। चकाराद्दिनान्तरेष्वपीति द्रष्टव्यम्। इति।

परं नूनंशब्द ऋग्वेदे क्वाप्यवश्यमित्यर्थे न प्रयुज्यते। नूनमित्यधुनार्थकः। आवेस्तायाम् nūrəm, लातीन्-भाषायां च nunc, ग्रीसीयभाषायां च nūn इति समानार्थका उपलभ्यन्ते। अत एव—न नूनमस्ति न श्वः इति श्रुतिः न नूनमस्त्यद्यतनं नो एव श्वस्तनमिति व्याख्याता यास्केन। प्रकृते मन्त्रेऽद्यशब्दप्रयोगात् नूनमित्यस्यार्थः—अदूरे भविष्यति। अत एव वेङ्कटमाधवेनोक्तम्—अद्य च श्वश्च यागायेति। माधवेनाप्युक्तम्—अद्य च श्वश्चेति। यत् पुनः स्कन्दस्वामिनोक्तं नूनशब्दोऽत्र समुच्चयार्थचशब्दश्रुते-रद्येत्येतेन च समुच्चयार्थस्य योग्यत्वात् पुराशब्दार्थे। अद्य च पुरा च इदानीं च पूर्वस्मिंश्च काल इत्यर्थ इति, तन्न समीचीनम्, नूनशब्दस्यान्यत्र तादृशार्थानुपलम्भात्।

कियात्या यत् समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् [ १।११३।१० ] चकार च कृणवन्नूनमन्या यानि ब्रुवन्ति वेधसः सुतेषु [७।२६।३] इत्यादिष्वपि अदूरे भविष्यतीत्यर्थः स्फुट एव।

वेदे नूशब्दोऽप्यधुनार्थकः, स चाङ्गल nowशब्दस्य सनाभिः।

[ An amusing instance of verbal degradation is afforded by a little group of words which should mean 'instantly', but to which the procrastinating habit of mankind has attached an implication of delay. *Soon* is the Anglo-Saxon word for 'immediately'. *By and by* once meant the same thing, and so did *presently* and *directly*. All four have fallen off in promptitude. *Words and their Ways in English Speech*, p. 292. ]

## असश्चतः

सच-धातोरर्थः—अनुगमनम्। अत एव षच समवाये इति धातुपाठकारः। लातीन् sequi ग्रीक हेपोमाइ-प्रभृतयोऽनुगमनार्थका धातवोऽस्य सपिण्डाः। अस्मादेव संस्कृतसचिवशब्दो निष्पन्नः। अस्मादेव धातोः कृतद्विर्वचनात् सश्चच्छब्दो निष्पन्नः, तस्य

चार्थः—अनुसरणकारी (pursuer), शत्रुः। शतृप्रत्ययान्तोऽप्ययं शब्दः कृतद्विर्वचन इति प्रथमैकवचनेऽस्य रूपं भवति सश्चदिति न पुनः सश्चन्निति। नास्ति सश्चद् यासां ता असश्चतः। नञ्सुभ्यामिर्द्युत्तरपदान्तोदात्तत्वम्। प्रतिद्वन्द्विरहिताः, निरन्तरायाः, अक्षोभ्या इति यावत्। सश्चच्छब्दो विशेषार्थक इति बहवः। एवं च "न विद्यन्ते सश्चन्तो गच्छन्तो येषु प्राग्वंशादिषु तेऽसश्चतः" इत्यत्र सश्चन्तः-पदं चिन्त्यमिति प्रतिभाति।

---

## कुमारदेष्णाः

हरिपदमहोदयाय केनचन मित्रेण जयपुरतः काचनातिमनोरमा यष्टिरुपायनीकृता। एकदा यष्टिं गृहीत्वासौ दूरवर्तिनमापणं गतः, प्रत्यावर्तनावसरे यष्टिस्तेन सर्वथा विस्मृता। व्यतीतासु कासुचिद्धोरासु पाणी रिक्त इव प्रत्यभात्, ततश्चापणे रक्षिता यष्टिरिति संस्मृत्य हरिपदमहोदय आपणं गत्वापणिकात् तमलभत। ततश्च तस्मै कृतज्ञतां निवेद्य प्रत्यागच्छन् गृहसमीपवर्तिन्यां विपण्यां मोदकान् व्यक्रीणीत। ततश्च गृहीतमोदकः सदनं प्रत्यावर्तमानः पुनरपि यष्टिं हारितामपश्यत्। तदानीं शकटैर्मार्गमवरुद्धमासीत्। द्वित्रनिमेषानन्तरं विपणिं गत्वाशृणोत्, अपरेण केनापि पुरुषेण मदीयेयं यष्टिरित्याख्याय तां यष्टिं गृहीत्वा प्रस्थितमिति। अहो परिहासो दैवस्य! प्रथमवारे पञ्चभ्यो होराभ्योऽनन्तरं लब्धा यष्टिर्द्वितीयवारे पुनः पञ्चभ्यो निमेषेभ्योऽप्यनन्तरं न लब्धा। यथा कुमाराः कस्मैचन किमपि प्रदाय पुनरात्मसात्कुर्वन्ति, दैवमप्येवं विदधाति।

---

## त्वत् त्व

सर्वादिगणे [ १।१।२७ ] त्वत् त्व नेम सम सिमेति पठ्यते। अत्र शब्दकौस्तुभे भट्टोजिभट्टः—त्व त्व इति द्वावप्यदन्तावन्यपर्यायौ। तत्रैक उदात्तः परोऽनुदात्तः। एतं त्वं मन्ये दशपुत्रमुत्सम्* इत्युदात्तस्य प्रयोगः। उत त्वः पश्यन् [ऋ०सं०१०।७१।४] इत्यादिरनुदात्तस्येति विवेकः। केचित्तु त्वदिति तान्तमेकं पठन्ति। तथाच जयदेवः प्रायुङ्क्त—त्वदधरमधुरमधूनि पिबन्तम् [ गीतगोविन्दे ] इति। त्वतोऽन्यस्या अधर इति षष्ठीतत्पुरुषो न तु तवाधरस्त्वदधर इति। पश्यति दिशि दिशि रहसि भवन्तम् इति पूर्ववाक्येन सहानन्वयापत्तेः। अनुदात्तश्चायम्। त्वत्त्वसमसिमेत्य-

* एतं त्वं मन्ये दशयन्त्रमुत्सम् इत्यग्वेदीये खिलसूक्ते [ ६।४५।१ ] उपलभ्यते।

सुचानि [ फि० सू० ४।१० ] इति फिट्सूत्र त्। तथा च प्रयुज्यते—स्तरीरु त्वद् भवति सूत उ त्वदिति [ ऋ० सं० ७।१०१।३ ]। त्वदिति [ तकारान्तः ] सर्वनामसु पठितोऽनुदात्तोऽयमन्यपर्याय इति तद्व्याख्यायां वेदभाष्यकाराः। इह प्रागुक्तरीत्योदात्तानुदात्तयोरकारान्तयोरनुदात्तस्य तकारान्तस्य च प्रामाणिकत्वं निर्विवादमेव। गणपाठे परं विप्रतिपत्तिः। तत्राप्यनुदात्तस्याकारान्तस्य गणपाठे न संशयः। उतो त्वस्मै तन्वम् [ ऋ० सं० १०।७१।४ ] इत्यादिप्रयोगात्। अवशिष्टयोर्मध्ये कतरस्य गणे पाठ इति तु संशयितम्, उदाहृतप्रयोगाणां तत्रौदासीन्यात्। तस्मात् तान्तस्याकजादिकमुदात्तस्य वा स्मायादिकं क्वचिच्छाखायां प्रयुज्यते न वेति विभाव्य तत्त्वं निर्णेयं बहुश्रुतैरिति दिक्।

वस्तुतस्त्वाद्यस्य तान्तच्छेद एव युक्तः। अन्यथा ऐक्ष्वाकशब्द इव स्वरसर्वनाम्ना एकश्रुत्योभयसंग्रहसम्भवात् त्वशब्दमेकमेवापठिष्यदिति ध्येयम्। त्वे वसूनि [ ऋ० सं० ६।५।२,८।७८।८ ] त्वे रायः [ ऋ० सं० १।१६९।५, वा० स० ४।२२ ] इत्यादयस्तु शेप्रत्ययान्तस्य युष्मदः प्रयोगो न तु त्वशब्दस्य, पदकारैः प्रगृह्यत्वप्रयुक्तस्येतिशब्दस्य प्रयोगादिति स्थितं वेदभाष्ये। ( पृः २१२-२१३ ) इति।

---

## इक्श्तिपौ धातुनिर्देशे [ ३।३।१०८।२ ]

भाष्यम्। इक्श्तिपावित्येतौ प्रत्ययौ धातुनिर्देशे वक्तव्यौ। पचेर्ब्रूहि। पचतेर्ब्रूहि।

प्रदीपः। बहुलवचनाच्च क्वचिन्न भवति। श्तिपः शित्करणादकर्तृवाचिन्यपि तस्मिञ्छबादयो भवन्ति। यद्यपि क्वचिद् भवति। यथा विभाषा लीयतेरिति [६।१।५१] अत्र हि लीलीङोर्यका श्तिपि निर्देशः कृतः। श्यनि तु लीङ एव ग्रहणं स्यान्न तु लिनातेः।

उद्योतः। क्वचिन्नेति। भुवो वुगित्यादौ [ ६।४।८८ ]। शित्करणादिति। शित्करणस्य पिबाद्यादेशविधानेन चारितार्थ्यादिदं चिन्त्यम्। तस्मान्निर्देशेनैव विकरणः साध्यः। भाष्ये पचेरिति। कर्मणः शेषत्वविवक्षया षष्ठी। धात्वर्थनिर्देशेऽप्येतौ बाहुलकात्। अत एवेक्षतेर्नाशब्दम् [ ब्र० सू० १।१।५ ] आहौ प्रभूतादिभ्यः [४।४।१।२] गच्छतौ परदारादिभ्यः [ ४।४।१।४ ] इति प्रयोगाः सङ्गच्छन्ते।

टिप्पणिः। चिन्त्यमिति। शबादय इत्यादिपदेन पिबाद्यादेशानामपि संग्रहान्न न्यूनता प्रदीपे। न हि घटायोन्मीलितं चक्षुः पटं न पश्यति इति न्यायेन शित्करणसामर्थ्याद् भवतेः [७।४।७३] इत्यादौ शप इव पिबतेरित्यादौ [७।४।४]

णे का नो हानिः ? किं च इक्श्तिपौ नैव कर्तृवाचकौ, अश्तेरीत्युपादानात्, नापि ववाचकौ, धात्वर्थनिर्देशे इत्यनुवृत्तावपि धातुनिर्देश इत्युपादानात्। किन्तु धातु-क्रानुपूर्वीविशिष्टधातुस्वरूपपरतायामेव भवत इति पचेर्ब्रूहीत्यस्य पचधातोर्ब्रूहीत्यर्थः, गाणीति शेषः। एवं च भवतेरः [ ७।४।७३ ] इत्यत्र भवतिशब्दो भूधातुपर एवेति वकर्मकर्तृप्रत्यये बभूवे अनुबभूवे बभूवेत्यादिस्थले सर्वत्रैवाकारः सिद्धो भवतीति ाध्यम्।

तस्मान्निर्देशैरेव विकरणः साध्य इति। निर्देशैरेव विकरणसाधनवत् पिबाद्यादेश-ाधने का तव हानिः ? नहि निर्देशैर्विकरणा एव साध्या न पिबाद्यादेशा इति प्रभु-क्यमस्ति। तस्माच्छित्करणात् तन्निमित्तककार्यजातं विकरणरूपमादेशरूपं च साधनीय-ति प्रदीपाशयः सम्यगेव। नागेशभट्टस्तु

नवीनेभ्योऽप्युत्तमत्वं प्रायः ख्यापयितुं नवः।
तदाशयमबुद्ध्यैव खण्डने यतते मृषा॥

ति रीतिमनुसरतीति दाधिमथाः।

काशिका। इक्श्तिपौ धातुनिर्देश इति वक्तव्यम्। भिदिः छिदिः। पचतिः ठतिः।

काशिकाविवरणपञ्जिका। ककारः कित्कार्यार्थः। तेन [ विदिभिदिच्छिदीनां लघूपध-गुणो न भवति। शकारः शित्कार्यार्थः। तेन ] पचतिरिति सार्वधातुकनिबन्धनः शब् भवति। ननु च कर्तृवाचिनि सार्वधातुके शब् विधीयते। न चात्र कर्ता प्रत्ययार्थः, त् कुतः शपः सम्भवः ? सार्वधातुकसंज्ञार्थशित्करणसामर्थ्याद् अकर्तृवाचिन्यपि सार्व-धातुके शब् भविष्यति। अन्यथा हि शित्करणमनर्थकं स्यात्। यद्येवं यगपि स्यात्। अनभिधानान्न भविष्यति।

पदमञ्जरी। धातुनिर्देश इति। धात्वनुकरण इत्यर्थः। बहुलवचनाच्च क्वचिन्न भवति। गुप्तिज्किद्भ्यः सन् [ ३।१।५ ] मान्बधदान्शान्भ्यः० [ ३।१।६ ] इति। श्तिपः शित्करणसामर्थ्यादकर्तृवाचिन्यप्येतस्मिञ्छबादयो भवन्ति। एवमभावकर्मवाचि-न्यपि क्वचिद् यगपि भवति। यथा विभाषा लीयतेरित्यत्र [ ६।१।५१ ] लीलीङोरेका निर्देशः कृतः। श्यनि तु लीङ एव ग्रहणं स्यान्न तु लिनातेः। कथं पुनः शित्करणस्य सामर्थ्यं यावता पिबतिजिघ्रतिरित्यादौ पिबाद्यादेशार्थं ग्लायत्यादावात्व-प्रतिषेधार्थं च शित्करणं स्यात्। एवं तर्हि उपसर्गात् सुनोति-सुवति-स्यति० [८।३।६५] विभाषा लीयतेः [ ६।१।५१ ] तनोतेर्ण उपसंख्यानम् [ ३।१।१४०।१ ] ध्यायतेः सम्प्रसारणम् [ ३।२।१७८।४ ] चेत्येवमादिनिर्देशाच्छबादयो भविष्यन्ति।

भाषावृत्तिः। पचिः। याचिः। यातिः। करोतिः। यजेर्वपेरित्युच्चारणार्थ इकारः।

प्रक्रियाकौमुदी। पचिः। नन्दिः। अदिः। भवतिः। दीव्यतिः।

प्रसादः। धातुनिर्देशो धातुत्वकरणम्। बहुलात् क्वचिन्न गुप्तिज्किद्भ्यः सन् [३।१।५] इति। शकारः सार्वधातुकार्थः। शित्करणसामर्थ्यादकर्त्रर्थत्वेऽपि शबादिः।

सिद्धान्तकौमुदी। इकृश्तिपौ धातुनिर्देशे। पचिः पचतिः।

प्रौढमनोरमा। धातोर्निर्देशोऽनुकरणम्। बहुलमित्यनुवृत्तेः। क्वचिन्न। गुप्तिज्किद्भ्यः सन्। पचतिरिति। उपसर्गात् सुनोतिसुवति० ध्यायतेः सम्प्रसारणं चेत्यादिनिर्देशादकर्तृवाचिन्यपि परे शबादयः। एवं भावकर्मवाचिन्यपि क्वचिद्यक्। विभाषा लीयतेरिति यथा। तत्र हि लीलीङोर्यका निर्देश इत्युक्तम्। यत्तु प्राचा शित्करणसामर्थ्याच्छबादय इत्युक्तं तन्न पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात्।

शब्दरत्नम्। बहुलमिति। अत एव क्वचिद्धात्वर्थ निर्देशेऽपि पृच्छतौ सुस्नातादिभ्य इति वार्त्तिकप्रयोगात्। अत एवेक्षतेर्नाशब्दमिति व्याससूत्रं सङ्गच्छते। आत्त्वनिवृत्त्या चेति। इट् तु तितुत्रेत्यनेन [७।२।९] सुशकवारण इति भावः। इकः कित्त्वेऽपि वचिस्वपीत्यादौ [६।१।१५] न सम्प्रसारणम्, प्रसिद्धत्वेन शब्दातिरिक्तार्थपरेष्वेव तत्प्रवृत्तेरिति बोध्यम्। इगित्यत्र चर्त्वभूतो गकारः पुनर्निर्दिष्ट इत्यन्ये। (क्रमशः)

---

# श्रद्धाजाड्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥

इत्यृचो भाष्ये दृश्यते—युजश्चित् स्वकीयसख्युरपि अन्तरं कृष्वासन्नं कुरु। यथा वचनं तस्य प्रियं मन्यसे तद्वदस्मदीयस्तुतिष्वपि प्रीतिं कुर्वित्यर्थः। [सा० भा० १।१०।९] इति। अत्र स्वकीयसख्युरिति पाठश्च्युतसंस्कृतिदोषमावहति, राजाहःसखिभ्यष्टजिति प्रसिद्धतमेन सूत्रेण समासान्तस्य टचो विधानात्। अत्र सख्युरिवेति सुसमीचीनः पाठः पुण्यपत्तनपुस्तके पत्रस्य पाददेशे पाठान्तररूपेण सन्निविष्टः, मूले पुनः Max Müller-महोदये श्रद्धातिशयात् प्रामादिक एव पाठः समादृतः। कलिकाताविश्वविद्यालयतः प्रकाशितस्य श्रौतपाठस्य परिशोधिते द्वितीयमुद्रणेऽपि गतानुगतिकतया स एव पाठः

स्वीकृतः। भाष्यकृतां मतेन चिदत्रौपमार्थीयः। यथेत्यादिना च स एवार्थः स्फुटीकृतः। अत एव स्वकीयसख्युरपीति पाठः प्रामादिकश्चासमञ्जसश्चेति हेय एवेति प्रतिभाति।

---

# कठोपनिषद्रहस्यम्

श्रीमद्भिस्तैत्तिरीयब्राह्मणभागः कठोपनिषदो मूलमितिशिरोलेखेन सव्याख्यो मुद्रितः। तत्र मीमांसकैरुपनिषदामपि ब्राह्मणत्वेन स्वीकारात्तयो र्मूलमूलिभावो न भवितुमर्हति। वर्णनसाजात्यात्तथा भवतामुक्तिरभिप्रेता भवेत्।* भाष्यव्याख्याने च पूरितबह्वंशस्य कठोपनिषदु पलम्भोऽप्युक्तकल्पनापोषकः। तत्र काश्चन शङ्काश्चेत्समाधीयन्ते सम्यगिव स्यादिति ता उल्लिख्यन्ते। प्रथमतोऽत्र ग्रन्थे प्रतिवेलं हेत्यस्याम्रेडनं किमभिप्रायकम्? उशन्निति दातुर्नाम भवितुमर्हति न वा? नचिकेता इति साभिप्राया संज्ञा भवितुमर्हति न वा? कुमारशब्दोऽवस्थाविशेषबोधको वान्यार्थको वा? आद्ये तस्यामवस्थायां कथं श्रद्धावेशः? अष्टमे वर्षे गर्भाष्टमे वा ततोऽपि पूर्वं वा फलविशेषाभिप्रायेणोपनयनयोग्यता। उपनयनोत्तरं शौचाचारादीनां शिक्षेति कथं पूर्वं श्रद्धावेशः? अनुकरणप्रियत्वाद् बालस्य पित्रा भोग्यवस्तुजातस्य दानेऽपि स्वशरीरस्यादानेन बालेनापि कथं स्वस्य देयत्वकल्पना देयत्वबोधने सकृद्वचनेन निष्पन्ने किमिति तदाम्रेडनम्? तत्रापि किमिति त्रिरेव न ततोऽधिकं वारम्? पुत्रस्य प्रश्ने पितुरुक्तिमात्रमलं तत्र पितुः परोत इति विशेषणस्य कापेक्षा? यत्त भाष्यकृता बाले तस्मिन् धूर्तत्वविज्ञानं पितुरुक्तं तत् कथं समञ्जसम्? अधिकवारं प्रश्नकरणमात्रेण पितुः कोपेन तस्य परया काष्ठया मृत्यवे दानेन कथं शौचाचारशिक्षणात्पूर्वमाचारादिविज्ञानाभावेनेताद्दशानिष्टकरणेन पितृत्वं पितरि? तत ऊर्ध्वमकस्मात्कथं वाचो देव्या अत्र प्राप्तिर्निर्निमित्ता तस्या अनुग्रहपरता च? तया तत्र परस्तात्कर्तव्यविशेषनिर्देशेन तथानुष्ठाने प्रोषितो मृत्यू रात्रित्रयपर्यन्तमेवानुपस्थितो न ततः पूर्वं परस्ताद्वोपस्थितः। अनशने दिनत्रयापेक्षणे साक्षाद्दिनार्थकशब्दस्य ग्रहणमकृत्वा रात्रिशब्देन तदुपलक्षणे किं बीजम्? किञ्च वाग्देव्या प्रश्नप्रतिवचनप्रकारविशेषनिर्देशेऽपि परस्तान्मृत्युना प्रीतेन भीतेन वा वरवरवरणप्रार्थनायां कथमेतेन बालेनोक्तरूपा वरा वृताः? कठवल्ल्यां तृतीयवरार्थमुपच्छन्दितोऽपि नचिकेता नानाविषयप्राप्तिप्रदर्शनेन हित्वा सर्वं मरणोत्तरमात्मनोऽस्तित्वादिशङ्कासमाधानं देवैरप्यविज्ञेयं वृतवान्। एतेन वर्णनप्रकारेण कुमारशब्दस्य वयोऽवस्थापरत्वं न युज्यते तत्का प्रतिपत्तिरत्रेति।

---

* एवमेव। मञ्जूषासम्पादकः।

स्वर्गताप्पाशास्त्रिणां

# लावण्यमयी

## सप्तमः परिच्छेदः

## *लावण्यमयी च सुधाकरश्च*

यदेतदुपवर्णितपूर्वमस्माभिरुद्यानं तत्र किल प्राथमिकात् समागमतः प्रभृति प्रत्यहं नियतसमयमेव समागत्य लावण्यमयीसुधाकरौ सप्रणयं परस्पर साक्षात्कुरुतः, वितनुतश्च शैशवोचितास्तास्ताः क्रीडाः। यद्यपि द्वादशवर्षदेशीया सरलतमस्वभावा श्रीमती लावण्यमयी नासीत् सर्वथैवानभ्यन्तरा यौवनरसस्य तथापि किमपि किमप्यनभिज्ञत्वमेवाभवद् विषयेऽस्मिन्नेतस्याः। संस्पृष्टयौवनोऽपि षोडशवर्षदेशीयः श्रीमान् सुधाकरो नासीत् परिचितो विषयवासनापरपर्यायायाः पशुवृत्तेः। तत एव चासीदन्तरङ्गमनयोरव्याजेन चालौकिकेन च प्रेम्णा समुल्लसितम्। विललास चात्र मधुरिमानुगामि सारल्यं सौन्दर्यानुवर्ति सौजन्यं प्रणयनिकषानुसारिणी प्रीतिर्व्रीडाविनाभूता क्रीडा क्रीडायाश्च सहचारिणी व्रीडा। उभयोरपि सुविशुद्धमिव सुरस्रोतस्विनीसलिलम् अविज्ञातदुरितसम्पर्कम् अविस्पृष्टजघन्याचरितम् आसीद्धृदयम्। न खल्वासीद्विदितमेतयोः कुलं पारस्परिकम्। तथाप्यासीदेवानयोर्गरीयसी प्रीतिः। निसर्ग एव ह्यसौ प्रीतेर्यदियमविचार्यैव कुलशीलादिकम् आन्तरेणैव केनापि हेतुना प्रेर्यमाणा प्रादुर्भवति। प्रादुर्भूता च विनयत्यात्मनो गोचरे पतितम्। न चाप्यसौ केनापि प्रतिबन्धकेन विनिरोद्धुं शक्यते। यत्तु क्वापि समवेक्ष्यते प्रतिरोध एतस्याः स खलु विद्योतयत्येतस्या नैसर्गिकेतरताम्। दुर्निवारा हि नैसर्गिकी प्रीतिः।

इदानीं पुनर्नातिप्रगल्भयोरपि प्रणयपरिप्लुतान्तरयोरनयोः कुमारकुमारिकयोः संलापसुधारसं प्रियपाठकमहोदयेभ्य उपहर्तुमिच्छामः। आस्वाद्यतां तावदयं विज्ञातास्वादैर्यथेष्टममीभिः।

कस्मिंश्चित् खलु दिवसे समुपस्थिता प्रमदवनं लावण्यमयी कस्यापि निरन्तरनिचितकुसुमसमुल्लसितस्य बकुलतरोर्मूले प्रच्छायशीतले शिलातले समुपविश्य निजकरकमलावचितानां नानाविधप्रसूनानां मालाश्च हारांश्च स्तवकांश्चैकतानेन मनसा प्रथ्नती शनैः शनैश्चान्तरान्तरा श्रवणमधुराणि गीतान्यावर्तयन्त्यासीत्।

अस्मिन्नेवावसरे समवचितकुसुमः सुधाकरोऽप्यविदितचरणविन्यासं शनैः शनैः पृष्ठतोऽस्या भूत्वावस्थितः। कुसुमग्रथनकर्मणि नितान्तमेव प्रसक्तमानसया तु नायमभिलक्षितः श्रीमत्या लावण्यमय्या। अतिक्रान्तायां पुनः कियत्यांचित् कालकलायां शनैः

शनैः सन्निधाय पिदधेऽस्या नयनसरसिजद्वितयम् अवितर्कितमेवात्मनः पाणिपल्लवद्वितयेन श्रीमान् सुधाकरः। लावण्यमयी तु पिहितमात्र एव नयने प्राह, सुधाकरः सुधाकरः। एषोऽसि विज्ञातः। मुञ्चेदानीं मे नयनद्वितयम्। इति।

तदाकर्ण्य विहसन्नुन्मुच्य तस्या नेत्रद्वन्द्वं पुरस्ताद् भूत्वा प्रोवाच सुधाकरः, पश्य तावत् कियन्ति वा समानीतानि मया त्वदर्थमेतानि कुसुमानीति। अभिधाय चेत्थं नानाविधान्यस्यै कुसुमान्यर्पयामास। अवेक्ष्य चैनं प्रसूनराशिं प्रसन्नान्तरङ्गा श्रीमती लावण्यमयी करे गृहीत्वा सुधाकरं प्राह, किमित्येवमवस्थानेनायास्यत आत्मा? इतस्तावदास्यतां मत्सविधे। इति।

सुधाकरः। कुतोऽत्रैतावानवकाशः?

लावण्यमयी। भूयान्ननु विद्यते।

इत्यभिधाय च सकरग्रहमुपावेशयदात्मनः समीपे सुधाकरं लावण्यमयी।

लावण्यमयी। पश्यतु महाभागो भवदर्थमेव मया ग्रथितान् कुसुमहारानेतान्।

सुधाकरः। अहो रामणीयकमेतेषाम्! अहमपीदानीं श्रीमत्याः शिरोविभूषणोचितं कुसुमजालकं ग्रथ्नामि।

लावण्यमयी। अलमलं मदर्थमात्मानमायास्य*।

सुधाकरः। साधु भद्रे! कथं वा न गुम्फयिष्यामि?

इत्येवमभिधाय च पुनरपि समासक्तौ कुसुमग्रथनकर्मण्येतौ। तदनु पुनः सुधाकरः किञ्चिदिव समुदञ्चितस्मितः प्रावोचत, भद्र लावण्यमयि! कच्चित् परिणेष्यति मां भवती? इति।

लावण्यमयी। कोऽत्र सन्देहः? न जाने कोऽयं परिणयो नामेति। नाममात्रश्रवणेऽपि पुनरस्य प्रसीदतितमां मे चेतः। अवश्यं परिणेष्यामि त्वामेव।

सुधाकरः। अथ यदि पिता तेऽन्यस्मै प्रदानं सङ्कल्पयेत्?

लावण्यमयी। अलमन्यथा सम्भाव्य*। अहं हि परमं प्रेमास्पदं तातस्य। स हि यद्यन्मया प्रार्थ्यते तत्तदवश्यमेव प्रयच्छति। यथा च मयाभिधीयते तथा विदधाति। तत् कथं नाम प्रार्थितोऽपि मया नानुमन्येत श्रीमता साकं ममोद्वाहम्?

सुधाकरः। अपि नाम दद्यादेवं प्रार्थयितुमवसरं ते व्रीडा?

लावण्यमयी। कैव नामात्र व्रीडा? अपि नाम भवत्युद्वाहेऽप्येषा? आस्तां तावदिदम्। किन्तु भद्रमुख! किमिति वा नोपाव्रजसि नः सदनम्?

सुधाकरः। आगमिष्यामि।

लावण्यमयी। कदा?

सुधाकरः। यदा ते पाणिं ग्रहीष्यामि।

लावण्यमयी। तदद्यैव तावत् पितरं विज्ञापयिष्यामि विधीयतां ममोद्वाहोऽविलम्बितमेव श्रीमता सुधाकरेणेति येन सत्वरमेवागमिष्यति सदनमस्मदीयं श्रीमान्।

सुधाकरः। भद्रे! यदि दैवदुर्विपाकात् पितान्यस्मै प्रतिपादयेत् तदा किं वा प्रतिपत्स्यते भवती?

लावण्यमयी। (सावधारणम्) मा मैवम्। न खल्वेवं भविष्यति।

सुधाकरः। तथापि यदि घटेत?

लावण्यमयी। तदा खलु प्राणानेवात्मनः परित्यक्ष्यामि।

सुधाकरः। विहाय प्राणपरित्यागसाहसं कच्चिन्निगूढमेवानुसरिष्यसि माम्? वरं ह्येतत् प्राणपरित्यागात्।

निशम्यैतत् क्षणमिव तूष्णीम्भूता लावण्यमयी समवलम्ब्येव नैराश्यं प्रत्याह—कथं वा पितरं परित्यक्तुं प्रभवेयम्? इति।

सुधाकरः। न पुनरत्र गत्यन्तरं पश्यामि।

लावण्यमयी। न खलु कथञ्चिदपि प्रतिकूलमाचरिष्यति मे तातः।

इत्येवं संलप्य चोभाभ्यां मुक्ताः परस्परयोः कण्ठे कुसुममालिकाः। वितीर्णौ च परस्पराभ्यां हृदयहारिणौ गुच्छौ।

यत् पुनरुल्लासेदानीं लावण्यमय्या लावण्यं न खल्वेतदुपवर्णयितुं प्रभविष्यति लेखन्यस्माकम्। अन्ततः पुनर्गाढं परिष्वज्य निष्क्रमितुमुपाक्रमेतामुद्यानादेतौ, प्रत्यासन्ना हि तदानीं तमिस्रेति।

लावण्यमयी। श्वः पुनरनतिपातितकालमेवोपागच्छतु श्रीमान्।

सुधाकरः। आगमिष्यामि। अनतिपात्यैव समयमागमिष्यामि।

इत्येवं विहितसंलापकौतुकौ स्वं स्वमालयं प्रातिष्ठेतां लावण्यमयीसुधाकरौ।

इति लावण्यमय्यां सप्तमः परिच्छेदः।

---

# निरुक्तवृत्तिविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

संस्कृतभाषायां ये तावद् व्याख्याग्रन्था विद्यन्ते तेषु दुर्गाचार्यविरचिताया निरुक्तवृत्तेरुत्कर्षः सर्वेषामेव सम्मतः। सुसमीचीनायामप्यस्यां वृत्तौ मानुष्यकसुलभप्रमादाद्

लेपिकराणामनवधानाद्वा क्वचिदसामञ्जस्यं परिलक्ष्यते। तथाहि "तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। इन्द्रमिद्गाथिनो बृहदि"ति निरुक्तग्रन्थस्य [ ७।२ ] वृत्तौ दृश्यते—

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत ॥

...हे गाथिनः सामगाः इन्द्रमित् इन्द्रमेव यूयं बृहता साम्ना अभिष्टुत। यूयमपि हे होतारः अर्किणः अर्केभिः अर्कैः ऋग्भ्यैर्मन्त्रैरिन्द्रमेवाभिष्टुत। यूयमपि च हे अध्वर्यवः इन्द्रमेव वाणीः वाणीभिः वाग्भिर्यजुर्मयीभिः अनूषत अभिष्टुत। द्वितीयायामेतदुदाहरणम्। इति।

अत्रेदमवधेयम्। मूले गाथिनोऽर्किणश्च मध्योदात्ते पदे, अतस्तयोरामन्त्रणपदत्वं कथमपि न सम्भवति, किञ्च प्रथमपुरुषैश्चाख्यातस्येति यास्कवचनोदाहरणे मध्यमपुरुषत्वं कल्पयितुं न युज्यते। अत एव स्कन्दस्वामिना निरुक्तभाष्यटीकायां व्याख्यातम्—इच्छब्द एवार्थे। इन्द्रमेव गाथिनः। गेयत्वाद् गाथानि सामानि। तद्वन्त उद्गातारः। बृहत्। अत्र तृतीयाया लुक्। बृहता बृहन्नाम्ना साम्ना महता वा। इन्द्रमेवार्केभिरर्कैर्मन्त्रैर्ऋगाख्यैः। अर्किणो मन्त्रवन्तो होतार इत्यभिप्रायः। इन्द्रमेव वाणीः। द्वितीया व्यत्ययेन तृतीयार्थे। वाणीभिर्वाग्भिर्यजुराख्याभिरध्वर्यवः। अनूषत। णु स्तुतौ इत्यस्य रूपम्। एताभिः स्तुवन्तीत्यर्थः।

गाथिनः सामगाः इन्द्रमित् इन्द्रमेव बृहता साम्ना अभिष्टुतवन्तः ( यद्वा अभ्यष्टुवत, यद्वा अभिष्टुवते )। अर्किणः होतारः अर्केभिरर्कैर्ऋग्मयैर्मन्त्रैरिन्द्रमेवाभिष्टुतवन्तः ( यद्वा अभ्यष्टुवत, यद्वा अभिष्टुवते )। अध्वर्यव इन्द्रमेव वाणीः वाणीभिः अनूषत अभिष्टुतवन्तः ( अभ्यष्टुवत, यद्वा अभिष्टुवते। )

इति पठ्यते चेत्सम्यक् स्यात्।

---

## उपदेशरत्नम्

गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा।
न विचारमयं चेतो यस्यासौ मृत उच्यते ॥

योगवासिष्ठम्

---

## विशेषतो द्रष्टव्यम्

मुद्रायन्त्रस्य पञ्चाङ्गमुद्रणकर्मणि व्यापृतत्वान्मासेऽस्मिन् षोडशपृष्ठात्मिका मञ्जूषा प्रकाश्यत इति विषीदामः।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥


# मञ्जूषा

| May, 1960. | १८८२-शकीय-ज्यैष्ठस्य १४श-वर्षस्य नवमी संख्या | Vol. XIV No. 9 |
|---|---|---|


## श्रद्धाजाड्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु।
तवेद्धि सख्यमस्तृतम्॥

इत्यृचः (१।१५।५) मुद्रिते सायणभाष्ये दृश्यते—ब्राह्मणात्। ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते। स च पुँल्लिङ्गे शेषनिघातेनानुदात्तादिः। तस्य संबंध्युत्तष्टश्चमसः। स च तस्यैवावयववन्नियत इत्यवयवविवक्षायामनुदात्तादेरञ्। पा० ४.२.४४। तेन ञित्त्वादाद्युदात्तश्चमसपरोऽत्र ब्राह्मणशब्दः। इति। Max Müller-महोदयेनैवं मुद्रापितम्। पुण्यपत्तनपुस्तके तस्यैव पदाङ्कोऽनुसृतः, केवलं पुँल्लिङ्गे इत्यत्र पुंलिङ्गे इति मुद्रितम्। कलिकाताविश्वविद्यालयतः प्रकाशितस्य श्रौतपाठस्य द्वितीये परिशोधिते मुद्रणेऽपि Max Müller-महोदयस्यैव पाठः समादृतः। Max Müller-सन्निवेशितः सूत्राङ्कश्चाभ्यामेवात्मसात्कृतः।

"स च पुँल्लिङ्गे शेषनिघातेनानुदात्तादिः" इत्यस्य कोऽर्थः—भेको वा भुजङ्गो वा गौरश्वः पुरुषो हस्ती वा? तस्य संबन्ध्युत्तष्टश्चमस इति

का चेयं वाचोयुक्तिः ? अनुदात्तादेरञ् ( ४।२।४४ ) इति सूत्रस्य प्रकृते को वोपयोगः ? किं वात्र विदितवेदितव्या विपश्चितो मन्यन्ते ?

"यस्य कस्य तरोर्मूलं येन केनापि मिश्रितम् ।
यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति ॥"

---

## आभाणकमाला

विद्यते स नहि कश्चिदुपायः सर्वलोकपरितोषकरो यः ।
सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ॥

One cannot please all people.

French. On ne peut à tous complaire.

न खलु कोऽप्यलं सर्वांस्तोषयितुम् ।

O poor man, if thou hadst all the eyes of Argus, the hands of Briarius, the wisdom of Solomon, with the riches of Midas, thou shalt never please all men.

अरे वराक ! देवराजस्य सर्वाणि नयनानि, कार्तवीर्यार्जुनस्य बाहून्, बृहस्पतेः प्रज्ञाम्, कुबेरस्य च सम्पदं चेल्लप्स्यसे तथापि न प्रभविष्यसि सर्वान् प्रीणयितुम् ।

There is no one thing which pleases all ; one man gathers thorns, another roses.

Latin. Non omnibus unum est quod placet : hic spinas colligit, ille rosas.

न खलु किमप्येकं वस्तु सर्वान् प्रीणयति । कोऽपि कण्टकान् सञ्चिनोति कोऽपि च कमलानि ।

Not even God can please all.

Greek. Oude Zeus pâsin areskei.

Latin. Ne Jupiter quidem omnibus placet.

न खलु परमेश्वरोऽपि प्रभवति सर्वान् प्रीणयितुम् ।

Who seeks to please all men each way,
And not himself offend,
He may begin his work to-day
But God knows where he'll end.

[illegible]न् प्रीणयितुं समीहते, आत्मनोऽपि विप्रियं कर्तुं न वाञ्छति, सोऽद्य स्वकर्मापक्रमत, परं परमेश्वर एव विजानाति कदा स समाप्स्यति ।

स्वर्गताप्पाशास्त्रिणां

# लावण्यमयी

## अष्टमः परिच्छेदः

## *समागता सरला*

अथ कस्मिंश्चिद्दिवसे समनुभवन् निद्रासुखं श्रीमान् रमेशचन्द्रमहोदयः स्वप्नकमप्यद्राक्षीत्। आसीच्च तत्रास्य नयनगोचरा शनैः शनैः पल्लवकोमलाभ्यां पाणिभ्यां चरणसरोरुहद्वितयमवमृद्नती निरर्गलं च निष्पतताऽनुबद्धधारेण बाष्पाम्बुना ग्लपयन्ती कपोलतलं मुहुर्मुहुश्च सगद्गदाक्षरं क्षमामभ्यर्थयमाना श्रीमती सरला। श्रीमतो रमेशमहोदयस्यापि बहोरेव कालाज्जीवितवल्लभां समवेक्षमाणस्य समुच्छलतेवानन्दपूरेण सातिशयमेव परिप्लावितं हृदयम्। आसीच्च बाष्पाम्बुजडा दृष्टिः। एवं स्वप्नमनुभवंश्चायं सुदीर्घतरं निशश्वास, उन्मुक्तनिश्वास एव च प्राबुध्यत। प्रबुद्धमात्रश्चावागच्छद् यदेतत्कालमेतावन्तमनुभूतं तदेतदशेषमपि स्वप्नगतमेवेति। किन्तु तदात्व एव कोष्णकोष्णाश्रुबिन्दुसम्पर्कमात्मनश्चरणयोः सन्दिहानः समभिलष्यंश्च भूतार्थमवगन्तुं चरणमात्मनः करतलेन पस्पर्श, अज्ञासीच्च नूनमश्रूण्येवैतानीति। अस्मिन्नेव च समये गर्भागारकोणाद् विनिर्गतः प्रस्फुरन्निव रुदितध्वनिरविस्पष्टतमोऽस्य श्रवणसरणिमारुक्षत्। तं पुनराकर्णयतो गृहीतमिव युगपदेव भीत्या च विस्मयेन च कुतूहलेन चान्तरङ्गमेतस्य। अप्राक्षीच्चासौ सावेगं कस्तावदत्रेति, न पुनरधिगतमत्र प्रतिवचनमेतेन। केवलं तु पुनरपि यथापूर्वं स्खलिताः कियन्तश्चित् कवोष्णकवोष्णा अश्रुबिन्दवश्चरणयोरेतस्य। ततस्तु प्रतिपत्तिमूढ इव किं जागर्मि किं वा स्वप्न एवायमिति नावगन्तुं प्रबभूव। सञ्जातसाध्वस इव च पुनरप्यप्राक्षीत् कः कस्तावदिति। न पुनरत्रापि प्राप्तं प्रतिवचनमेतेन। विज्ञातं पुनरेतेन येन केनाप्यत्र निःशब्दमेव रुदता भवितव्यमिति। निशम्य चेदं रुदितं झटिति समुत्थितः श्रीमान् रमेशमहोदयो गर्भागारद्वारमनुलक्ष्य गन्तुमारेभे। आसीत् किल कतिपयेभ्यो दिवसेभ्यो भीरोरिव प्रकृतिः श्रीमतो रमेशस्य। नासीत् किल पुरास्य पिशाचसत्तायां विश्वासः। किन्तु भूयोभूयोऽनुभूयमानैराश्चर्यैः सन्दिग्धमिवासीदिदानीं हृदयमेतस्य। अथ यावद् द्वारदेशमनुप्राप्तः प्रसारयति पाणिं कवाटमुद्घाटयितुं तावदेव तु पश्चादुपेत्य गृहीतः सन्निधाय केनापि सोऽयं पाणिरेतस्य। आदित एव साशङ्कं हृदयं तत्र च करे कोमलतरस्य कस्यापि करतलस्य स्पर्श इति नूनं महत्येवेयमिदानीमनर्थपरम्परा श्रीमति रमेशचन्द्रमहोदये समापतिता। वाचामगोचरं किलेदानीन्तनं पर्याकुलत्वमेतस्य। यावत् पुनः समाक्रान्तो भीत्यायमाक्रोष्टुं प्रवर्तते तावदेव यया गृहीतः पाणिः श्रीमतो रमेशमहाभागस्य सेयं युवतिः सकरुणं प्राह। आर्यपुत्र! कच्चिन्नाद्याप्यभिज्ञानम्? अपि नाम विस्मृतोऽयं जन आर्येण? इति।

का चेयं वाचोयुक्तिः ? अनुदात्तादेरञ् (४।२।४४) इति सूत्रस्य प्रकृते को वोपयोगः ? किं वात्र विदितवेदितव्या विपश्चितो मन्यन्ते ?

"यस्य कस्य तरोर्मूलं येन केनापि मिश्रितम् ।
यस्मै कस्मै प्रदातव्यं यद्वा तद्वा भविष्यति ॥"

---

## आभाणकमाला

विद्यते स नहि कश्चिदुपायः सर्वलोकपरितोषकरो यः ।
सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ॥

One cannot please all people.

French. On ne peut à tous complaire.

न खलु कोऽप्यलं सर्वांस्तोषयितुम् ।

O poor man, if thou hadst all the eyes of Argus, the hands of Briarius, the wisdom of Solomon, with the riches of Midas, thou shalt never please all men.

अरे वराक ! देवराजस्य सर्वाणि नयनानि, कार्तवीर्यार्जुनस्य बाहून्, बृहस्पतेः प्रज्ञाम्, कुबेरस्य च सम्पदं चेल्लप्स्यसे तथापि न प्रभविष्यसि सर्वान् प्रीणयितुम् ।

There is no one thing which pleases all ; one man gathers thorns, another roses.

Latin. Non omnibus unum est quod placet : hic spinas colligit, ille rosas.

न खलु किमप्येकं वस्तु सर्वान् प्रीणयति । कोऽपि कण्टकान् सञ्चिनोति कोऽपि च कमलानि ।

Not even God can please all.

Greek. Oude Zeus pâsin areskei.

Latin. Ne Jupiter quidem omnibus placet.

न खलु परमेश्वरोऽपि प्रभवति सर्वान् प्रीणयितुम् ।

Who seeks to please all men each way,
And not himself offend,
He may begin his work to-day
But God knows where he'll end.

यः सर्वान् प्रीणयितुं समीहते, आत्मनोऽपि विप्रियं कर्तुं न वाञ्छति, सोऽद्य स्वकर्मोपक्रमेत, परं परमेश्वर एव विजानाति कदा स समाप्स्यति ।

स्वर्गताप्पाशास्त्रिणां

# लावण्यमयी

## अष्टमः परिच्छेदः

## *समागता सरला*

अथ कस्मिंश्चिद्दिवसे समनुभवन् निद्रासुखं श्रीमान् रमेशचन्द्रमहोदयः स्वप्नकमप्यद्राक्षीत्। आसीच्च तत्रास्य नयनगोचरा शनैः शनैः पल्लवकोमलाभ्यां पाणिभ्यां चरणसरोरुहद्वितयमवमृद्नती निरर्गलं च निष्पतताऽनुबद्धधारेण बाष्पाम्बुना ग्लपयन्ती कपोलतलं मुहुर्मुहुश्च सगद्गदाक्षरं क्षमामभ्यर्थयमाना श्रीमती सरला। श्रीमतो रमेशमहोदयस्यापि बहोरेव कालाजीवितवल्लभां समवेक्षमाणस्य समुच्छलतेवानन्दपूरेण सातिशयमेव परिप्लावितं हृदयम्। आसीच्च बाष्पाम्बुजडा दृष्टिः। एवं स्वप्नमनुभवंश्चायं सुदीर्घतरं निशश्वास, उन्मुक्तनिश्वास एव च प्राबुध्यत। प्रबुद्धमात्रश्चावागच्छद् यदेतत्कालमेतावन्तमनुभूतं तदेतदशेषमपि स्वप्नगतमेवेति। किन्तु तदात्व एव कोष्णकोष्णाश्रुबिन्दुसम्पर्कमात्मनश्चरणयोः सन्दिहानः समभिलष्यंश्च भूतार्थमवगन्तुं चरणमात्मनः करतलेन पस्पर्श, अज्ञासीच्च नूनमश्रूण्येवैतानीति। अस्मिन्नेव च समये गर्भागारकोणाद् विनिर्गतः प्रस्फुरन्निव रुदितध्वनिरविस्पष्टतमोऽस्य श्रवणसरणिमारुक्षत्। तं पुनराकर्णयतो गृहीतमिव युगपदेव भीत्या च विस्मयेन च कुतूहलेन चान्तरङ्गमेतस्य। अप्राक्षीच्चासौ सावेगं कस्तावदत्रेति, न पुनरधिगतमत्र प्रतिवचनमेतेन। केवलं तु पुनरपि यथापूर्वं स्खलिताः कियन्तश्चित् कवोष्णकवोष्णा अश्रुबिन्दवश्चरणयोरेतस्य। ततस्तु प्रतिपत्तिमूढ इव किं जागर्मि किं वा स्वप्न एवायमिति नावगन्तुं प्रबभूव। सञ्जातसाध्वस इव च पुनरप्यप्राक्षीत् कः कस्तावदिति। न पुनरत्रापि प्राप्तं प्रतिवचनमेतेन। विज्ञातं पुनरेतेन येन केनाप्यत्र निःशब्दमेव रुदता भवितव्यमिति। निशम्य चेदं रुदितं झटिति समुत्थितः श्रीमान् रमेशमहोदयो गर्भागारद्वारमनुलक्ष्य गन्तुमारेभे। आसीत् किल कतिपयेभ्यो दिवसेभ्यो भीरोरिव प्रकृतिः श्रीमतो रमेशस्य। नासीत् किल पुरास्य पिशाचसत्तायां विश्वासः। किन्तु भूयोभूयोऽनुभूयमानैराश्चर्यैः सन्दिग्धमिवासीदिदानीं हृदयमेतस्य। अथ यावद् द्वारदेशमनुप्राप्तः प्रसारयति पाणिं कवाटमुद्घाटयितुं तावदेव तु पश्चादुपेत्य गृहीतः सन्निधाय केनापि सोऽयं पाणिरेतस्य। आदित एव साशङ्कं हृदयं तत्र च करे कोमलतरस्य कस्यापि करतलस्य स्पर्श इति नूनं महत्येवेयमिदानीमनर्थपरम्परा श्रीमति रमेशचन्द्रमहोदये समापतिता। वाचामगोचरं किलेदानीन्तनं पर्याकुलत्वमेतस्य। यावत् पुनः समाक्रान्तो भीत्यायमाक्रोष्टुं प्रवर्तते तावदेव यया गृहीतः पाणिः श्रीमतो रमेशमहाभागस्य सेयं युवतिः सकरुणं प्राह। आर्यपुत्र कच्चिन्नाद्याप्यभिज्ञानम्? अपि नाम विस्मृतोऽयं जन आर्येण? इति।

द्वादशः किलायं वत्सरोऽदर्शनमुपगतायाः श्रीमत्याः सरलायाः। तथापि न खलु नाभिज्ञातः स्वरसंयोगोऽयमेतस्याः श्रीमता रमेशेन। कुतो हि नाम प्रत्यभिज्ञाप्रलोपस्तादृशस्य प्रेम्णः। समागते च श्रवणसरणिं तन्त्रीस्वनविडम्बिनि श्रीमत्याः सरलायाः स्वरसंयोगे स्तिमित इव विस्मयेनावोचच्छ्रीमान् रमेशमहाभागः। कथं भवती! इति।

सरला। आर्यपुत्र! अथ किम्?

रमेशः। (आनन्दमन्थरम्) धिक् प्रेयसि! कुत्र तावदतिवाहितः कल्पायमानोऽयमेतावान् समयः श्रीमत्या? कथं वानिवेद्यैवास्मभ्यमसि प्रयातवती? कथं च नासीत् समय एतावत्यपि सकृदपि तावदस्मानवेक्षितुं ते मनस्यभिलाषः?

सरला। (रमेशस्य करौ कराभ्यां गृहीत्वा) क्षम्यतां नाथ! अस्ति सम्भावना यदि श्रोष्यस्यामूलान्तमेव मे वृत्तं तदा नांशतोऽपि दास्यति कोपाय करावलम्बमार्यपुत्र इति।

रमेशः। प्रेयसि! कुतो नाम त्वयि मे वार्तापि कोपस्य? किमु नास्मि परिचितस्ते विशुद्धतमस्य चरित्रस्य येन कोपभाजनं श्रीमतीमाकलयिष्यामि? यद्यप्यनापृच्छ्यैवास्मान् व्यधायि प्रयाणं श्रीमत्या, यद्यपि विनिपात्य निरन्तरसमुच्छलत्कल्लोलभीषणे विप्रयोगसागरे जनमेनमन्तर्हिता समभूः, यद्यपि च परित्यक्तमस्मदीयशय्यायां मासजातमपत्यं तथापि नास्पृशन्मे हृदयं रोषलेशोऽपि। गरीयान् हि मे विश्वासः सुनिर्मलतमे श्रीमत्याश्चारित्रे। श्रीमत्या पुनरिदानीं स्वयमेव समुपस्थाय समुज्ज्वलीकृतं च विभूषितं चैतदात्मीयं सदनम्। तत् को नाम सम्प्रति कोपस्यावसरः?

सरला। इत्थमेव मे मनसि विश्वासः। स एव च प्रत्यागमयदिमां वो दासीम्।

रमेशः। प्रेयसि! प्रदीपं तावत् प्रज्वलयितुमिच्छामि।

सरला। अनुचितं खल्वेतत्। सन्निहिता नन्विदानीमेषा परिचारिका। अस्या एव चाधिकारः कर्मण्येतस्मिन्। तत्तिष्ठतु तावदार्यपुत्रो यावत् स्वयमेव प्रज्वलय्य प्रदीपं साक्षात्कुर्वती वदनसरोरुहमार्यपुत्रस्य सुचिरमुपोषितयोरनयोर्विलोचनयोः पारणां निर्वर्तयामि।

(क्रमशः)

पत्नी। (पतिं प्रति) यद्यहं सती साध्वी पतिव्रता, अनन्ता ते दुर्गतिः स्यात्।

पतिः। आर्ये कोऽत्र ते सतीत्वे सन्देहः? सतीं साध्वीं पतिव्रतामन्तरेण का वा पत्युरनन्तां दुर्गतिं कामयेत?

दधि हस्ते दधि पात्रे दधि सर्वत्र दीप्यते।
तथापि भोजको रौति: क्व:भो दधि क्व भो दधि ॥

# इकृश्तिपौ धातुनिर्देशे [ ३।३।१०८।२ ]

( २१९तमपृष्ठतोऽनुवर्तते )

तत्त्वबोधिनी। धातोर्निर्देशोऽनुकरणम्। बहुलमित्यनुवृत्तेः क्वचिन्न। गुप्तिज्किद्भ्यः सन् [३।१।५] भुवो वुग् लुङ्लिटोः [६।४।८८]। पचतिरिति। "उपसर्गात् सुनोतिसुवतिस्यति०" "ध्यायतेः सम्प्रसारणं चे"त्यादिनिर्देशाद् अकर्तृवाचिन्यपि सार्वधातुके परे शबादयः। एवं भावकर्मवाचिन्यपि सार्वधातुके क्वचिद्यक्। विभाषा लीयतेरिति यथा। तत्र हि लीलीङोर्यका निर्देशो न तु श्यनेत्युक्तम्। यत्तु प्राचा श्तिपः शित्करणसामर्थ्याच्छबादय इत्युक्तम्, तन्न, पिबतिर्ग्लायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या, आत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात्।

लघुशब्देन्दुशेखरः ॥०॥

बालमनोरमा। धातुस्वरूपे निर्देष्टव्ये इकृश्तिपौ वक्तव्यावित्यर्थः। धातुस्वरूपमेव वाच्यमिति फलितम्। पचिः पचतरिति। पचधातुरित्यर्थः। शित्त्वेन सार्वधातुकत्वाच्छप्। अकर्तृवाचकत्वेऽपि "उपसर्गात् सुनोतिसुवती"ति निर्देशाच्छबादिविकरणाः। शित्त्वसामर्थ्यादिति तु प्राञ्चः, तन्न, पिबतिर्गायतिरित्यादौ पिबाद्यादेशप्रवृत्त्याऽऽत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वादित्यलम्।

कातन्त्रकृद्वृत्तिः। इकिश्तिपो धातुस्वरूपेऽर्थे ज्ञापकादेव सिद्धाः ।४०८

पञ्जी। तत्र परोक्षायाम् इन्धिश्रन्थिग्रन्थीत्यादिनिर्देशात् [आ० २६७] इप्रत्ययः, राधिरुधिक्रुधीत्यादिनिर्देशात् [आ० ३८८] किप्रत्ययः, कानुबन्धबलादगुणत्वम्। करोतेः इनिमन्यतेर्नादित्यानिर्देशात् [आ० ३८९] श्तिपप्रत्ययः। शानुबन्धबलादस्य सार्वधातुके विकरणः, पानुबन्धोऽपीह सुखार्थः परप्रसिद्ध्यर्थमुपादीयते। परो हि किल सार्वधातुकवदिति प्रयोजनमाह। अन्ये श्विकृश्तिपाविति मन्यमाना द्वौ प्रत्ययावित्याहुः। तदसत्, इन्धिग्रन्थिश्रन्थीत्यादिनिर्देशानुपपत्तिप्रसङ्गात्। इह हीक्प्रत्ययेऽनुषङ्गलोपः स्यादिति। तस्मादिप्रत्ययोऽपि विधेयः। तथाच चान्द्रसूत्रम्—इकिश्तिपः स्वरूपे [१।३।९६] इति।

कविराजः। सार्वधातुकमपित् [पा० १।२।४] इत्याद्यगुणविधायकं सूत्रम्। अस्यार्थः। अपित् अ-पानुबन्धं सार्वधातुकमगुणं भवति। यथा तुदति। अत्र परेण मध्ये शः क्रियते। अपिदिति किम्? भवति। अत्र मध्ये शप् क्रियते। कर्तरि शप् इति परसूत्रम्। इत् अनुबन्धः। पकारोऽनुबन्धः यस्य स पित्, न पित् अपित्। यद्वा न विद्यते पकारोऽनुबन्धो यस्य सोऽपित्।

चान्द्रव्याकरणम्। इकिश्तिपः स्वरूपे ॥१।३।९६।

वृत्तिः। क्रियार्थस्य स्वरूपेऽभिधेये क्रियार्थात् पर इ-कि-श्तिपो भवन्ति। इन्धिः युधिः पचतिः।

हैमानुशासनम्। इकिश्तिव् स्वरूपार्थे ॥५।३।१३८॥

बृहद्वृत्तिः। धातोः स्वरूपेऽर्थे चाभिधेये इ कि श्तिव् इत्येते प्रत्यया भवन्ति। भञ्जिः। क्रुधिः। वेत्तिः। अर्थे। यजेरङ्गानि। भुजिः क्रियते। पचतिर्वर्तते।

हेमचन्द्रलघुन्यासः। केचिदेतान् प्रत्ययान् कर्तरि समामनन्ति, स्वमते कर्तृकर्मभावे इति विशेषाभावात् सामान्येन भवन्ति। भवतेः सिज्लुपि [४।३।१२] न कवतेर्यङः [४।१।४७] इत्यादौ भावेऽपि सूत्रसामर्थ्यात् शव् न तु क्यः। पचतिर्वर्तते। बाहुलकाद् भावेऽपि शव् क्याभावश्च।

संक्षिप्तसारव्याकरणम्। इङ् धातुकथने तिङ्वत्तिङ् वा ॥३।३५१।

वृत्तिः। धातुकथने गम्यमाने भावे कारके च वाच्ये पुंसि प्रायो धातोरुत्तर इङ् भवति, तिङ्वत् तिङ् वा। यजिर्यजधातुर्यजमानश्च। कविः कवृधातुः पण्डितश्च। पूञ् पविर्वज्रम्। हृञ् हरिर्विष्णुः। लूञ् लविर्दात्रम्। यु मिश्रणे यविः समुद्रः। इत्यादिः।

टीका। पुंसि प्रायो बाहुल्येन भवतीत्यर्थः। अत एव वक्ष्यति क्वापि स्त्रियामिति [३।३५२]।

ब्रूञादेरिः ॥३।३५३॥

वृत्तिः। ब्रू विब्रूर्धातुः। इप्रत्ययविधानसामर्थ्यान्न वचादेशः। विदिर्विदधातुः।

क्वचिन्न तिङ्वत् ॥३।३५५॥

वृत्तिः। दृष्टिर्दृशधातुः। सर्तिः सृधातुः। अर्तिर्ऋधातुः। आङ्पूर्व आर्तिरभिलाषः (?)। अर्द् अर्तिः पीडा। तथाच शिरोऽर्त्तिं नाशयत्याशु इति वैद्यकम्।

सरस्वतीकण्ठाभरणम्। इकिश्तिपः स्वरूपे ॥२।४।१८१।

हृदयहारिणी। धातोः स्वरूपेऽभिधेये इ कि श्तिप् इत्येते प्रत्यया भवन्ति। गमिः। युधिः। पचतिः।

अर्थे च ॥२।४।१८२।

सुपद्मव्याकरणम्। इकिश्तिपो धातुकथने। ४।२।८८॥

वृत्तिः। एते त्रयः प्रत्यया धातुनिर्देशे स्युः। इ—इन्धिः यजिः। कि—युधिः रुधिः वृधिः। श्तिप्—भरतिः करोतिः। दृष्य्र-र्ति-सर्तयो निपातनात्।

सुपद्मविवरणपञ्जिका। कित्करणमगुणार्थम्। शित्करणं सार्वधातुकत्वार्थम्। पित्करणं ङित्त्वाभावार्थम्। इह दृष्टिनिपातस्य प्रयोजनाभावः, तथाप्यन्यत्र ज्ञानार्थं दर्शितमिति।

सुपद्ममकरन्दः। धातुकथने धातुस्वरूपकथन इत्यर्थः। इन्धिरिन्धधातुः। श्तिपः शित्करणाद् अकर्तृविहितसार्वधातुकेऽपि शप् स्यात्। ननु पाघ्राध्मास्थाम्नादाणदृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदा इति पाणिनीयसूत्रे दृश्यर्तिसर्तय इत्यत्र श्तिपि कथं विकरणाभाव इत्याह—दृश्यर्तिसर्तय इति। निपातनादिति। तत्सूत्रसामर्थ्यादेव। (क्रमशः)

---

## समवयसी

वङ्गभाषायां समानवया इत्यर्थे समवयसी-शब्दः प्रयुज्यते। एतदनुरूपं पूर्ववयसीति पदं तैत्तिरीयब्राह्मण उपलभ्यते—यो वै पूर्ववयसी स सभेयो युवेति। पूर्वं प्रथमं वयो यस्यास्ति स पूर्ववयसी। स खलु सभेयः सभायां साधुर्युवा। स्थविरं हि सभासु नाद्रियन्ते। पूर्वं वयः पूर्ववयसम्। अनसन्तान्नपुंसकात् [५।४।१०३] इत्यच् समासान्तः। अत इनिठनौ [५।२।११५]। ढश्छन्दसि [४।४।१०६] इति सभाशब्दाद् ढः।

---

## उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

विद्याकरविरचितस्य सुभाषितरत्नकोषस्य भूमिकायां Daniel H. H. Ingalls महोदयेन विलिखितम्—

आ दृष्टिप्रसरात् प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विश्रान्तेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
दत्त्वैकं ससुचा गृहं प्रति पदं पान्थस्त्रियास्मिन् क्षणे
माभूदागत इत्यमन्दवलितोद्ग्रीवं पुनर्वीक्षितम्॥

At day's end as the darkness crept apace
the saddened traveler's wife had gazed...
as far as eye could reach along the quiet road.
She takes one step returning to the whitewashed house,
then thinking, "At this very moment he may come,"
she turns her head and quickly looks again.*

The "whitewashed" house is missing from every other version of the verse, and the unwary reader may think the editors should have changed ससुधा to सशुचा (as in the *Amaruśataka*) or to some such form. Closer attention reveals both the beauty and the probable genuineness of the Kosambi-Gokhale reading. Whitewashing the house in expectation of the master's return is a custom still practised by Indian wives. One may compare the opening of Premchand's short story *Mā*, where the modern wife is awaiting the return of her nationalist husband from jail. By comparison the reading सशुचा is banal and tautologous, for the sadness of the wife is already expressed by निर्विण्णया in a.

इति। अस्यायं सारः। अन्यत्र सर्वत्रामरुशतके च तृतीयचरणे सशुचेति पाठः, केवलं कोशाम्बिगोखेलाभ्यां पारमार्थिकः ससुधेति पाठः स्वीकृतः। अद्यापि भारतीयाभिः प्रोषितभर्तृकाभिः पत्युः प्रत्यागमनमाशंसुभिर्गृहं सुधयोपलेप्यते। किञ्च प्रथमे चरणे निर्विण्णयेति शोकस्य प्रतीतेः सशुचेति पाठे पुनरुक्तदोषो दुष्परिहर इति।

अत्रेदमवधेयम्। दत्त्वैकं ससुधागृहं प्रति पदमिति पाठो वृश्चिकभिया पलायमानस्याशीविषमुखे निपातन्यायं स्मारयति, गोस्त्रियोरुपसर्जनस्येति सूत्रेण ह्रस्वत्वे प्राप्ते ससुधेत्यत्र दीर्घः स्वरश्च्युतसंस्कृतिदोषमावहतीति। अत एव संस्कारकामैः 'ससुधं गृहं प्रति पदम्' इति पठनीयम्। इति शम्।

---

बालकः कश्चिद् बडिशेन मत्स्यान् ग्रहीतुं प्रयतते। कश्चन भद्रमहोदयस्तमुपसृत्यापृच्छत्, वत्स! कति मत्स्या गृहीता इति। तेनोक्तम्—यदापरमेकं ग्रहीष्यामि तदैकं लप्स्य इति।

कवीन्द्र-रवीन्द्रनाथस्य

# कचं प्रति देवयानी-शापः

*[ विदाय-अभिशाप ]*

[ श्रीफटिकलाल-दासकृततात्पर्यानुवादः ]

कचः

आयाति सा क्षिप्रगतिः कियन्ति
कुञ्जान्यतिक्रम्य सुपुष्पितानि ।
कण्ठे वहन्तो मधुरं कलं सा
ग्राम्या वधूटीव सदैव सेवां
स्नेहान्नयन्ती च सुतप्तलोकं
प्रवाससङ्गिन्यनिशं ममासी-
दन्यापि काचित् सहचारिणी हा
दिवानिशं या विदधौ प्रयत्नं
त्वया हि विस्मारयितुं विभिन्नं
परालयान्तःप्रतिवासदुःखम् ?
हा मे दुराशा ।

कचः

प्रथितं चिराय
मया हि चित्ते खलु नाम तस्याः ।

देवयानी

स्मराम्यहो तद्दिवसं यदात्र
पदार्पणं ते प्रथमं प्रजातम् ।
किशोरविप्रस्तरुणार्ककान्तिः
सुस्निग्धदीप्त्याचितगौरमूर्तिः
पट्टाम्बरश्चन्दनलिप्तभालः
प्रसूनमालाभृतकम्बुकण्ठः

प्रसन्नहासच्छुरिताधराक्षः
पुष्पाटवीकुञ्जतले ह्यमुत्र
स्थितस्त्वमागम्य पुरस्तदा मे ।

कचः

स्नाता वहन्ती घनसिक्तकेशान्
नवं वसाना सितपट्टवास
उषेव मूर्ता रविरश्मिदीप्ता
करे च धृत्वैककरण्डकाण्ड-
मेकाकिनी त्वं निरता समासीः
पूजार्थपुष्पाहरणे तदानीम् ।
उक्ता मया त्वं विनयेन "देवि !
न शोभते ते श्रमसाध्यकृत्यं,
चिनोमि पुष्पाण्यनुमन्यसे चेत् ।"

देवयानी

सुविस्मिताहं वचनेन तेन
सपद्यपृच्छं तव संस्तवं च ।
प्रोक्ता त्वयाहं सुविनीतवाचा
"बृहस्पतेरात्मज एष दासः
समागतस्त्वत्प्रतिहारभूमौ
शिष्यः पितुस्ते भवितुं सकामः ।"

कचः

शङ्का ममासीन्महती स्वचित्ते
स एष देवारिगुरुर्यदि स्यात्
स्वर्गस्य विप्रं प्रति मां प्रतीपः ।

देवयानी

हसन्त्यवोचं "पितरस्ति पादे
भिक्षा ममैका।" सपदि प्रसन्नः
स्नेहेन पार्श्वे विनिवेश्य मां स
संस्थाप्य हस्तं मम नम्रमूर्ध्नि
समाचचक्षे मृदुशान्तवाचा
"तुभ्यं ह्यदेयं मम नास्ति किञ्चित्।"
उक्तं मया "त्वत्प्रतिहारदेशे
सन्तिष्ठते देवगुरोस्तनूजः।
अभ्यर्थनैषा तव पादपद्मे
तं शिष्यरूपेण गृहाण सद्यः।
अतीतमेतत् कियदब्दजातं
विभाति मे ह्यस्तनकल्यकल्पम्।

कचः

सेर्ष्यासुरैर्हि निहतो यदाहं
त्वयैव देव्यातिथिवत्सलत्वात्
प्रत्यर्पितं मे श्वसितं पुनश्च।
कृतज्ञतायाः परिगृह्य रूपं
तदेव चित्ते लिखितं चिरं स्यात्।

देवयानी

कृतज्ञतैका यदि भाति चित्ते
विस्मर्यतां सा—मम नास्ति दुःखम्।
तवोपकारा विहिता मया ये
भवन्तु भस्मानि त एव सर्वे—
नेच्छामि दानप्रतिदानकृत्यम्।
चित्तैककोणे सुगृहीतमूर्तिः
सुखस्मृतिः किं न तवास्ति कापि ?

अन्तर्बहिर्वा यदि ते कदाचि-
दानन्दगीतिध्वनिता बभूव,
कदापि सायं निरतस्य पाठे
पुष्पाटवौ वेणुमतीप्रतीरे
स्वचित्तमध्ये पुलकस्य राशिः
समुत्थितोऽभूद् यदि कोऽप्यपूर्व
उच्छ्वासजातं हृदयस्य किं वा
दिनावसाने गगने निकुञ्जे
व्याप्तं स्थितं चेदिव पुष्पगन्धः,
तत्सर्वसुखस्य कथां स्मरैकां—
कृतज्ञता नाम सुदूरमेतु।
कस्यापि गीतं यदि जातु चित्ते
प्रादत्त शातं तव किञ्चिदत्र,
कस्यापि वासो यदि पश्यतस्ते
समुत्थिताभूद् हृदि चन्दनागीः,
विलोक्य नूत्नां सुषमां तनोश्च
सन्तृप्तमासीद् यदि नेत्रयुग्मं,
विश्रामकाले सुखनाकधाम्नि
तत्तत्कथायाः स्मरणं कुरुष्व।
कियन्त्यहानीह गतानि नाम
येष्वेव वर्षा-नवमेघमाला
सुश्यामकान्तिर्नयनाभिरामा—
जटा विकीर्णा नभसस्य नीला—
दिशां निकाये विततान्धकारा
विलम्बिनी भूपरि सम्बभव :

श्रकार कर्मालसवासरेषु
विचित्रनानागुरुकल्पनाभि-
र्निपीडितं ते हृदयप्रदेशम् ।
कतिष्वहःस्वेव समागता हि
नवावतीर्णस्य मधोरकस्मा-
न्निर्बाधवातोल्लसितप्रवाहै-
स्तवाकुला यौवनमत्तता च ।
गीतोज्ज्वलं तद् हृदयाकुलत्वं
वने वने वै जनयाम्बभूव
लताप्रसूनद्रुमपल्लवेषु
हर्षप्रवाहाच्छतवीचिभङ्गै-
र्विचिन्तयैतत् सकृदेव, बन्धो !
वनेऽत्र पुष्पासवमोदसान्द्रा
उषाः कियत्यः, कति चन्द्रिका वा,
कियत्तमिस्राः, कति वापि दर्शाः
सुखानि दुःखान्यथवानयन्तो
युक्ता ह्यभूवंस्तव जीवनेन ।
तदन्तरे हा न हि वीक्षितः किं
सूर्योदयः कश्चन, कापि सन्ध्या,
मुग्धा च रात्रि, हृदयस्य खेला,
सुखञ्च किञ्चिन्, मुखमन्यदीयं,
यदेव चित्ते लिखितं तवाभू-
च्चिरन्तनोवोज्ज्वलचित्रलेखा
चिरां च रात्रिं दिवसं चिरं च ?
स्मरिष्यसि त्वं ह्युपकारमेकं
प्रीतिं न, शोभां न, न किञ्चिदन्यत् ?

कचः

प्रकाशयोग्यं सखि नापरं तद् ।
या फल्गुधारासम-रक्तलेखा
मन्मर्ममध्ये वहते सुगुप्तं
कथं बहिस्तां ननु दर्शयेयम् ? ( क्रमशः )

---

# छात्रहितैषिणी

[ श्रीवेङ्कटाचार्यः ]

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

व्याकरणाध्ययनस्य प्रयोजनं बहुधा प्रदर्शितं पतञ्जलिना। तस्मिन्नेव प्रकरणे 'सक्तुमिव तितउना' इत्ययम् ऋङ्मन्त्रोऽप्युदाहृतः। तस्यायमभिप्रायः। जनाः सक्तुं तितउना चालन्या उत्पुनन्ति। एवम् उत्पवनेन शोधयित्वा परित्याज्यं मलिनादि-कमंशं परित्यज्य ग्राह्यम् उपयोगार्हं भागं गृह्णन्ति। इत्थं वाग्विषयेऽप्यपशब्दाः परि-त्याज्याः, साधवः शब्दा ग्राह्या इत्यनयोपमया प्रतिपाद्यते। अत्र साधुशब्दानाम् असाधुशब्देभ्यः पृथक्करणे व्याकरणज्ञानं चालनीतुल्यं भवति। तेनापभ्रंशान् निष्कास्य, साधुशब्दभूषितां वाचं यदि केचित् प्रयुञ्जते तर्हि ते सम्मानं लभन्ते। ये क्वचित् समाजे वा यज्ञे वा, सभायां वेदृशीं शुद्धां वाचम् प्रयुञ्जते ते तेषु समाजादिषु वर्तमानैः पण्डितैः क्रियमाणां प्रशंसां भजन्ते। विद्वांसः किल तत्रत्यास्तुल्यवैदुष्य-भूषितानां पाण्डित्यं प्रत्यभिज्ञायाभिनन्दन्ति, तादृशानां हि विदुषां वाचि संस्कारवशाद् भासमाना लक्ष्मीः ( शोभा ) अत्यन्तं प्रकाशते इति। सा सर्वेषां हृदयमावर्जयति। ईदृशमभिनन्दनं कर्तुं प्राप्तुं वा तदैव शक्यं यदापेक्षितं व्याकरणज्ञानं स्यात्। ये तु न विद्वांसस्ते किलाभिनन्दितुमपि न शक्नुयुः। "विद्वानेव विजानाति विद्वज्जनपरिश्रमम्" इति न्यायात्। तस्माद् अभिनन्दनं कर्तुं प्राप्तुं वा योग्यतालाभार्थमपि व्याकरणम् अध्येतव्यम् इत्येवं सक्तुमिवेति ऋङ्मन्त्रोल्लेखपुरस्सरं पतञ्जलिः प्रत्यपादयत्।

विस्तरस्तु Mahābhāṣya—Paspaśāhnika edited by Dr. K. C. Chatterji इत्यत्र द्रष्टव्यः।

## ओतप्रोत-ओतःप्रोत-ओतप्रोतः-ओतःप्रोतः

शब्दोऽयमतिमात्रं रमणीयोऽनुप्रासवशाच्च सुतरां श्रुतिसुखकरः, अत एव वङ्गभाषामयेषु लेखेष्वन्तरान्तराऽयं प्रयुज्यते। यतः कुतः इतः ततः वशतः संसर्गतः—एवंविधेषु शब्देषु तकारादूर्ध्वं विसर्जनीयो विलसति। अत एव ओतप्रोतशब्देऽपि तकारात्परं विसर्गेण भाव्यम्। परमत्र द्वौ तकारौ वर्तेते, एकस्मै विसर्ग उपह्रियते चेदपरस्य मनःक्षोभः स्यात्, उपहर्ता च पक्षपातपङ्केन लिप्येत। अत एव "रविवासरीय आनन्दबाजारपत्रिका"याम् ( ६ चैत्र, १३६६ ) क-पृष्ठे प्रथमस्तम्भे "विभज्य भक्त्या समपक्षपातया" उभावेव तकारौ विसर्जनीयेन सम्भावितौ। तत्र ओतःप्रोतः इति मुद्रितम्, कस्यापि मनसि लेशतोऽपि क्लेशस्यावकाशो न दत्तः।

---

## शोचनीयः खलु सोऽनुरागो यो न परस्परस्य

[ आनन्दबाजारपत्रिकायां श्रीशिवरामचक्रवर्ती ]

एकेन पत्रं प्रेषितम् "किमिति भवन्तं कदापि कस्यापि शोकसभायां न पश्यामि? अपि नाम भवानतितरां शोकविह्वलो सञ्जायते इति।" इति।

नहि नहि। अत्र शोकस्य वार्तापि नास्ति, नितान्तत एव स्वार्थचेतना। यस्य शोकसभायामहमुपस्थास्ये स तु मम शोकसभायां समुपस्थातुं न शक्ष्यति, तर्हि किं वा फलं गमनेन? यदि कोऽपि मम शोकसभायां समागमिष्यतीति ग्यारण्टिं दातुं प्रभवेत् तर्हि तस्य शोकसभायामुपस्थितिं दातुं सम्मतोऽस्मि।

---

## कर्मधारयः

( २१०मपृष्ठतोऽनुवर्तते )

३। कर्मशब्दस्याभिधेयार्थेऽपि प्रयोग उपलभ्यते। तथाच निरुक्ते [ १।७ ] दृश्यते—अथवा सीमित्येतदनर्थकमुपबन्धमाददीत पञ्चमीकर्माणम्। सीम्नः सीमतः सीमातो मर्यादात इति। अत्र पञ्चमीकर्माणमित्यस्यार्थः पञ्चम्यर्थकमिति। एवं शब्दकर्माणो धातव इत्यस्यार्थः शब्दार्थका धातव इति। अत एव कातन्त्रव्याख्यायां सुषेणकविराजेनोक्तम्—यस्य पदद्वयस्य समासस्तत्पदोपस्थाप्योऽर्थो यदि समासवाच्यः स्यात् तदैवाः समासः। इति।

# उभयतोमुखा धातवः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

धातुपाठे सूर्क्ष आदरे इति पठ्यते। तत्र माधवः। अनादर इति क्वचित्पठ्यते, तदसत्। सोमेन यक्ष्यमाणो नर्तून् सूर्क्षेन्न नक्षत्रम् [ काठक १०।६ ] इति दर्शनात्। सोमेन यक्ष्यमाणो वसन्ते ब्राह्मणोऽग्नीनादधीत। उत्तरयोः फल्गुन्योरग्निमादधीतेत्यादिना चोदितनक्षत्राणि नाद्रियेतेति तत्रार्थः। तथावहेडनमसूर्क्षणमिति दृश्यते। सूर्क्षणमादरः। ततोऽन्यदसूर्क्षणमनादरः। इति।

अत्र स्वामी। सूर्क्ष्य अनादरे। सूर्क्ष्यति। षान्तोऽयमिति चन्द्रः। [१।२१९] सूर्क्षति। असूर्क्षणमपरिभवः। यान्तस्यापि यस्य हलः [ ६।४।४९ ] इति यलोपात्। इति।

सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्थाः इत्यपि पठ्यते।

अत्र भट्टोजिः। अनादरे इति क्वचित्कोऽपपाठः। रीढावमाननावज्ञावहेलनमसूर्क्षणमित्यमरः। अत्र तत्त्वबोधिनी। सूर्क्षणमादरस्ततोऽन्यदसूर्क्षणमित्यमरग्रन्थार्थः। यदि तु सूर्क्षणमनादर इत्युच्येत, तर्ह्यसूर्क्षणमवज्ञापर्यायो न स्यादिति भाव इति।

तैत्तिरीयब्राह्मणे श्रूयते—तत्तन्न सूर्क्ष्यम् [ १।२।१।१ ] इति। व्याख्यातं चेदं सायणेन—परःसामाख्या अहर्विशेषा अग्निष्टोमरूपा इति यदन्यैरुक्तं तत्तथा न सूर्क्ष्यं न द्रष्टव्यम्। सूर्क्ष दर्शन इति धातुः। इति। गोपथब्राह्मणे च श्रूयते—य एव पिता पुत्राणां सूर्क्षति स श्रेष्ठो भवति [ ३।९ ] इति।

आङ्ग्ल Sorrow, शार्मण्य Sorge, गथिक Saurga प्रभृतिषु शब्देष्वस्यैव सनाभयो दृश्यन्ते। संस्कृते मूलतोऽयं धातुः सूर्क्ष इत्यासीत्, अस्य चार्थ आसीत् to trouble oneself about ( कस्यापि कृते व्याकुलीभावः, आयासः ) इति प्रतीयते। ततश्चादरानादरयोरुभयोरप्यर्थयोरुत्पत्तिः सञ्जाता।

---

# सोदराः समानशीलाः

धर्माधिकारी कारागारपरिदर्शनाय समागतः। यावदसौ बन्दिभिः संलपति तावद् रक्षिणोक्तम्—आर्य! इमं तावत् कदापि कोऽपि न द्रष्टुं समागच्छतीति। धर्माधिकारी तदभिमुखो भूत्वापृच्छत्, अपि सत्यमेतद् यत् कोऽपि त्वां साक्षात्कर्तुं न समायातीति। तेनोक्तम्—अथ किम्। इति। धर्माधिकारिणोक्तम्—तव त्रिचतुरा भ्रातरो वर्तन्त इति श्रूयते। किमिति तेषामेकतमोऽपि त्वदर्थं न विमनायत इति। तेनोक्तम्—आर्य! सर्वे ते बन्धनालय एवेदानीं कालं नयन्ति। एकोऽपि न मुक्तो वर्तत इति।

# कह्लणस्य राजतरङ्गिणी

[ उडुपि वेङ्कटकृष्णरायः ]

वक्रोक्तिगर्भितां शिवपार्वत्योः संवादरूपां कल्याणापरनाम्नः कह्लणस्य पञ्चमे तरङ्गेऽर्ध-नारीश्वरस्तुतिं नान्दीरूपां प्रार्थनामेवादावुदाहृत्यारभामहे—

काप्येतेषु रुचिः कचेषु फणिनां पुंस्कोकिलस्येव ते
गोभिः कण्ठतटस्य हृष्यति पुरो दृक् पश्य चक्षुःश्रुतेः ।
सन्धानेऽभिनवे मिथो भगवतोर्जिह्वा पृथक्स्पन्दिनी,
भिन्नार्थां सदृशाक्षरामपि वदन्नेवं गिरः पातु वः ॥ इति ।

सत्स्वप्यतिभूयस्सु विषयान्तरप्रबन्धेषु चारित्रकप्रबन्धा अल्पीयांस एव गैर्वाण्यामुप-लभ्यन्ते । परन्त्वत्र बहवः शिलालेखास्ताम्रादिशासनानि प्रशस्तयश्च तत्र तत्रोपलभ्य-मानानीतिहासविषयिकां दृढामभिरुचिमस्माकं पूर्वजानां प्रख्यापयन्ति । केवलमनुस्यूततया प्रबद्ध इतिहासः कुत्रचिदेव लभ्यते, यथा बाणस्य हर्षचरिते, बिह्लणस्य विक्रमाङ्कदेवचरिते, कह्लणस्य राजतरङ्गिण्यां, गङ्गादेव्या मधुराविजये ।

कह्लणस्य पिता चम्पको नामैकोननवत्युत्तरसहस्रतमे क्रिस्ताब्दे सिंहासनमारूढस्य हर्षस्य राज्ञः सभायां लब्धप्रतिष्ठः सेनापतिरासीत् । परिहासपुरे लब्धजन्माऽयं कह्लणो राज्ञो मौग्ध्यं मौर्ख्यं च सप्तमे तरङ्गे निन्दति यथा—

किं तस्य कथितैरन्यैर्मौग्ध्यैर्यो याचितो विटः ।
विद्यमानादिव धनादायुषोऽपि व्ययं व्यधात् ॥
बलरूपेच्छुरपरान् उपायान्यानसेवत ।
कथयेत्कः सदाचारस्तानतोऽपि त्रपावहान् ॥
स एवमन्धतामिस्रे निक्षिप्तः शाश्वतीः समाः ।
मुग्धबुद्धिः स्वजाड्येन दुर्जातैश्च कुमन्त्रिभिः ॥

ब्राह्मणोऽयं समदर्शनो बौद्धानां विहार-स्तूप-निर्माणमपि तत्र तत्र शंसति, तुरुष्काणां प्रतिमाभङ्गमपि याथातथ्येन वर्णयति । निसर्गभिन्नास्पदे लक्ष्मीसरस्वत्यौ बभूवतुरेक-संस्थे अस्मिन् । तथा च राजाश्रयं सर्वथानपेक्षमाणः स्थैर्य इव रागद्वेषबहिष्कृतां बुद्धिं भूतार्थकथने युयोजेति हेम्नः परमामोदः । हिमालयात्सेतुं यावत्सर्वत्र भारतदेशे कृतसञ्चारः पक्षपातं विना वङ्गीयानितरदेशीयानपि साधुवादेन योजयति स्म । अर्थशास्त्र-निपुणो व्रीह्यादिकानां विविधदेशेषु क्रयं ( prevailing market price of economic products), प्रचलितानां दीनारादिनाणकानां विवेचनं (currency), दुर्भिक्षादिषु प्रतीकारं (remedies against famines), शुल्कसंख्यापनम्—इत्यादीन् विविधान्

मेतद्यदेतादृशं क्रूरं राजानमपि कविः स्तौति। अयं च स्वदेशीयं बिह्लणमाश्रयार्थं कर्णाटदेशं गतं निर्दिशति सप्तमे तरङ्गे—

कश्मीरेभ्यो विनिर्यातं काले कलशभूपतेः।
विद्यापतिं यं कर्णाटश्चक्रे पर्माडिभूपतिः॥
त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम्।
बिह्लणो वञ्चनां मेने विभूतिं तावतीमपि॥ इति।

सप्तमे तरङ्गे हृदयंगमया रीत्या संसारचक्रमित्थं निर्दिशति—

नादौ किञ्चिद्भवति नियतं यच्च पश्चाच्च किञ्चि-
न्मध्येऽकस्मात्सपदि घटयन् सौस्थ्यदौःस्थ्यानुरोधम्।
निःशीर्षाङ्घ्रिर्नट इव मुहुः कोऽपि जन्तुर्नटित्वा
नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति॥ इति।

मात्स्यन्यायं ( तिमिंगिलगिलन्यायं वा ) चेत्थं निर्दिशति—

तीर्थस्थितः स्वकुलजांस्तिमिरत्ति भुङ्क्ते मौनी बकस्तिमिमुपेत्य वनान्तवासी।
व्याधो निहन्ति तु बकं प्रभवन्ति ते ते पात्राण्युपर्युपरि वञ्चनचुञ्चुतायाः॥ इति।

इदमेवान्यत्रेत्थं वर्ण्यते—

यान्यब्जान्युदयं द्विषन्ति शशिनः कोऽन्यस्ततोऽसंमत-
स्तन्निर्माथिकरीन्द्रदन्तदलनं यन्नाम कोऽयं नयः।
सामर्थ्यप्रथनाय चित्रमसमैः स्पर्धां विधूयोन्नता
ये तेषु प्रभवन्ति तत्र जहति व्यक्तं प्ररूढा रुषः॥ इति।

शुभाचारः शुभं प्राप्नोति, पापाचारो दुःखमनुभवतीति नीतिं तत्र तत्रोपक्षिपति। यथा—

अतीन्द्रियाणां परलोकवृत्ताविहैव तीव्राशुभपाकशंसी।
दृश्येत नाशो यदि नाम नाशु न कः कुकृत्येन यतेत भूत्यै॥ इति।

अतिचञ्चलेयं श्रीः, तस्यामपि वयमासक्ता भवाम इति विचित्रमाशयमुपदिष्टं पठामः—

रागी मधुप्रणयवान्विहिताक्षसक्तिर्यः सख्यमेति मधुपैर्हृतकोशसारैः।
पद्मं प्रयाति दिनमात्रमपि प्रसक्तिं श्रीस्तत्र चेत्किमिव तन्न कुतूहलस्य॥ इति।

इत्थमेव—

एकः प्रयात्युपरतिं द्रविणं तदीयं हृत्वा परः प्रसभमुद्वहति प्रमोदम्।
नो वेत्ति तत्स्वनिधने परलोकगामि धिग्वासनामसममोहकृतान्धकाराम्।

अत्र वर्णितेषु राजस्वशोकचक्रवर्ती प्रथमः। अनेन निर्मितां गौरीपरिणयविधौ साक्षितां यातं प्रवरं पुरं श्रीनगरमिति प्रख्यातं कविरयमित्थं प्रस्तौति—

स षण्णवत्या गेहानां लक्षैर्लक्ष्मीसमुज्ज्वलैः।
गरीयसीं पुरीं श्रीमांश्चक्रे श्रीनगरीं नृपः॥ इति।

पार्वती पुत्रद्वयप्रसूतिकालेऽप्यत्रैवोवास, वितस्तारूपं स्वीकृत्य जनानधुनाप्यनुगृह्णातीति वर्णयति—

गुहोन्मुखी नागमुखापीतभूरिपया रुचिम्।
गौरी यत्र वितस्तात्वं याताप्युज्झति नोचिताम्॥ इति।

पुरी चयं धनदस्येव विविधैर्निधिभिर्निषेव्यते—

शङ्खपद्ममुखैर्नागैर्नानारत्नावभासिभिः।
नगरं धनदस्येव निधिभि र्यन्निषेव्यते॥ इति।

कवीन् कीर्तिकायस्य कर्तॄन् निर्दिश्य कविवेधस इत्थं प्रशंसति, तेषामनुग्रहं विना पूर्वयुगवर्तिनो राजानो वाङ्मयमादर्शं नाप्नुवन्ति—

भुजवनतरुच्छायां येषां निषेव्य महौजसां
जलधिरशना मेदिन्यासीदसावकुतोभया।
स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं
प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे॥
येऽप्यासन्निभकुम्भशायितपदा येऽपि श्रियं लेभिरे
येषामप्यवसन्पुरा युवतयो गेहेष्वहश्चन्द्रिकाः।
तांल्लोकोऽयमवैति लोकतिलकान्स्वप्नेऽप्यजातानिव
भ्रातः सत्कविकृत्य किं स्तुतिशतैरन्धं जगत्त्वां विना॥ इति।

कवयो लोकललामभूता इत्यत्र प्रशस्यन्ते।

कर्कोटवंशराजेषु मुक्तापीडललितादित्य एकोनसप्तशताधिकसहस्रतमे क्रिस्ताब्दे सिंहासनमारूढः प्रभूतबलशाली तुरुष्कानपि निर्जिगाय। अयं च राजा समुद्रगुप्त इवातिबलिष्ठः षट्त्रिंशद्वर्षाणि यावत् कश्मीराणां प्रथां सर्वत्र प्रसार्य दिवमारुरोह। अस्मादनन्तरं राज्यं प्राप्तवन्तो दुर्बलाः। यदा च नवमशतके पञ्चपञ्चाशदधिकाष्टशततमे क्रिस्ताब्दे राजावन्तिवर्मा सिंहासनमारुरोह तदा पुनः कश्मीराणां ध्वज उच्चतमो बभूव। अत्र पठामश्च—

अवन्तिवर्मणः पुण्यै र्जन्तूज्जीवयितुं ततः।
स्वयमन्नपतिः श्रीमान् सुय्यः क्षितिमवातरत्॥

पाषाणसेतुबन्धेन सुय्येवाद्भुतकर्मणा ।
सप्ताहमभवद् बद्धा निखिला नीरजा सरित् ॥
भूमेर्जलादुद्धरणं द्विजक्षेत्रे तथार्पणम् ।
सेतुबन्धोऽश्मभिस्तोये यमनं कालियस्य च ॥
चतुर्षु सिद्धमिति यद्विष्णोः सत्कर्म जन्मसु ।
सुय्यस्य तत्पुण्यराशेरेकस्मिन्नेव जन्मनि ॥ ३।८ ।

एवमादिकमस्य नदीमातृकं कर्म कृष्युपकारकं स्तौति । किं बहुना—अवन्तिदेवः पाति स्म मान्धातेव वसुन्धरामित्युपसंहरति । आनन्दवर्धनादयः कवयोऽस्य सभामलञ्चक्रुः । अस्यानन्तरं राज्यं प्राप्य शङ्करवर्मा तु त्यागभीरुतया गुणिसङ्गपराङ्मुखोऽभूत्, कवयो भल्लटादयश्चासेवन्तावरा वृत्तीः, दरिद्रा निर्वेतनाः, भारवाहको ज्ञानलवदुर्विदग्धो लवटस्तस्य प्रसादाद्दीन्नारसहस्रद्वयवेतनश्चाभूत् । लोहरवंश्या राजानोऽपि पराक्रमशालिनो बभूवुः । अनन्तश्चाष्टाविंशत्यधिकसहस्रतमे क्रिस्ताब्दे सिंहासनमारुरोह । तुरुष्काणामभियोगमयं प्रत्यष्टम्भयत्, ताश्च पराजिग्ये । अस्य राज्ञी सूर्यमती च राज्यनिर्वहणे बद्धश्रद्धाऽभवत् । अनन्तस्य पौत्रो हर्षश्चैकोननवत्यधिकसहस्रतमसंवत्सराद् द्वादश वत्सराण्येव राज्यं चकार । अयं च बह्वीषु भाषासु कवनशक्तिमपि लब्धवान्, अस्य शक्राधिकश्रियो राज्ञ आस्थानास्थिति र्धनदस्य यमस्य चैकविहरणारण्यं दानस्य च भयस्य च नित्यसंकेतवसतिरभूत् ।

अयं ग्रन्थश्चतुर्विंशत्यधिकद्विशतोत्तराधिकसहस्रचतुष्टयतमे लौकिकेऽब्द आरब्धः संवत्सरादनन्तरं समाप्तश्च । नीतिशास्त्रमिदमिति वक्तुं पार्यते यतः सूक्तिरत्नैर्वाक्यामृतानि तत्र तत्र विलसन्ति दुष्टा राजानो यथेच्छं प्रजाः संपीडयन्तः स्वसुखलालसा एव बहवोऽस्मिन् देशे बभूवुः । इतिहासमिमं पठित्वा स्थालीपुलाकन्यायेन भारतदेशेऽन्यत्रापि राजकीयपरिस्थितिरीदृश्येव बभूवेत्यस्माभिः कल्पयितुं शक्यते । एकं वशिष्यमत्र पृथक्तयोपलभ्यते यद् दिद्दा, शङ्करवर्मणो राज्ञी सुगन्धा, अनन्तस्य राज्ञी सूर्यमतीत्याद्याः राज्ञ्यो राज्यतन्त्रनिपुणा आसन् । पुरुषाणामिव स्त्रीणां स्थानमादृतमेवासीत् । स्त्रीणां मुखावरणं (Purdah system) तदा नासीत् । बौद्धमतप्रभावेण चण्डालानां ग्रामाद् बहिः स्थापनं लुप्तप्रायमासीदित्यपि ज्ञातुं प्रभवामः । एतद्देशीयाश्च चतुर्दशशतक एव मोहमदीयमतमवालम्बन्त, परन्तु तेषां संस्कृतिरद्यापि भारतीयैव संस्थिता, तस्मादितिहासपरिशीलनेन सम्यग् ज्ञायते यदेते राजकीयैः कारणैर्यद्यपि मोहमदीयाः सञ्जातास्तथापि सर्वात्मना भारतीया एव वर्तन्ते, भारतदेश एव च समावेशमर्हन्ति ।

अस्य कविश्रेष्ठस्य महिमानमस्यैव वचसा श्रुत्वाऽन्ते निर्वाहः क्रियते ।

वन्द्यः कोऽपि सुधास्यन्दास्कन्दी स सुकवेर्गुणः ।
येनायाति यशःकायः स्थैर्यं स्वस्य परस्य ॥
कोऽन्यः कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः ।
कविप्रजापतींस्त्यक्त्वा रम्यनिर्माणशालिनः ॥

नूनमयं क्षेमेन्द्रवाचा कविरवि र्यस्याविलुप्तव्याप्तिभिः सूक्तिपादै र्भवभावस्वाभावाः सर्वे नवनवत्वं नीयन्ते ।*

---

## श्रीक्षमादेव्याः स्तवस्तबकम्

[ श्रीहेमचन्द्रशर्मा ]

विद्वद्वृन्दविराजिते खलु महाराष्ट्रस्य पुण्ये स्थले
सम्भूता किल शङ्करस्य भवने भागीरथीव क्षितौ ।
भव्यं भारतभूतलं सुमधुरैः शब्दैः सुधास्यन्दिभिः
सिञ्चन्ती सततं सदा विजयतां साध्वी क्षमा पण्डिता ॥१॥

द्राक्षापाकमयी यदीयकविता पीयूषसाराञ्चिता
नानास्वादुरसैः सदा सहृदयानावर्जयन्ती स्थिता ।
यामासाद्य सरस्वती सुमनसामूर्जस्वती दृश्यते
तस्यां सन्तु सदैव सत्प्रणतयः सौभाग्यवल्यां मम ॥२॥

मृद्वीका त्रपते सितापि सततं सङ्कोचमापद्यते
नैव स्वादु भवेद् गुडं लगुडतामिक्षुः समापद्यते ।
सर्पिस्तर्पयति स्वयं न मधुनि स्वादो न संलक्ष्यते
दुग्धं मुग्धधियो मुधाऽमृतरसं जल्पन्ति यस्याः पुरः ॥३॥

'गीता'-सौरभ-सङ्कुले शुभ-'कथामुक्तावली'-मण्डिते
श्री 'ज्ञानेश्वर'-नीरनिर्मल-'तुकारामा'-रवै राजिते ।
'लीला'ऽऽलिङ्गित-'चन्द्रिका'-चपलया 'मीरालहर्या'ऽन्विते
'क्षमा'-साहित्य-गभीर-नीरधितले मज्जन्तु भोः सज्जनाः ॥४॥

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्णदर्शनाचार्यः ]

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥१।३।१४

इतश्च दहराकाशस्य ब्रह्मत्वं, "सर्वं तदत्र गत्वा विन्दते" [ छान्दोग्य ८।३।२] "सत्र प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" [ छान्दोग्य ८।३।२ ] इत्यत्र गतिवाचक-पदाभ्यां गमनं प्रतीयते तेन च गन्तु जीवस्य गन्तव्यो ब्रह्मलोकः प्राप्यते, हि यतस्तथा मुक्तस्य ब्रह्मलोकगमनं दृष्टं श्रुत्यन्तरे, "मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्या-च्चन्द्रमसं चन्द्रमसो वैद्युतं तत्पुरुषोऽमानवः, स एनान् ब्रह्म गमयति" [ छान्दोग्य ५।१०।२] इति। ब्रह्मलोकश्च पारमेश्वरमेव धाम न तु हिरण्यगर्भलोकः, श्रुतिषु कुत्रापि सत्यलोकशब्दानुक्तेः। एतं ब्रह्मलोकमित्येतच्छब्देन च प्रकृतं दहराकाशमेव ब्रह्म-लोकशब्देनोल्लिख्य प्रत्यहं सुषुप्तौ जीवानां तत्र गमनं दर्शितम्। सुषुप्तौ जीवस्य ब्रह्मप्राप्ति-र्दृष्टा च श्रुत्यन्तरे "एवमेव खलु सौम्येमाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति" [ छान्दोग्य ६।९।२ ] इति, सुषुप्तिश्रुतौ च ब्रह्मलोकशब्दः कर्मधारयसाध्यो न तत्पुरुषसाध्यो हृदये ब्रह्मणो लोकस्याभावात्। किञ्च "स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदय-मिति" [ छान्दोग्य ८।३।३ ] इति हृदयशब्दनिर्वचनलिङ्गेन दहराकाशस्य ब्रह्मत्वं गम्यते। अथवा "अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" [ छान्दोग्य ८।३।२ ] इति जीवस्य ब्रह्मगमनं ब्रह्मलोकशब्दश्च दहराकाशस्य ब्रह्मपरत्वं दर्शयतः। अत्र हेतुः—तथाहि दृष्टमिति। सुषुप्तौ जीवस्य ब्रह्मगमनं दृष्टं श्रुत्यन्तरे—"सति संपद्य न विदुः सति संपद्यामह इति" [ छान्दोग्य ६।९।२ ] इति। ब्रह्मलोकशब्दश्च परमात्मपरो दृष्टः श्रुत्यन्तरे, "एष ब्रह्मलोकः सम्राट्" [ बृ० आ० ४।४।२३ ] इति। एतद् द्वयमेव दहराकाशस्य ब्रह्मत्वे लिङ्गम्। इति ॥१४॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१।३।१५

किञ्च "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" [ छान्दोग्य ८।४।१ ] इति दहराकाशस्य जगद्विधारणं महिमा श्रूयते तस्माच्च परमात्मत्वमस्य ज्ञायते, यतोऽस्मिन् परमात्मन्येष जगद्विधारणमन्यत्रोपलभ्यते, "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" [ बृ० आ० ४।४।२२ ] इति। "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० आ० ३।८।९ ] इति च ॥१५॥

( क्रमशः )

---

वन्द्यः कोऽपि सुधास्यन्दास्कन्दी स सुकवेर्गुणः ।
येनायाति यशःकायः स्थैर्यं स्वस्य परस्य ॥
कोऽन्यः कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः ।
कविप्रजापतींस्त्यक्त्वा रम्यनिर्माणशालिनः ॥

नूनमयं क्षेमेन्द्रवाचा कविरवि र्यस्याविलुप्तव्याप्तिभिः सूक्तिपादैः र्भावभावस्वाभावाः सर्वे नवनवत्वं नीयन्ते ।*

---

## श्रीक्षमादेव्याः स्तवस्तबकम्

[ श्रीहेमचन्द्रशर्मा ]

विद्वद्वृन्दविराजिते खलु महाराष्ट्रस्य पुण्ये स्थले
सम्भूता किल शङ्करस्य भवने भागीरथीव क्षितौ ।
भव्यं भारतभूतलं सुमधुरैः शब्दैः सुधास्यन्दिभिः
सिञ्चन्ती सततं सदा विजयतां साध्वी क्षमा पण्डिता ॥१॥

द्राक्षापाकमयी यदीयकविता पीयूषसाराञ्चिता
नानास्वादुरसैः सदा सहृदयानावर्जयन्ती स्थिता ।
यामासाद्य सरस्वती सुमनसामूर्जस्वती दृश्यते
तस्यां सन्तु सदैव सत्प्रणतयः सौभाग्यवत्यां मम ॥२॥

मृद्वीका त्रपते सितापि सततं सङ्कोचमापद्यते
नैव स्वादु भवेद् गुडं लगुडतामिक्षुः समापद्यते ।
सर्पिस्तर्पयति स्वयं न मधुनि स्वादो न संलक्ष्यते
दुग्धं मुग्धधियो मुधाऽमृतरसं जल्पन्ति यस्याः पुरः ॥३॥

'गीता'-सौरभ-सङ्कुले शुभ-'कथामुक्तावली'-मण्डिते
श्री 'ज्ञानेश्वर'-नीरनिर्मल-'तुकारामा'-रवै राजिते ।
'लीला'ऽऽलिङ्गित-'चन्द्रिका'-चपलया 'मीरालहर्या'ऽन्विते
'क्षमा'-साहित्य-गभीर-नीरधितले मज्जन्तु भोः सज्जनाः ॥४॥

---

*...स् केन्द्रस्थानीयरेडियोनिर्देशस्यानुमत्या ।

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्णदर्शनाचार्यः ]

### गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥१।३।१४

इतश्च दहराकाशस्य ब्रह्मत्वं, "सर्वं तदत्र गत्वा विन्दते" [ छान्दोग्य ८।३।२] "सत्र प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" [ छान्दोग्य ८।३।२ ] इत्यत्र गतिवाचक-पदाभ्यां गमनं प्रतीयते तेन च गन्तु जीवस्य गन्तव्यो ब्रह्मलोकः प्राप्यते, हि यतस्तथा मुक्तस्य ब्रह्मलोकगमनं दृष्टं श्रुत्यन्तरे, "मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्या-च्चन्द्रमसं चन्द्रमसो वैद्युतं तत्पुरुषोऽमानवः, स एनान् ब्रह्म गमयति" [ छान्दोग्य ५।१०।२] इति। ब्रह्मलोकश्च पारमेश्वरमेव धाम न तु हिरण्यगर्भलोकः, श्रुतिषु कुत्रापि सत्यलोकशब्दानुक्तेः। एतं ब्रह्मलोकमित्येतच्छब्देन च प्रकृतं दहराकाशमेव ब्रह्म-लोकशब्देनोल्लिख्य प्रत्यहं सुषुप्तौ जीवानां तत्र गमनं दर्शितम्। सुषुप्तौ जीवस्य ब्रह्मप्राप्ति-र्दृष्टा च श्रुत्यन्तरे "एवमेव खलु सौम्येमाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति" [छान्दोग्य ६।९।२ ] इति, सुषुप्तिश्रुतौ च ब्रह्मलोकशब्दः कर्मधारयसाध्यो न तत्पुरुषसाध्यो हृदये ब्रह्मणो लोकस्याभावात्। किञ्च "स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदय-मिति" [ छान्दोग्य ८।३।३ ] इति हृदयशब्दनिर्वचनलिङ्गेन दहराकाशस्य ब्रह्मत्वं गम्यते। अथवा "अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" [ छान्दोग्य ८।३।२ ] इति जीवस्य ब्रह्मगमनं ब्रह्मलोकशब्दश्च दहराकाशस्य ब्रह्मपरत्वं दर्शयतः। अत्र हेतुः—तथाहि दृष्टमिति। सुषुप्तौ जीवस्य ब्रह्मगमनं दृष्टं श्रुत्यन्तरे—"सति संपद्य न विदुः सति संपद्यामह इति" [ छान्दोग्य ६।९।२ ] इति। ब्रह्मलोकशब्दश्च परमात्मपरो दृष्टः श्रुत्यन्तरे, "एष ब्रह्मलोकः सम्राट्" [ बृ० आ० ४।४।२३ ] इति। एतद् द्वयमेव दहराकाशस्य ब्रह्मत्वे लिङ्गम्। इति ॥१४॥

### धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१।३।१५

किञ्च "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" [ छान्दोग्य ८।४।१ ] इति दहराकाशस्य जगद्विधारणं महिमा श्रूयते तस्माच्च परमात्मत्वमस्य ज्ञायते, यतोऽस्मिन् परमात्मन्येष जगद्विधारणमन्यत्रोपलभ्यते, "एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" [ बृ० आ० ४।४।२२ ] इति। "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० आ० ३।८।९ ] इति च ॥१५॥

(क्रमशः)

---

## पृच्छा

ऋग्वेदे सदृशीरद्येतिमन्त्रभाष्ये [१।१२३।८] सायणेनोच्यते सूर्यो हि प्रतिदिनमेकोनषष्ट्यधिकपञ्चसाहस्रीं योजनानां मेरुप्रादक्षिण्येन परिभ्रमति। स यत्र देशे गच्छति ततः प्राग्देशस्थितानां त्रिंशद्योजनभूभागवर्तिनां स उदितो दृश्यते। एवमुषा अपि यत्र देशे गच्छति ततः प्राग्देशस्थितानां त्रिंशद्योजनभूभागवर्तिनां सोदिता दृश्यते। स चोषसः काल एकविंशतिघटिकाभिः षड्विंशतिपराभिश्च सम्मित इति। अत्र प्रतिदिनमित्युक्त्या षष्टिघटिकाभिरेकोनषष्ट्यधिकपञ्चसहस्रयोजनोपयोगो विज्ञायते। तत्रैतावद्योजनोपयोगाद् यदि षष्टिघटिकात्मकः काल आप्यते तर्हि त्रिंशद्योजनोपयोगेन कियती कालकला आप्येतेत्यनुमानेन ५०५९ : ३० :: ६० : $x$ $\therefore$ $x = \frac{३०\times६०}{५०५९}$ घटयस्तासां पलानि $\frac{३०\times६०\times६०}{५०५९} = \frac{१०८०००}{५०५९} = २१\,\frac{१७६१}{५०५९}$ इत्येवमेकविंशतिसंख्याकान्याप्तानि भवन्ति। तावत एव कालस्योषःकालत्वप्राप्त्या भाष्यकारेण कथमुच्यते "स चोषःकाल एकविंशतिघटिकाभिः षड्विंशतिपराभिश्च सम्मित"इति। कथं चेदं सङ्गच्छत इति।

---

## होमरकाव्ये संस्कृतशब्दः

### मेनिम्—mēnim

विदितमेवैतदशेषाणामपि भारतवर्षीयाणां यत् सप्तद्वीपायां वसुन्धरायां यानि यानि महाकाव्यानि विराजन्ते सर्वेषामेव मूलं संस्कृतभाषामयाणि काव्यानीति। यद्यपि तैस्तैर्महाकविभिरेतस्य निह्नवार्थं महान्तः प्रयासा आस्थितास्तथापि शब्देन शब्दसमष्ट्या वान्तरान्तरैतत् स्फुटीभवति। तथाहि यवनकविप्रजापते हौमरस्य विश्वविश्रुत-Iliad-महाकाव्यस्य प्रारम्भ एव दृश्यते मेनिमिति। अस्य संस्कृतशब्दत्वे नास्ति लेशतोऽपि संशयावकाशः। तथाहि तैत्तिरीयब्राह्मणे [ २।४।२।१ ] श्रूयते—

> चक्षुषो हेते मनसो हेते वाचो हेते ब्रह्मणो हेते।
> यो माघायुरभिदासति तमग्ने मेन्याऽमेनिं कृणु॥

इति। व्याख्यातं चेदं सायणाचार्येण। हे अग्ने यो माम् अभिचरति तस्य शत्रोश्चक्षुषो मनसो वाचश्च ब्रह्मणः प्राणस्य हेतिरायुधं त्वमसि। हे हेते तादृशो यः शत्रुरघायुरघमनिष्टं कर्तुमिच्छन्मामभिदासति हिनस्ति तं शत्रुम् मेन्या त्वदीयेन क्रोधेनामेनिं कृणु क्रोधरहितं कुरु। मेनिशब्दः क्रोधवाची। तथाच वाजसनेयिनः कस्यचिन्मन्त्रस्य ब्राह्मणे समामनन्ति—अमेन्यस्मासु ब्रह्माणि धारयेत्यक्रुध्यन्नस्मासु ब्रह्माणि धारयेत्येवैतदाहेति।

( क्रमशः )

---

# भाषावैचित्र्यम्

It is therefore desirable that they should *make try* to pay the tax as early as possible. *Sunday Statesman,* February 21, 1960, p. 5, col. 5.

वङ्गभाषायामुच्यते—चेष्टा करा, संस्कृतभाषायामुच्यते—चेष्टां कृ, अत एवाभिनवाङ्गलभाषायामुच्यते—make try.

SEUDDING newsboys with posters bearing the hurriedly scrawled legend in charcoal, "It's a boy!" were the first to spread the glad tidings. *Sunday Statesman,* Feb. 21, 1960, p. 8, col. 4.

Seudding-शब्द आङ्गलभाषायां नवागत इति प्रतीयते। को वास्यार्थः?

3. Malhotra had half a mind to say that he had been counting on something too but he *refrained* himself. *Sunday Amrita Bazar Patrika,* Feb. 21, 1960, p. II, col. 3.

अत्र "he restrained himself" "he refrained from saying so" इत्यनयोः सङ्करः स्फुट एव।

---

# नाथ-सम्प्रदायः

[ श्रीगजानन-लक्ष्मण-रेगे, बि-ए ]

श्रूयते किल नाथसम्प्रदायस्यादिप्रवर्तको भगवानादिनाथो नाम। आदिनाथोऽयं देवाधिदेवो योगीश्वरः पार्वतीपतिः शङ्कर इति ज्ञानदेवादिनाथसम्प्रदायिनः श्रद्दधतेतराम्। ज्ञानदेवप्रणीत-भावार्थदीपिकायां पठ्यते।

क्षीरसिन्धुपरिसरीं। शक्तीच्या कर्णकुहरीं।
नेणों कैं त्रिपुरारीं। सांगितलें जें ॥१७५१॥
तें क्षीरकल्लोळा आंतु। मकरोदरीं गुप्तु।
होता तयाचा हातु। पैठें जालें ॥५२॥
तो मत्स्येन्द्र सप्तशृंगी। भग्नावयवा चौरङ्गी।
भेटला कीं तो सर्वांगी। संपूर्ण जाला ॥५३॥
मग समाधि अव्युत्थया। भोगावी वासना यया।
ते मुद्रा श्रीगोरक्षराया। दिधली मीनीं ॥५४॥
तेणें योगाब्जसरोवरु। विषयविध्वंसैकवीरु।
तिये पदीं कां सर्वेश्वरु। अभिषेकिले ॥५५॥

मग तिहीं ते शांभव । अद्वयानन्दवैभव ।
संपादिलें सप्रभव । श्रीगहिनीनाथा ॥५६॥

तेणें कळिकळितु भूतां । आला देखुनी निरुता ।
ते आज्ञा श्रीनिवृत्तिनाथा । दिधली ऐसी ॥५७॥

ना आदिगुरु शङ्करा । लागोनी शिष्यपरम्परा ।
बोधाचा हा संसरा । आला जो आमुतें ॥५८॥

तोहा तूं घेऊनी आघवा । कळीं गिळितियां जीवं ।
सर्वप्रकारीं धांवा । करीं पां वेगां ॥१७५९॥

अयमाशयः। अथैकदा क्षीरसागरोपकण्ठे शक्तिरूपया पार्वत्या सहासीनो भगवान् देवस्त्रिपुरारिस्तस्याः कर्णकुहरे योगमुद्दिश्य किञ्चिन्मन्त्रयमाणोऽवर्तत। तदानीं क्षीरसागरकल्लोलाभ्यन्तरे मकरोदरे सुगुप्तं स्थितेन मत्स्येन्द्रेण तदाकर्णितम्। तदनु योगशास्त्राभिज्ञो मत्स्येन्द्रनाथो भूप्रदेशेषु सञ्चरन् सप्तशृङ्गीनामकं स्थानं प्राप्तः। तत्र च काचिच्चमत्कृतिर्जनानां दृष्टिमाकृष्टवती। सप्तशृङ्गी-वास्तव्यः कश्चित्पुरुषो भग्नावयवश्चौरङ्गी-नामा मत्स्येन्द्रनाथदर्शनसमनन्तरमेव सर्वावयवसनाथः सन् पश्चाच्चतुरङ्गीनाथनाम्ना निरूढिं गतः। परमार्थतत्त्वं प्रतिपन्नो मत्स्येन्द्रनाथः समाधिसुखानुभवेच्छया स्वशिष्यप्रवराय गोरक्षनाथाय योगशास्त्रमुपदिदेश। अन्ततो योगकमलिनीसरोवरं विषयाहिविध्वंसकं योगैश्वर्यसम्पन्नं गोरक्षनाथं स मत्स्येन्द्रः स्वीये योगिराज्यपदे स्थापयामास। तदनन्तरं श्रीशङ्कराद् गुरुपरम्परया समधिगतमद्वयानन्दवैभवसुखं श्रीगहिनीनाथेन स्वगुरोर्गोरक्षनाथात् प्राप्तम्। कालान्तरेण तदनुगृहीतो निवृत्तिनाथ आदिष्टः कलिकालोपग्रस्तजनदुःखासहिष्णुना स्वामिना गहिनीनाथेन। वत्स, प्राप्तोऽसि शिष्यपरम्परया भगवतः श्रीशङ्कराद् योगैश्वर्यनिधिम्। तेन च कलिपुरुषग्रस्तान् विषयोपहताञ्जीवान्भवसागरात् त्रातुं प्रयतस्व। निवृत्तिनाथोऽपि गुरुकुलपरम्परया समधिगतं तदेव योगशास्त्रं स्वभ्रात्रे ज्ञानेश्वराय विधिपूर्वकं समर्पयामास। स एवोपदेशो भावार्थदीपिकारूपेण परिणत इति ज्ञानेश्वरेणोपन्यस्तमष्टादशाध्याय इति। महाभारते तु दृष्टम्। हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन इति। अनुमीयते चैतद्वचनात्। हिरण्यगर्भोक्तिस्तथा च श्वेताश्वतरोपनिषन्निर्दिष्टो योगो मूलभूतो यस्याङ्गं शङ्करप्रणीतो नाथप्रवर्तितश्च योगः।

## मत्स्येन्द्रनाथ-जन्मकथाः

उपरिनिर्दिष्टेभ्यः श्रीज्ञानदेवोद्गारेभ्यो नाथपरम्पराऽऽदिनाथात्प्रभवतीति सुस्पष्टम्। आदिनाथानुगृहीतो मत्स्येन्द्रनाथः। श्रूयन्ते च मत्स्येन्द्रनाथस्य जनिमधिकृत्य नैकविधाः

कथाः। एका भावार्थदीपिकाया उद्धृता। अन्यतमा चैवंरूपा वर्तते। अथैकदा भगवाञ्छङ्करो देवीं पार्वतीं योगमुपदेष्टुं प्रचक्रमे। योगमार्गं शृण्वती पार्वती निद्राविष्टा सञ्जातैकपदे। अत्रान्तरे भगवान् विष्णुर्मकरोदरे प्रविश्य हुङ्कारशब्दं कुर्वंस्तत्सर्वं योगरहस्यमात्मसादकरोत्। यदा च शिवप्रभुः पार्श्वावस्थितां पार्वतीं प्रति दृष्टिं निचिक्षेप तदा तां गाढं प्रसुप्तामपश्यत्। को न्वत्र हुङ्कारं विदधानो विद्यत इति यावत्प्रतीक्षते तावदेव बालवेषधारिणं पुरतो विष्णुं ददर्श। अयमेव बालो मत्स्येन्द्रनाथनाम्ना जगति प्रसिद्धः। पुराणेषु तृतीया कथा समुपलभ्यते। स्त्री काचिदशुभे दिने बालकं प्रासूत। अशुभदायिनं तं बालकं मत्वा समीपवर्तिनि नदीप्रवाहे माता तं प्राक्षिपत्। नदीप्रवाहपतितः स बालो मकरेण निगीर्णः, कालान्तरेण कूलोपकण्ठं वर्तमानयोः शिवपार्वत्योर्योगरहस्यविषयकं संवादं श्रुत्वा 'आदिश, आदिशे'त्याक्रोशन्नासीत्। आरटन्तं तं बालकं पश्यन्ती पार्वती करुणार्द्रहृदया तं सागरात्कराभ्यामुद्धृत्य स्वाङ्के निहितवती। बालकोऽयं कालान्तरे मत्स्येन्द्रनाथसंज्ञितो नाथपथस्य महानाचार्योऽभवदिति सुविदितचरम्। प्रथितयशसो मीनपायाः सिद्धायाः पुत्रोऽयं मत्स्येन्द्रनाथ इत्याख्यायिका प्रचलितास्ति। नेपालेश्वरो वसन्तदेवो राज्यपदपरिभ्रष्टः सन् मत्स्येन्द्रनाथं शरणं प्रपेदे। मत्स्येन्द्रनाथस्य प्रसादेनावाप्तराज्यः स स्वगुरोरेकनिष्ठोऽनुचरोऽभवत् सप्रजः। अद्य यावत् यन्नेपालप्रदेशे नाथसम्प्रदायिनः बहुंशेन दृश्यन्ते तन्मत्स्येन्द्रनाथस्य प्रभावादिति सुस्पष्टम्। ( क्रमशः )

---

# पुस्तक-परिचयः

**The Soma-hymns of the Rgveda—A fresh interpretation, Part II** (RV. 9. 16-50) by S. S. Bhave, M.A., LL. B, PH.D., Reader and Head of the Department of Sanskrit, Maharaja Sayajirao University of Baroda. Oriental Institute, Baroda. Price: Rs. 5'50.

भावेमहोदयेन प्राच्यपाश्चात्यविपश्चितां मतानि विमृश्याङ्गलभाषामयं व्याख्यानमिदं विरचितम्। अत्र ऋग्वेदस्य नवममण्डलगतानां पञ्चत्रिंशतः सूक्तानामाङ्गलभाषामयोऽनुवादः सव्याख्यो विलसति। छात्राणामध्यापकानां चातीवोपकारकमिदं पुस्तकम्। यद्यपि सर्वत्र भावेमहोदयानां मतानि नास्मभ्यं रोचन्ते तथापि तानि विशेषतोऽनुशीलनमर्हन्ति। काश्चिद्विमतयोऽत्र प्रदर्श्यन्ते।

षष्ठे पृष्ठे दृश्यते—*atyūrmih* is taken by Gld. to be a Tat. Comp.; *cf.* his translation 'overcoming the waves'; the accent, however, shows that it is a Bah., which is followed in our translation. It may be even a Tat, if ūrmih is taken to be an *underived word* (*i.e.* a *siddha prātipadika*) इति ।

अस्यार्थः। गेल्ड्नारमहोदयस्य मतेन अत्यूर्मिरित्यत्र तत्पुरुषः समासः, अत एव तस्यानुवादे दृश्यते तरङ्गानभिभवन्निति। स्वरपर्यालोचनेन पुनरस्य बहुव्रीहित्वं सिध्यति। अस्माभिस्तथैवानूदितम्। ऊर्मिशब्दः सिद्धं प्रातिपदिकमित्यभ्युपगम्यते चेदस्य तत्पुरुषत्वमपि सिध्येदिति ।

सर्वमेतदविचारितरमणीयमिति प्रतिभाति। अत्यूर्मिरित्यत्र तत्पुरुषस्वीकारेऽपि तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इति सूत्रेणाव्ययपूर्वपदप्रकृतिस्वर-विधानात्, "निपाता आद्युदात्ताः" "उपसर्गाश्चाभिवर्जम्" इत्यतिशब्दस्याद्युदात्तत्वात् समस्तपदस्याद्युदात्तत्वमुपपद्यत एव। ऊर्मिशब्दस्य "सिद्ध" प्रातिपदिकत्वे को वा विशेषः? ऊर्मिमतिक्रान्त इत्यत्यूर्मिः। अत्रोर्मिं प्रत्यतेर्गतित्वं नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञा भवन्तीति ह्यभियुक्ता आचक्षते ।

पञ्चदशपृष्ठे दृश्यते—आदधत् is a regular impf. subjunctive as the accent on the reduplicated syllable *-dá-*, and the presence of the thematic *-a-*(Pāṇini's *aṭ* of *leṭ*) in *-at* shows !!! इति ।

impf. subjunctive इति विप्रतिषिद्धम्—The imperfect has no mood (Macdonell, *Vedic Grammar for Students* 122 *a*) इति हि वैयाकरणानां घण्टाघोषः।

अस्मिन्नेव पृष्ठ पवमान विदा रयिम् [९।१९।६] इत्यत्रोक्तम्—विदाः is accented most probably for emphasis and also because it occurs in a fresh sentence, which alludes to the consequenee (!) of the thought in *ab* इति। अस्यार्थः। विदा इत्यत्रावधारणार्थं निघाताभाव इति सम्भाव्यतेतमाम्। किञ्चाभिनववाक्यस्थमिदं पदमित्यादि ।

सर्वमेतत् तिङ्ङतिङः इति सूत्रस्यानवबोधनिबन्धनम्। अत्र पवमानेत्यामन्त्रि-तस्यामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावात् विदा इत्यस्य पदात्परत्वाभावाद् अपादादिस्थितत्वाभावाच्च न सर्वानुदात्तत्वमिति स्पष्टमेव ।

अशीतितमे पृष्ठे दृश्यते—

*suvitasya* is analysed by Sāy. as *su+ita*, past pass. part. of

*i* at 1. 38. 3 ; the '*v*'-glide in *suvita* (also required by metre) is explained by him as a Vedic license noted by Pāṇ. in *chandsy* (?) *ubhayathā* 6. 4. 86, which lays down that the vowel of bhū, su and dhī may turn into *y* (?) and *y* respy. or a corresponding glide *uv* or *iy* may substitute it. The accent of the comp. can speak both for Tat. as well as [sic ! ] the Bah. dissolution but the Ṛgvedic evidence shows that it is generally a Tat. इति ।

एतादृशि स्वल्पे परिसर एतावन्तः प्रमादा इतः पूर्वं न कदापि प्रत्यक्षीकृता अस्माभिः । भावेमहोदयस्योक्तितः प्रतीयते सायणाचार्येण छन्दस्युभयथा [ ६।४।८६ ] इति सूत्रेणोवङादेशो विहितः । वस्तुतस्तु तस्य सूत्रस्यात्र प्रसङ्ग एव नास्ति । भाष्यकृतोक्तं तन्वादीनां छन्दसि बहुलमुपसंख्यानम् [ ६।४।७७।१ ] इत्युवङादेश इति । एतत् सर्वथानवद्यमेव । भावे-महोदयेन यदुक्तं तत् सदोषतायाः परां काष्ठामधिरोहति । न भूसुधियोरित्यस्यानन्तरं वर्तते सूत्रं छन्दस्युभयथेति । भूसुधियोरित्यत्र द्विवचनेन शब्दद्वयस्य प्रतीतिर्भवति न तु शब्दत्रयस्य । अत एव छन्दस्युभयथेति सूत्रं व्याख्यातं काशिकायाम्—छन्दसि विषये भू सुधी इत्यनयोरुभयथा दृश्यते । वनेषु चित्रं विभ्वं विशे ।...सुध्यो हव्यमग्ने । सुधियो हव्यमग्ने इति । कौमुद्यामपि भट्टोजिभट्टेन व्याख्यातं भूसुधियोर्यण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वं विभुवं वा । सुध्यो हव्यमग्ने सुधियो वा । इति ।

किञ्च सायणाचार्यमतेनात्र 'इत'शब्दे कर्मणि क्त-प्रत्ययः । भावे-महोदयेनापि past pass. part. इत्युक्तम् । एवं चेद् गतिरनन्तरः [ ६।२।४९ ] इति सूत्रेण गतेः प्रकृतिस्वरः प्राप्नोति । सुवितशब्दः कथमन्तोदात्तः ?

८६तम पृष्ठे दृश्यते—akṣār...It is interesting to note that only at 9. 18. 1 *b* the Pp. renders it as *akṣāh*, whereas in all its other occurrences, it is analysed as akṣār iti इति ।

एतत् सर्वथा प्रामादिकम् । नवममण्डलगताष्टादशसूक्तस्थायाः प्रथमाया ऋचः पदपाठे विस्पष्टमेव—'अक्षारिति' इति दृश्यते । ९।४३।५ मन्त्रस्य पदपाठे अक्षाः-पदं दृश्यते । तत्तु सर्वथा समीचीनमेव । तस्य कारणमपि सुविदितं वैदिकानाम् ।

७० तमपृष्ठे दृश्यते—Sāy'.s explanation of गव्युः as गा इच्छन्,—to be punctilious about grammar (which Sāy. often is in the earlier stages of the Bhāṣya), is inaccurate and should be replaced by गव्यानि इच्छन्. Of course in the Soma-context a translation like

'desiring for cow-products (such as milk, curds etc.)' would be justified by the actual ritual happenings ; we have, however, retained 'desiring for cows', because गा by itself often stands for गव्य in the Somic idiom. इति।

सर्वमेतदनवबोधविजृम्भितम्। गव्यशब्दो गोसमूहार्थेऽपि प्रसिद्ध इति भावेमहोदयस्याविदितमिति प्रतिभाति। गव्यानि इच्छन् इत्युक्तौ भावेमहोदयसदृशोऽपरः कोऽपि क्षीरादिकमित्यर्थं कल्पयेदित्याशङ्क्य भाष्यकृता बहुवचनान्तं गा इति पदं प्रयुक्तम्। भाष्यकारस्याशयो भावेमहोदयेन न बुध्यते चेन्नायं तपस्विनो भाष्यकृतोऽपराधः। "पत्रं नास्ति यदा करीरविटपे दोषो वसन्तस्य किम् ?"

आङ्गलादिभाषाविषयेऽपि भावेमहोदयेन सावधानेन भाव्यम्। तथाहि ९९तमपृष्ठ एकस्मिन्नेवानुच्छेदे दृश्यते—

'ascends up' acc. to Gld.... Sāy. explains it comparatively better...as the good preparation of the juice is already a *'faite accomplie'*. इति। गेल्डनरमहोदयस्य steigt...auf भावेमहोदयेन ascends up इति भाषान्तरितम्। अत्र up शब्दो यद्यपि auf इत्यस्य प्रतिशब्दस्तथापि तदर्थस्य ascends इत्यनेनैव क्रोडीकरणात् तस्य प्रयोगः wasteful and ridiculous excess इति प्रतिभाति। comparatively better इत्यत्राप्येवम्। comparatively शब्देनैव तरप्रत्ययार्थस्य प्रतिपादनाद् better शब्दे स प्रत्ययोऽनकरप्रायः। *faite accomplie* इति पदद्वयं वक्राक्षरै र्बन्धनीयोगेन मुद्रितमिति सविशेषमेव दृष्टिमाकर्षति। अत्राप्युभयोः पदयोः समुपहृतेन ए(e)कारेणान्तर्गडुना किं वा कार्यं साध्यते ?

सप्तमपृष्ठ दृश्यते—इष्णन् as well as चोदय are apparently tautological इति। अत्र are इत्यत्र बहुवचनं प्रामादिकम्।

अष्टमपृष्ठ दृश्यते—the words can be taken both in a literal as well as a figurative sense इति। अत्र as well as इति शब्दसमष्टेः प्रयोगोऽशुद्धः।

ईदृशाः प्रमादा अपरेऽपि वर्तन्ते।

ग्रन्थस्यान्ते विद्याभास्करस्य पण्डितमणिशङ्करोपाध्यायस्य संस्कृतभाषामयं विस्तृतं व्याख्यानं वर्तते नवममण्डलगतषोडशसूक्तस्य। यद्यपि व्याख्यानमिदं पदे पदे व्याख्यातुर्व्याकरणशास्त्रे कृतश्रमत्वं प्रत्याययति तथापि बहुत्र क्लिष्टकल्पनोद्वेजयति मानसं वाचकस्य। तथाहि रथ्यमित्यन्त्यस्वरितपदस्य व्याख्याप्रसङ्गे नोक्तम्—

यद्यपि रम्‌धातोः क्थनि नित्स्वरेणाद्युदात्तो रथशब्दस्तथापि तद्वहति रथयुगप्रासङ्गम् इत्यनेन प्राग्घितीये यति तित्स्वरितमित्यनेन यतः स्वरितत्वाद् अनुदात्तं पदमेकवर्जमिति रेफोऽनुदात्त एव। नन्वत्र तित्स्वरितमिति शास्त्रं बाधित्वा 'यतोऽनावः' इत्यनेनाद्युदात्तत्वं कुतो न श्रूयत इति चेदुच्यते—पदपाठेऽपि स्वरितान्तस्याद्यनुदात्तस्य रथ्यशब्दस्य श्रवणान्नेह यत्प्रत्ययः केवलाद्रथशब्दाद् विवक्षितः, किन्तर्हि, समस्तात् सुरथशब्दात्। शोभनश्चासौ रथश्चेति प्रादितत्पुरुषे समासे निष्पन्नात् सुरथशब्दाद् [?] ( सुरथं वहतीत्यर्थे ) यति, निष्पन्नोऽयं सुरथ्यशब्दः स्वरितान्तः। यत्प्रत्ययान्तस्य द्व्यच्कत्वाभावाच्च नेह 'यतोऽनावः' इत्यस्य प्राप्तिः। ततो 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्यः' इत्यनेन ( पा० ५. ३. ८३ सूत्रस्थेन ) वार्त्तिकेन समासघटकस्य सोर्लोपे रथ्यशब्दः स्वरितान्तः सिद्धः। स्वरितस्वरश्रवणाच्चात्र रथस्य प्राशस्त्यं द्योत्यते। आद्युदात्तत्वे च तन्न द्योत्येतेति विशेषः।* इति।

सुष्ठु खलूक्तं स्वर्गतजानकीनाथभट्टाचार्यैः—There is nothing at which grammarians will stick to save the sanctity of their precious rules. इति। अहो किमभेद्यमम्भसां किमकार्यं टीकाकृताम्!

प्र ते सोतार ओण्यो रसं मदाय घृष्वये [ ९।१६।१ ] इत्यत्र स्वरानुरोधेन ओण्यः रसं मदायेति च्छेद इति विद्याभास्करमहोदयः। तत्र "श्री स्वायणाचार्यचरणास्तु 'ओणीशब्दादोसि ओण्योः' इति पदच्छेदमिच्छन्ति। तस्मिन् पक्ष ओणीशब्दादन्तोदात्तादोसि यणि जाते, 'उदात्तयणो हल्पूर्वात्' इत्यनेन हल्पूर्वकादुदात्तस्थानिकाद् यणः परस्य ओस उदात्तत्वे प्राप्ते स्वरितत्वश्रुतिर्बाधिता स्यात्। जसि तु नास्य प्रवृत्तिः, शसादावेव प्रवृत्तः। तस्माद् ओण्योरिति पदच्छेदः स्वरमहिम्ना न सयुक्तिको भाति। तेन संहितायां प्र ते सोतार ओण्यः ( ओण्योः इति वा )। परम्परागतपदपाठस्य प्रामाण्ये तु च्छान्दसमेवान्त्यस्य स्वरितत्वं बोध्यम्।" इति वाग्जालेन विशङ्कटमात्मीयं पाण्डित्यं प्रकटीकृतं भास्करमहोदयेन। एतत् सर्वथास्यादूरदर्शित्वे साक्ष्यमावहति। तं त्वा धर्तारमोण्योः पवमान स्वर्दृशम् [ ९।६५।११ ] आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः [ ९।१०१।१४ ] इत्यृचोर्विस्पष्टमेव ओण्योः-पदस्य श्रवणात्, चतुरध्यायिकायाम् ओण्योश्च [ ३।६१ ] इति सूत्रेणास्य क्षैप्रस्वरितत्वप्रतिज्ञानाच्च। अवितथं खलूच्यते शास्त्रकारैः—बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति। अथर्ववेदभाष्यकृता

* अनेनैव न्यायेन 'मातुः पादोदकं पिबेद्' इत्यस्यार्थः 'पुत्रमातुः भार्यायाः पादोदकं पिबेद्' इति।

सम्यगेवोक्तम्—अवतेरौणादिको निप्रत्ययः। ज्वरत्वरेत्यादिनोठ्। गुणः। छान्दसं णत्वम्। उदात्तस्वरितयोरित्योकारः स्वर्यते। उदात्तयणो हल्पूर्वादित्येष स्वरो व्यत्ययेन न प्रवर्तत इति। लक्षणेन वेदोऽनुवर्तनीयो न पुनर्वेदेन लक्षणमनुवर्तनीयम्। अत एव च्छन्दसि दृष्टानुविधिरिति वैयाकरणा उद्घोषयन्ति।

सोतार इत्यधिकृत्य विद्याभास्करमहोदयेनोक्तम्—श्रीमत्सायणाचार्यास्तु तिङ्ङतिङ इति निघातस्वरापत्तिभिया 'सोतारः' इति पदं तृजन्तात्तन्नन्ताद्वा प्रातिपदिकाज्जसि निष्पन्नं कल्पयन्ति। तन्न सत्। तिङन्तत्वेऽपि न लुट् इत्यनेन निघातप्रतिषेधात्। किञ्च पदस्यास्य तृज्घटितत्वे रसम् इति श्रूयमाणे तत्सवनकर्मणि कर्तृकर्मणोः कृतीत्यनेन षष्ठी स्यात्। सा च नो श्रूयते। तृन्घटितत्वे तु नित्दन्तस्य सोतृशब्दस्याद्युदात्तत्वमापद्येत। जसोऽप्यनुदात्तत्वात्। किञ्च तस्य जसन्तत्वे, अपौरुषेयतया लब्धप्रतिष्ठायामस्यामृचि मानवेन स्वकल्पितं यत्किञ्चित् क्रियापदान्तरमध्याहार्यं भवेत्। तच्चापौरुषेयेषु वेदेषु किञ्चिल्लाघवं जनयति। तस्माच्छ्रीमत्सायणाचार्यैरत्र रसं सोतारः सोमाभिषवकर्तारः इत्युक्त्वा यदस्य पदस्य जसन्तत्वं प्रतिज्ञायते, यच्च वाक्यपूरणाय आकाङ्क्षानिवृत्तये वा 'प्रस्रावयन्तीति शेषः' इत्युक्त्वा प्रेत्युपसर्गस्य ऋङ्मध्यस्थस्याध्याहृतेन ऋग्बहिर्भूतेन स्रावयन्ति—इति पदेन योगो बोध्यते तदेतत् सर्वमसमञ्जसं भाति। इति।

अहो ज्योतिषशास्त्रनिष्णातत्वं श्रीमतो विद्याभास्करमहाभागस्य! तेन हि होराविज्ञानबलेनावगतं तिङ्ङतिङ इति निघातस्वरापत्तिभिया सोतार इति पदं तृजन्तात्तन्नन्ताद्वा प्रातिपदिकाज्जसि निष्पन्नं कल्पयति सायणाचार्य इति, परं न खलु प्रभवामो वयं विद्याभास्करमहोदयस्य होराशास्त्रविज्ञानं प्रशंसितुम्। सायणाचार्येणान्तोदात्तस्य सोतृशब्दस्य तृन्नन्तत्वं स्वप्नेऽपि न सम्भावितम्। यच्च तस्य तृजन्तत्वं कल्पितं तत्रापि कारणं न शशविषाणायमान-निघातभयं परं सोतरि-सोतुरित्यादीनां विस्पष्टमेव तृन्नन्तपदानां सद्भावः। ऋग्वेदे लुडन्तपदानि विद्यन्ते वा न वेत्यत्र गरीयान् संशयो वर्तते। तृजन्तः सोतृशब्दः पुनः सुप्रसिद्ध एव। प्रकृतायामृचि गोरसमिति पदं न सोतार इत्यस्य कर्म, परमुपसर्गबलादध्याह्रियमाणाया योग्यक्रियायाः कर्म। ईदृशाध्याहारे दोषमुद्भावयतात्मनोऽज्ञानं च कूपमण्डूकत्वं च प्रकटितं भास्करमहोदयेन।

विजानन्तु विद्याभास्करमहोदयाः केवलेन व्याकरणेन ये वेदं व्याख्यातुं प्रयतन्ते तेषामीदृश्येव समवस्था भवति।

सत्स्वपि प्रमादेषु स्खलितेषु च भावेमहोदयस्य पुस्तकं श्रीमद्विद्याभास्करव्याख्यासनार्थं छात्रैरनुशीलनीयं महाविद्यालयानां च पुस्तकागारेषु रक्षणीयमिति शिवम्।

# महाप्रभु-हरिदासम्

डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-विरचितम्

# The Mahaprabhu-Haridasam

( A new Sanskrit drama on the life of Haridasa, one of the greatest Devotees of Sri Krishna Chaitanya Mahaprabhu of Bengal )

By

**Dr. JATINDRA BIMAL CHAUDHURI,**
Ph.D. ( London ), Kavyatirtha
Secretary, Government Sanskrit Siksha Parishat,
West Bengal.
( Formerly, Principal, Govt. Sanskrit College, Calcutta ; Head of the Dept. of Sanskrit, Presidency College, Calcutta ; Lecturer, London University ).

*Foreword by*

**Dr. SATKARI MOOKHERJEE,** M. A. Ph. D.
Director, Nalanda Research Institute.

**Calcutta, 1960 (June)**

# Some other works of Dr. J. B. Chaudhuri

1. Contributions of Women to Sanskrit Literature
   in seven Volumes Rs. 70/-

2. Muslim Contribution to Sanskrit Literature
   in three Volumes. Vol. I : Rs. 5/- Vol. 2 : Rs. 6/- Vol. 3 : Rs. 12/-

3. Muslim Patronage to Sanskrit Learning
   Vol. I Rs. 8/-

4. Sanskrit Duta Kavya Samgraha
   in 8 Vols. Rs. 20/-

5. Sanskrit Historical Kavyas
   in six Vols. Rs. 50/-

6. Sanskrit Anthological Works
   (1) Rasika-Jivana Rs. 7/8/-. (2) Padyaveni Rs. 10/- (3) Padyamrita-tarangini Rs. 10/-. (4) Suktisundara Rs. 3/-. (5) Sabhyalankaraṇa Rs. 4/-

7. Sanskrit Songs
   of Dr. J. B. Chaudhuri, with Bengali translation by Dr. Roma Chaudhuri, Principal, Lady Brabourne College.

8. Position of Women in Vedic Ritual Rs. 12/-

9. Sanskrit dramas by Dr. J. B. Chaudhuri
   1. Bhakti-Visnupriyam Rs. 1-8-0
   2. Mahaprabhu-Haridasam Rs. 3-0-0
   3. Niskincana-Yasodharam Rs. 4-0-0
   4. Sakti-Saradam Rs. 3-0-0
   5. Priti-Vishnupriyam Rs. 2-8-0

# CONTENTS



## Sankrit Text



Appendices

I have great pleasure in introducing to the lovers of Sanskrit Learning a new Devotional Sanskrit Drama from the pen of my beloved pupil Dr. Jatindra Bimal Chaudhuri, Secretary to Govt. Sanskrit Siksha Parishat, West Bengal.

Dr. Chaudhuri's Sanskrit dramas have, indeed, come to stay and gained within a few years immense popularity throughout India and outside. Dr. Chaudhuri and his celebrated wife Dr. Roma Chaudhuri and their Prachya Vani Sanskrit Troupe have visited many parts of our vast country during the last few years, such as Delhi, Puri, Madras, Pondicherry, Bangalore, etc. and earned laurels by staging beautiful Sanskrit dramas, composed by Dr. Chaudhuri.

From a study of the dramas composed by Dr. Chaudhuri, and particularly, after witnessing the plays already staged, one at once feels that Dr. Chaudhuri is an ardent votary of the Mother Principle of India. Thus, he has composed Sanskrit dramas on the Lilasanginis or Holy Consorts of all the Yugavataras or Incarnations of God in different Yugas, Treta, Dvapara and Kali, viz. Sita, Radha, Yasodharā Gopa, Visnu-priya and Saradamani. His Dramas on Haridasa and Raghunath Das have also been very highly spoken of by all competent critics as well as numerous lovers of Sanskrit Learning in the country. Dr. Chaudhuri's new venture Mahimamaya-Bhāratam, a Sanskrit drama on the Irrigation Policy of India from Vedic times down to to-day, is not only striking but also of an abiding interest, adding as it does a fresh leaf to the History of Sanskrit Dramatic Literature.

What I admire most about Dr. Chaudhuri's Sanskrit dramas is the unparallelled beauty of his diction and Sanskrit Language—so simple, and at the same time, so

sweet. Even a School-boy with an average knowledge of his mother-tongue anywhere in India will understand thoroughly well not only the gist of these works but also almost everything in details.

Secondly, the verses. These beautiful gems aptly remind the reader often of the immortal poets of the past. The metres used cover a vast field. Long and short metres have been used with equal grace and facility and there is nowhere any trace of any forced composition throughout his works.

Thirdly, by his present attempts, Dr. Chaudhuri has widened the vista of Sanskrit Dramatic Literature. During the time of Lord Buddha and Lord Sri Krishna Caitanya Gauranga Mahaprabhu of Bengal, Asvaghosha, Rupa Goswamin and Kavi Karnapura Goswamin wrote Sanskrit dramas for propagation of Buddhist and Vaisnava Religion and Philosophy in particular, with a view to depicting the lives of the Founders of those schoolf amongst the masses. They have all now become matters so past history. In modern age, Dr. Chaudhuri is using his very facile pen for the propagation of Indian Religion and Philosophy through the Depictation of the lives of the Holy Mothers who were the real Shaktis of those Incarnations of God who very graciously came down on earth to deliver mankind from the clutches of Ignorance and Indolence.

Fourthly by common consent, Dr. Chaudhuri is an outstanding Research Scholar. This ability has found ample expression in his dramas as well. The materials for his dramas, particularly, Visnupriya and Yasodhara have been collected by Dr. Chaudhuri from rare sources, for which also grateful thanks of Lovers of Sanskrit Learning are due to him.

as the Fountain Head of the eternal flow of Love and Devotion that represent the life of the celebrated Vaisnava Saint Haridasa.

I do hope that Dr. Chaudhuri will produce many more invaluable similar gems that will shine forth with eternal effulgence to the glory of Independent India.

Nalanda Research Institute, Bihar 3. 6. 60. } **Satkari Mookherjee**

## Author's Note

With a feeling of great humility and gratitude to Sriman-Mahāprabhu and Mahājananī Viṣṇupriyā, I present the lovers of Sanskrit Learning with another new Sanskrit drama called Mahāprabhu-Haridāsam based on the life of Haridāsa, one of the greatest disciples of Sri Kṛṣṇacaitanya Mahāprabhu of Bengal. This drama was composed during the Holy Rathayatra Festival at Puri in 1958. The greatness of Haridāsa lies in his unflinching devotion to his Guru and the Bhakti-Premadharma for which he stood. He very boldly replied to the then Mulkpati of Bengal that he was wholly willing to embrace death rather than abandon the name of Hari :—

खण्ड खण्ड हय देह, यदि याय प्राण।
तवु आमि वदने ना छाड़ि हरिनाम ॥ ( चैतन्यभागवत )

He was a 'Nāmācārya' and used to recite the name of Hari, three hundred thousand times a day, not always slowly but often very loudly, in order that the whole living world including even plants and animals might be benefitted by it. Such was his majestic influence that even a courtesan named Lakṣahīrā became a nnn within three days of her first visit to him. She was defeated in her own purpose and took to a religious life as a consequence (Caitaya-caritāmṛta, Antyalīlā, 3.9-8-163)[1].

Haridāsa was also very intimately connected with Srīla Advaita Prabhu and they both were much older than Caitanya Mahāprabhu in age. According to Gaudīya Vaiṣṇava Theology, these two great Saints were mainly

---

1. Cf. याहार निकटे गेले पाप दूरे याय।
एमन दयाल प्रभु केवा कोथा पाय ॥
गङ्गार परश हैले पश्चाते पावन।
दर्शने पवित्र कर, ए तोमार गुण ॥

responsible for the advent of Lord Sri Kṛṣṇa Caitanya Mahāprabhu on earth.

Other close associates of Haridāsa were Sanātana and Rūpa, two of the well-known Ṣaḍvṛndāvana Gosvāmins. They used to live with Haridāsa Thakur whenever they came to Puri for having a Holy sight of the Mahāprabhu.

The joy of Haridāsa Prabhu knew no bounds when he was permitted by the Mahāprabhu to live at a cottage very near his residence because this would give him a unique opportunity to see the Mahāprabhu every day which he did.

Haridāsa courted a voluntary death. He appears to have taken this decision, in order that he might not outlive the Mahāprabhu. Owing to severe austerities, the Mahāprabhu was not then keeping at all well and consequently, Haridāsa wanted to leave his mortal coil earlier.

The Mahāprabhu was sorely grieved at the demise of Haridāsa Prabhu. He dug the grave ( Kabar ) for Haridāsa, spread sands over it and performed all last rites for him including the Mahotsava of Haridāsa, probably, on the same day, himself begging from all for the purpose.

Such is the holy character of Haridāsa and I have humbly attempted to give a pen-picture of this sublime life which has inspired Saints and Sages all throughout the ages.

We are extremely grateful to our revered Guru Prof. Dr. Kshitish Chandra Chatterjee for very kindly publishing the drama in his Journal of repute, the Manjūṣā. Just one year ago, in June, 1959, he also very kindly published another drama from my humble pen, viz. "Bhakti-Viṣṇupriyam" in this Journal. May he enjoy a very long and happy life !

Pracyavani Mandir
3, Federation Street
Calcutta-9
16. 6. 60.

# Staging of Mahaprabhu-Haridasam

1. On 22nd June, 1958 at Jagannatha-vallabha Matha, Puri on the occasion of Rathayatra Utsav. Musical programme : Sri Gaurikedar Bhattacharya and Satyeswar Mookherji.

2. On 28.12.58 at Deshapran Hall, Contai, Midnapore, under the auspices of All India Bhakta Sammelan or Devotee's Conference. Musical programme : Sri Meghanath Basak and Sri Gaurikedar Bhattacharya.

3. On 10. 1. 59 on the occasion of the 16th. Foundation Day celebrations of the Prachya Vani Mandir at University Institute Hall, Calcutta. Musical programme : Sri Pankaj Kumar Mallick, Sm. Chhabi Banerji, Sri Bimal Bhushan, Sri Gaurikedar Bhattacharya and Sri Meghanath Basak.

4. On 24th. January, 1959, at Sanskrit Siksha Parishat Hall under the auspices of West Bengal Govt. Vangiya Sanskrit Siksha Parishat on the occasion of Sanskrit Debate Composition under the presidentship of Rai Sri Harendra Nath Chaudhuri, Education Minister. Musical programme : Sri Meghanath Basak and Sri Gaurikedar Bhattacharya.

5. 2nd May, 1959 at the Viswaroopa Theatre Hall on the occasion of Girish Natyotsav Sammelan. Musical programme : Sj. Pankaj Kumar Mullick, Sm. Chhabi Banerji, Sri Maghanath Basak, Sri Bimal Bhushan and Sri Gaurikedar Bhattacharya.

6. On the 14th October, 1959 at Rasikaranjanī Hall, Madras, under the auspices of Gaudiya Math, Madras, with Sri Visnuram Medhi in the chair. Musical programme : Sri Bimal Bhushan, Sri Prabhat Bhushan, Sri Manohar Chaitanya and Sri Sudhir Chatterji.

responsible for the advent of Lord Sri Kṛṣṇa Caitanya Mahāprabhu on earth.

Other close associates of Haridāsa were Sanātana and Rūpa, two of the well-known Ṣaḍvṛndāvana Gosvāmins. They used to live with Haridāsa Thakur whenever they came to Puri for having a Holy sight of the Mahāprabhu.

The joy of Haridāsa Prabhu knew no bounds when he was permitted by the Mahāprabhu to live at a cottage very near his residence because this would give him a unique opportunity to see the Mahāprabhu every day which he did.

Haridāsa courted a voluntary death. He appears to have taken this decision, in order that he might not outlive the Mahāprabhu. Owing to severe austerities, the Mahāprabhu was not then keeping at all well and consequently, Haridāsa wanted to leave his mortal coil earlier.

The Mahāprabhu was sorely grieved at the demise of Haridāsa Prabhu. He dug the grave ( Kabar ) for Haridāsa, spread sands over it and performed all last rites for him including the Mahotsava of Haridāsa, probably, on the same day, himself begging from all for the purpose.

Such is the holy character of Haridāsa and I have humbly attempted to give a pen-picture of this sublime life which has inspired Saints and Sages all throughout the ages.

We are extremely grateful to our revered Guru Prof. Dr. Kshitish Chandra Chatterjee for very kindly publishing the drama in his Journal of repute, the Manjūṣā. Just one year ago, in June, 1959, he also very kindly published another drama from my humble pen, viz. "Bhakti-Viṣṇupriyam" in this Journal. May he enjoy a very long and happy life !

Pracyavani Mandir
3, Federation Street
Calcutta-9
16. 6. 60.

# Staging of Mahaprabhu-Haridasam

1. On 22nd June, 1958 at Jagannatha-vallabha Matha, Puri on the occasion of Rathayatra Utsav. Musical programme: Sri Gaurikedar Bhattacharya and Satyeswar Mookherji.

2. On 28.12.58 at Deshapran Hall, Contai, Midnapore, under the auspices of All India Bhakta Sammelan or Devotee's Conference. Musical programme: Sri Meghanath Basak and Sri Gaurikedar Bhattacharya.

3. On 10. 1. 59 on the occasion of the 16th. Foundation Day celebrations of the Prachya Vani Mandir at University Institute Hall, Calcutta. Musical programme: Sri Pankaj Kumar Mallick, Sm. Chhabi Banerji, Sri Bimal Bhushan, Sri Gaurikedar Bhattacharya and Sri Meghanath Basak.

4. On 24th. January, 1959, at Sanskrit Siksha Parishat Hall under the auspices of West Bengal Govt. Vangiya Sanskrit Siksha Parishat on the occasion of Sanskrit Debate Composition under the presidentship of Rai Sri Harendra Nath Chaudhuri, Education Minister. Musical programme: Sri Meghanath Basak and Sri Gaurikedar Bhattacharya.

5. 2nd May, 1959 at the Viswaroopa Theatre Hall on the occasion of Girish Natyotsav Sammelan. Musical programme: Sj. Pankaj Kumar Mullick, Sm. Chhabi Banerji, Sri Maghanath Basak, Sri Bimal Bhushan and Sri Gaurikedar Bhattacharya.

6. On the 14th October, 1959 at Rasikaranjani Hall, Madras, under the auspices of Gaudiya Math, Madras, with Sri Visnuram Medhi in the chair. Musical programme: Sri Bimal Bhushan, Sri Prabhat Bhushan, Sri Manohar Chaitanya and Sri Sudhir Chatterji.

7. On the 19th. October, 1959 at Pondicherry Sri Aurobindo Ashram. Musical programme: Sri Bimal Bhushan, Sri Prabhat Bhushan, Swami Manohar Chaitanya and Sudhir Chatterji.

8. On 13. 12. 59. at Gobardanga College, 24 Parganahs, on the occasion af the College Foundation and Reunion of old and New Students. Musical programme: Sri Gaurikedar Bhattacharya.

9. On 14th February, 1960 under the auspices of Chinsurah Pandit Mahasammelan. Musical programme: Sri Gaurikedar Bhattacharya.

10. On 15th. February 1960 at College Hall under the auspices of Govt. Janata College and Basic Training College during Lokotsava. Musical programme: Sri Gaurikedar Bhattacharya.

## Summary of Mahaprabhu-Haridasam act by act

### Nandi

Obeisance to Haridāsa, that great devotee of Mahāprabhu, who recited the Name of Hari three hundred thousand times daily, and who, like Bhīṣma, embraced a voluntary death at a ripe old age.

### Prastavana

The Sūtradhāra (Stage-Manager) tells the Naṭī (the Chief Actress) as to how this Drama "Mahāprabhu-Haridāsam" is meant for serving a double purpose, viz., bringing to light the holy life of the great devotee Haridāsa ; and propagating Sankrit Language and Literature through the easily intelligible and enjoyable medium of a Sanskrit Drama.

### First Act

Place—Haridāsa's Hut in Benapole, near Vanagrāma (Bengal)

Time--Midnight.

Haridāsa in deep meditation, and Lakṣahīrā.

Envious of the great fame of Haridāsa, Rāmacandra Khān, the wealthy land-owner of Vanagrāma (Bengal) sends Lakṣahīrā, the famous beauty of his Court, to lead Haridāsa astray. Lakṣahīrā tries her best, three nights in succession, to lure him away from the path of austerity, but herself becomes converted through his divine influence. Haridāsa leaves the place and at his bidding, Lakṣahīrā stays behind to preach the holy name of Hari.

### Second Act : First Scene

Place—Court of Govardhana Dāsa, the richest land-owner of Sapta-grāma ( Bengal).

Time—Morning.

Govardhana Dāsa, Balarāma Ācārya, Gopāla Cakravartin, Haridāsa.

विग्रहधारी तत् नाम एव हरिः, कृष्णः नारायणः, भगवान्, अन्तरात्मा, परमपुरुष इति च शब्द्यते।

नामात्मना ब्रह्म तदेकमेव
हृत्पुण्डरीके निहितं नराणाम्।
सविग्रहं तत् खलु नामधेयं
कृष्णादिशब्दैर्मुनिभिः प्रयुक्तम्॥५७॥

महम्मदीयाः पुनः तं हरिमेव आल्लाह इति कथयन्ति। हिन्दूनां वेदपुराणेषु यद् ब्रह्मतत्त्वं, कोराणेऽपि महम्मदीयानां तदेव समं तत्त्वं आल्लाह् इति।

वेदादिषु यदार्याणां ब्रह्मतत्त्वं प्रतिष्ठितम्।
महम्मदीय-कोराणे तदेवाल्लाह् निगद्यते॥५८॥

गोडाइ-काजिः—मा मा एवं भण। शान्तं पापम्। मुलुकपते! सर्वथा असहनीयमेतत्।

मुलुकपतिः— (जनान्तिकम्) किन्तु विचारालयमानीतस्य अस्य वक्तव्यम् अस्माभिः श्रोतव्यमेव। (हरिदासमुद्दिश्य) स्वाभिमतं प्रकाशय।

हरिदासः—मन्मतेन एकस्यैव प्रभोर्गुणावली रुचिभेद-हेतोः विभिन्नदेशेषु विभिन्नशास्त्रकारैर्बहुधा कीर्त्यते। हरे-र्नाम्नि मे रुचिः। रुचिभेदानुसारेण अन्यः कश्चन नामान्तरं गृह्णाति। नामसु एव भेदः, वस्तुतस्तु तत्त्वमेकमेव। तस्मात् यथा श्रीकृष्णो माम् आदिशति तथैव अहं चलामि।

गोडाइ-काजिः— (सरोषम्) महम्मदीयशासिते देशे न तद् भवितुमर्हति!

हरिदासः— महम्मदीयशासिते देशे बहवो हिन्दवो महम्मदीयाः सञ्जाताः। ब्राह्मणा अपि। तत्र हिन्दुभिः किं प्रतिविधानं क्रियते? धर्मपरित्यागार्थं किं प्रतिविधानं भवद्भिर्वा कृतम्?

राज्यशासनकर्तृपक्षो धर्मविषये न भिन्न-भिन्नपद्धतिम् अनुसरेत्।

मुलुकपतिः— ( स्वगतम् ) एतस्य मतं समीचीनमेव।

हरिदासः—इत्थमेव मे विचारः। यदि मेऽपराधो विद्यते, शास्तिरवश्यमेव विधेया।

मुलुकपतिः—साधो! तथापि हरेर्नाम त्वया वर्ज्यताम्। अन्यथा एते काजिमहोदयाः तव शास्तिविधानम् अवश्यमेव करिष्यन्ति।

हरिदासः—मुलुकपते! भगवान् एव शास्ता। हरिर्मे शास्तिं वाञ्छति चेदवश्यमेव तथा भविष्यति। किन्तु यद्यप्यहं खण्डशः कुट्टितो भवेयं तथापि नाहं कदापि हरिनाम त्यक्ष्यामि।

मुलुकपतिः—काजिवर! किम् अधुना करणीयम्?

गोडाइ-काजिः — ( सरोषम् ) नैष दयाभाजनम्। एनं द्वाविंशतिहट्टस्थानेषु वेत्राघातैर्जर्जरितं कृत्वा शमनधाम्नि प्रेषयतु भवान्।

मुलुकपतिः—यथा काजिमहोदयस्याभिमतं तथा भवतु।

( सर्वे निष्क्रान्ताः )

( इति तृतीयाङ्कस्य चतुर्थं दृश्यं समाप्तम् )

## पञ्चम-दृश्यम्

(द्वाविंश-हट्टस्थानम्। समयः—मध्याह्नः। प्रविशन्ति वेत्राघातजर्जरितं शोणिताप्लुतं हरिदासमादाय राजपुरुषाः)

राजपुरुषः—एतदेव द्वाविंशहट्टस्थानम्। एकविंशति-हट्ट-स्थानेषु निरन्तरममानुषिकप्रहारो निरर्थको जातः। ( अन्यान् राजपुरुषान् उद्दिश्य ) अन्ततः स्वप्राणरक्षार्थमपि अस्य प्राण-संहारोऽवश्यमेव विधेयः। अन्यथा वयमेव राजरोषाद् वध्या भवेम।

( हरिनामजपरतं हरिदासं राजपुरुषा निर्दयं प्रहरन्ति )

[ गायतः कस्यचन भक्तस्य प्रवेशः ]

( सङ्गीतम् )

अहे राजपुरुष शमनकिङ्कर
जीवदेहरत्नाकर-वायुरयमन्तश्चरः
नितरां कृष्णादेशाचलनतत्परः
वृथा मूढ तव वेत्रप्रहारः ॥ ५९-६० ॥
यथा मध्याह्न-भास्करः सदा खरतापधर—
स्तथा हरेर्दासवरः नित्यं नामजपपरः
प्रजापतेरवतारः हरिभक्ति-रसाधारः
हनुमत्-प्रह्लादापर-भक्तशत-प्रेमसारः
वृथा मूढ तव वेत्रप्रहारः ॥ ६१-६२ ॥
श्रीराधिकावर्णहरो जाह्नवी-तट-विहार-
विष्णुमायाचित्तचोर-चिर-ममताभाण्डारः
हरिदासः साधुवरः मुरारेरन्तिकचरः
भयङ्करशमनकिङ्कर परिश्रमस्तेऽसारः
वृथा मूढ तव वेत्रप्रहारः ॥ ६३-६४ ॥

एष हरिनामेश्वरः नामदानव्रतधरः
फुलियास्थित-मुनीश्वरो बहन्नेत्रजलधारः ।
लब्धभक्त-पुरःसर-भक्तिविश्वाससागरः
साम्प्रतं नातिदूरो द्वापरलीलाचतुरः
कलियुगावतारे चैतन्यसुन्दरः
वृथा-मूढ तव वेत्रप्रहारः ॥ ६५-६६ ॥

हरिदासः—[ स्वगतम् ] भगवन् एतेषां जीवानां दयस्व एते नापराधिनः। यदि अपराधः कस्यापि स्यात्, स मम एव।

( उच्चैर्हरिनाम करोति )

राजपुरुषः—अहो महद् आश्चर्यम् । प्रहार-जजरितोऽपि नासौ प्राणान् त्यजति। ततो गङ्गाजले हरिदासं निक्षिप। येन केनाप्युपायेन अस्य मरणं ध्रुवमेव विधातव्यम् ।

( इति निष्क्रान्ताः सर्वे )

समाप्तः तृतीयः अङ्कः ।

# चतुर्थः अङ्कः

प्रथम-दृश्यम्

[ नदीयायां महाप्रभोराविर्भावः ।
अद्वैताचार्य-हरिदासयोरानन्दनृत्यम् ]

अद्वैतप्रभुः ।

शृणु भ्रातहरिदास अद्यावधि तव दासः
तव हेतोस्तमोनाश-शशाङ्कोदयः ।
श्यामनाम पुण्यधाम पूर्णस्तव मनस्काम:
गोलोकविहारिहरि-वासनानिलय ॥ ६७ ॥
महानन्दो नन्दसुत-नदीयोदयः
पौर्णमासीपूर्णशशिग्रहण-विलयः ॥ ६८ ॥
अहो तमोराजिक्षय-चन्द्रिकोदयः ।
कलिकालभक्तकोटेरानन्द-विजयः ॥ ६९ ॥

हरिदासः ।

अहं दासानुदासः त्वं विश्वजनाश्वासः
हरिदासस्तव दासो युगयुगदासः ।
भक्त-लक्ष-कोटीभय- सद्यःकृपादानलय-
भुवनैकसमाश्रय-नदीयाविलासः ।
तव हेतोः प्रभुवरसुन्दर-प्रकाशः ॥ ७० ॥

अद्वैतप्रभुः ।

नामाचार्यहरिदासः नामभाषसमुल्लासः
हरिप्राणसुखोच्छ्वासप्रफुल्लविकाशः ।
पापलेशसदात्रासः परज्योतिर्नित्यभासः
विष्णुशक्तिचित्तवासः भक्तजनदासः ॥ ७१ ॥

हरिदासः ।

सताण्डवो हुहुङ्कारो धरणिवक्षोविदारः
सुदृढस्तव विश्वासः परमविस्मयः ।
भक्तिसुरधुनीधारा सर्वपापतापहरा
मरुभूमिसारकरा त्वदेकसञ्चयः ॥ ७२ ॥

[ अद्वैतप्रभु-हरिदास-नृत्यकाले अन्येषां भक्तानाम् आगमनम् ]

( सर्वे गायन्ति )

जय जय जय जय नन्दसुत जय ।
जय जय जय जय महाभाव जय ॥
जय जय जय जय भक्तगण जय ।
पूर्णग्रासव्यपदेश-पूर्ण-चन्द्रोदय
जय जय जय ॥ ७३ ॥
नदीयायाः पूर्णचन्द्र जय
जय जय नन्दसुत जय

अद्वैतप्रभुः—( सर्वान् उद्दिश्य ) राहुमुक्तोऽद्यत्वे पूर्णचन्द्रो धरण्यां पुनः विभाति । अतो वयं सर्वे गङ्गायां ग्रहणस्नान-तर्पणादिकं कुर्मः । क्रमेण दूरं गमिष्यति घनतमः ; जगत् पापमुक्तं भविष्यति ।

( सव निष्क्रान्ताः )

## चतुर्थाङ्कस्य द्वितीयदृश्यम्

( कुलीनग्रामः—ततः प्रविशति हरिदासः )

हरिदासः—साम्प्रतमहं भ्रमणव्यपदेशेन शान्तिपुरधामतः कुलीनग्रामं यातुकामः अत्र आगतोऽस्मि। कोऽयं ग्रामः समृद्ध इव प्रतिभाति ?

( प्रविश्य ) ग्रामिकः—( हरिदासमुद्दिश्य ). प्रभो ! भवान् कुत्र गन्तुमिच्छति। अपि भवतः किञ्चित् साहाय्यं कर्तुं प्रभवेयम् ?

हरिदासः —हरे कृष्ण। तव शुभानुध्यानं मां विशेषेण प्रीणयति। अस्मात् कियद्दूरः कुलीनग्रामः ?

ग्रामिकः—अयमेव कुलीनग्रामः ?

हरिदासः— [ स्वगतम् ] प्रथमदृष्ट-ग्राम-वासिन आचरणादेव तन्मया ज्ञातम्। [ ग्रामिकमुद्दिश्य ] कियद्दूरं मालाधरवसोर्गृहम् ?

ग्रामिकः—देव ! अदूरे एव तत्। भवता साकं गच्छता मया तत् प्रदर्श्यते। [ उभौ अग्रेसरीभवतः )

ग्रामिकः—( गृहद्वारं गत्वा ) देव ! एतदेव। ( ग्रामिको निष्क्रान्तः )

हरिदासः—( स्वगतम् ) अहो ! एतदेव तत् पवित्रस्थलं यत्र मालाधरवसुमहोदयः "श्रीकृष्णविजयग्रन्थं" लिखितवान्। श्रूयते किल तस्य पुत्रोऽपि परमभक्त इति। भवतु, गृहस्थम् आह्वयामि। ( प्रकाशम् ) कोऽत्र सन्निहितः ? गृहस्वामिनो दर्शनं याचे।

सत्यराजः—( गृहाभ्यन्तरादागत्य हरिदासमवलोक्य स्वगतम् ) अहो सौम्यता वपुषः !

अपार्थिवी विभा नेत्रे वदनं कोमलोज्ज्वलम्।
मन्ये स्रवति सर्वाङ्गाद् अस्य भूतानुकम्पिता ॥७४॥

नूनं महापुरुषेणानेन भवितव्यम्। तत् पृच्छामि। ( प्रकाशम् ) ननु को भवान् ?

हरिदासः—मां वैष्णवदासानुदासं हरिदासं जानीहि ।

सत्यराजः—स्थाने खलु मे वितर्कः । अहो सुप्रभाता अद्य मे रजनी, यदाकाङ्क्षणीयदर्शनो भवान् दृष्टः । देव ! भवन्तं वन्दे ।

हरिदासः—अहो परममनोरमो युष्माकं ग्रामस्य परिवेशः । अपि भवान् मालाधरवसुमहोदयस्य पुत्रः ?

सत्यराजः—देव ! वाढम् । अहमेव तस्य अधन्यः पुत्रः नाम्ना सत्यराजः ।

हरिदासः—सदा सत्ये सुप्रतिष्ठो राजस्व ।

सत्यराजः—श्रान्तो भगवान् श्रमापनोदनाय विश्रामं भजताम् ।

हरिदासः—विटपिच्छायप्रधानं स्थानमेव मह्यं रोचते । तद्-दूरवृक्षतलं गन्तुमिच्छामि ।

सत्यराजः—देव ! अदूरे वसति परमभक्तो जगदानन्द-पाठकः, यः प्रतिदिनं लक्षहरिनामानि जपति ।

हरिदासः—तस्मादसौ महाजनो लक्षपतिरेव ( इति हसति ) ।

सत्यराजः—यद्यत् भवदभिप्रेतं तत् सर्वं तवाधीनमिति जानीहि ।

हरिदासः—सत्यराज ! अलम् चिन्तया । अहं स्वप्रयोजनानुसारेण सर्वमेव भवद्भ्यः प्रार्थयिष्ये ।

सत्यराजः—देव ! अपनीतश्रमात् सुखोपविष्टाद् भवतो नवधाभक्तिविषये किञ्चित् श्रोतुमिच्छामि ।

हरिदासः—सत्यराज ! नामप्रसङ्गे मे श्रमः स्वयमेव अपयाति । तदलं कालक्षेपेण । इदानीमेव तत् सङ्गीतमुखेन शृणु ।

स्मरणेन हरेर्नाम्नो भवतु वारमात्रकम् ।
पुण्यश्लोकः स्मृतोऽसौ स्यात् प्रीतिधाम चिरं भुवि ॥७५॥
श्रवणेन हरेर्नाम्नो भवतु वारमात्रकम् ।
कीर्तिर्व्याप्नोति भक्तस्य चिराय भुवनत्रयम् ॥७६॥

कीर्तनेन हरेर्नाम्नो भवतु वारमात्रकम् ।
कीर्तिर्व्याप्नोति भक्तस्य चिराय भुवनत्रयम् ॥७७॥
अर्चनेन हरेर्नाम्नो भवतु वारमात्रकम् ।
निगूढज्ञानभाण्डारं चिरपूर्णं सदा भवेत् ॥७८॥
वन्दनेन हरेर्नाम्नो भवतु वारमात्रकम् ।
निर्झरोऽमलभक्तेर्न विशुष्यति कदाचन ॥ ७९ ॥
सेवनेन हरेर्नाम्नो भवतु वारमात्रकम् ।
प्रवाहः पुण्यकृत्यानां निरुध्यते न कर्हिचित् ॥ ८० ॥
दास्यभावं हरेर्नाम्नो भवतु वारमात्रकम् ।
योऽवलम्बेत धन्यः स जगत्तस्य वशंगतम् ॥ ८१ ॥
सख्यभावं हरेर्नाम्नो भवतु वारमात्रकम् ।
यो लभेत सुधन्यं तं जगत् सर्वं सखीयति ॥ ८२ ॥
आत्मनिवेदनं नाम्नि भवतु वारमात्रकम् ।
आत्मायते जगत् सर्वं ध्रुवं तस्य महात्मनः ॥ ८३ ॥
भक्तिपुष्पाञ्जलिं दत्त्वा नवधा नामनामिने ।
हरिदासो हरेर्दासो याचते पादरेणुकाम् ॥ ८४ ॥

[ उभौ निष्क्रान्तौ ]

समाप्तः चतुर्थः अङ्कः ।

# पञ्चमः अङ्कः

## प्रथम-दृश्यम्

[ नवद्वीपे प्रभुः विष्णुखट्टायामुपविष्टः। नित्यानन्दप्रभुः शिरसि छत्रं धारयति। मुरारिगुप्त-श्रीधर-गङ्गादासमुख्या भक्ताः पाद्यार्घ-गन्धपुष्पधूपदीपनैवेद्यादिभिः प्रभुं पूजयन्ति। अद्वैतप्रभुर्दण्डवत् प्रणमति। अद्वैतं विलोक्य प्रभुः मधुरं हसति ]

अद्वैतप्रभुः—प्रभोरेव कृपया साम्प्रतं वीतचिन्तोऽस्मि। यदा प्रभृति भगवान् श्रीरामपण्डितं संप्रेष्य मां श्रीहरिदासञ्च शान्तिपुरे आनीतवान्, ततः प्रभृति भगवन्तं मनश्चक्षुषा बहिश्चक्षुषा च दृष्ट्वा कृत-कृतार्थोऽस्मि।

महाप्रभुः—अद्यत्वेऽहं सर्वेभ्य एव भक्तेभ्यो वरान् दास्यामि। अहो परमसौभाग्यान् नवद्वीपे—

भक्तिभावपरज्योतिर्मण्डितप्रेममण्डनाः।
भक्तश्रेष्ठा विशोभन्ते कृष्णस्य द्वापरे यथा ॥ ८५ ॥
धरित्री कालिमव्याप्ता रुदती भारविक्लवा।
प्रार्थयते दिवारात्रमात्मत्राणाय कातरा ॥ ८६ ॥
द्वापरे मोहनो वेणु राधानामपरायणः।
कलौ भक्तगणास्त्वेभ्यो ध्वनतु नाम कोटिशः ॥ ८७ ॥
वरान् दास्यामि भक्तेभ्यो भक्तिधर्म-प्रवर्धकान्।
सर्वे हृष्यन्तु गायन्तु नमन्तु प्रेमपूरिताः ॥ ८८ ॥

हरिदासः कुत्रास्ते।

अद्वैतप्रभुः—बहिरेव। अयमहम् आह्वयामि तम्। हरिदास! हरिदास!

( ततः परमसङ्कुचितः हरिदासः प्रविशति )

महाप्रभुः—( हरिदासमुद्दिश्य ) कथं हरिदास सङ्कोचमनुभवसि ?

मम देहादपि गरीयांस्ते देहः। तव जातिमप्यहम् आद्रिये। यवनकर्तृकः तव अत्याचारः माम् अतितरामपीडयत्। यदा ते यवनास्त्वां मारयितुं द्वाविंशतिहट्टस्थानेषु वेत्राघात-जर्जरितमकुर्वन्, तदा तान् कर्तयितुं चक्रहस्तः अहं वैकुण्ठादवातरम्। यदा ते सर्वप्रयत्नैः त्वां मारयितुमयतन्त, तदा त्वं तेषाम् अमङ्गल-निवारणाय ध्यानतत्परोऽभवः। यतस्त्वं तेषां कुशलकाम आसीः, ततो मे चक्रमपि विफलमजायत। किन्तु वेत्राघातो यथा त्वां न पीडयेत्, तदर्थम् अहं स्वपृष्ठेन तं सर्वं परिगृहीतवान्।

मत्प्राणमित्रपरिचिन्तितमङ्गलेषु
चक्रं पराक्रमत मे नहि तेष्वसत्सु।
किन्तु व्यथा तव यथा न भवेत्तदर्थं
वेत्रप्रहारमसहे स्वयमेष पृष्ठे ॥ ८६ ॥

स्वचक्षुषा त्वं मम पृष्ठे तत्प्रमाणं पश्य। त्वद्दुःखसहनापारगोऽहं झटित्येव वैकुण्ठात् धराधाम आगतवान्।

हरिदासः —अहो प्रभोः कष्टम्। (इति मूर्च्छति)

महाप्रभुः —उत्तिष्ठ, उत्तिष्ठ हरिदास। सकलमनोरथं सफलीकृत्य मम प्रकाशं पश्य।

हरिदासः —(शनैः शनैः उत्थाय) मादृशाधमजनहेतोः भगवतो देहे वेत्राघातः अपि।

(क्रन्दनतत्परो हरिदासो भूमौ लुठति)

महाप्रभुः —हरिदास हरिदास उत्तिष्ठ, धैर्यं धर। यथासुखं मामवलोकय। शृणु,

भूतले लुठनात् प्रेमी वर्धयते धराव्यथाम्।
सर्वक्रोडच्युतः पुत्रो मातुर्वक्षःस्थितो यथा ॥ ९० ॥
उत्तिष्ठ हरिदासो मे नामाचार्यो विमोहनः।
सर्वं संसहनीयं मे भक्तचक्षुर्जलं विना ॥ ९१ ॥

हरिदासः—( प्रभुमुद्दिश्य ) पितः विश्वम्भर भुवनवल्लभ ! एवं पातकिनं प्रति कृपा ते परममहती। निर्गुणोऽधमाधमोऽहं सर्वजातिबहिष्कृतश्च—त्वच्चरितवर्णने कथं समर्थो भवेयम्। पतित-पावनस्य ते कृपाया माहात्म्यं कथं वा वर्णयामि। प्रभो एतत् एव तव महामाहात्म्यं यच्चरणाश्रितं न त्वं कदापि त्यजसि।

दावानलात् द्यूतसमाविडम्बनाद्
दुर्वाससः शापभयाच्च पाण्डवान्।
भक्तैकनिघ्नस्त्वमनेकविघ्नतः
प्रह्लादमप्याशु हरे व्यमोचयः॥ ६२॥

एतेषां भक्तरक्षणपरायणः त्वमेवासीः केवलं बलम्। किन्तु नाहं भक्तः, एष जनः चरमाधमो भक्तिलेशहीनश्च।

महाप्रभुः—नहि नहि हरिदास ! नात्मानं हीनं मन्यस्व। तव दर्शनेन स्पर्शनेन च अहमात्मानं पूततरं मन्ये।

हरिदासः—प्रभो ! भवद्दर्शने मे कोऽधिकारः। तथापि एका प्रार्थना मे वर्तते।

महाप्रभुः—कथय कथय हरिदास ! तुभ्यमदेयं नास्ति मे किमपि।

हरिदासः—तत् देव ! यथाहं तव दासानाम् उच्छिष्टभोजी सदा भवेयं तथा कुरु। कोऽहं भवत्पादपद्मप्रार्थनाय। प्रभो विश्वम्भर ! सर्वान् अपराधान् मे स्वगुणैः क्षमस्व।

महाप्रभुः—शृणु हरिदास ! येन सह त्वं दिवसं तिष्ठसि, क्षणमात्रं लपनं वा करोषि, स एव मे नितरां प्रसादभाजनं भविष्यति। त्वां प्रति श्रद्धालुर्मामेव श्रद्दधाति। ततः निष्कलुषाय तुभ्यं सर्ववैष्णवहितार्थं भक्तिमेव ददे।

सर्वे—जय जगदीश हरे ! जय भक्तगण जय॥

( हरिदासो रोदनरत आस्ते )

महाप्रभुः—( गङ्गादासमुद्दिश्य ) भो गङ्गादास ! अपि स्मरसि

एकदा त्वं राजभीतः सस्त्रीको गङ्गोत्तरणकामः निशाशेषेऽपि नावमनवाप्य क्रन्दनरत आसीः। ततो गङ्गाम्भःप्रवेशे मनः अकरोः। ततः सहसा सनौकं नाविकं दृष्ट्वा त्वं सातिशयमुत्फुल्लोऽकथयः "सपरिवारं मां रक्षसि चेत् टङ्कामेकां युग्मवस्त्रञ्च तुभ्यं दास्यामी" ति।

गङ्गादासः—प्रभो! तत् सत्यमेव। किन्तु!

महाप्रभुः—अहमेव नाविक आसम्। त्वां गङ्गायाः परपारं नीत्वा ततोऽहं वैकुण्ठमगच्छम्।

(मुरारिमुद्दिश्य) मुरारे! मां पश्य।

[मुरारिः महाप्रभुस्थाने नवदूर्वादलश्यामं धनुर्वाणधारिणं श्रीरामचन्द्रं पश्यन् भूमौ पतित्वा प्रणमति]

महाप्रभुः—(मुरारिमुद्दिश्य) मुरारे! उत्तिष्ठ। अहं रामचन्द्रोऽस्मि, त्वञ्च हनुमान्।

मुरारिः—प्रभो! सदा तथा कुरु, यथा तव जन्मजन्मान्तरपार्षदैः सह वासो मे भूयात्। न मां कदापि तत्र प्रक्षिप, यत्र भवान् न स्थास्यति।

इति सर्वे निष्क्रान्ताः॥

## पञ्चमः अङ्कः—द्वितीय-दृश्यम्

[ जगन्नाथ-माधवसमुद्धारे श्रीहरिदासः ]

स्थानं नवद्वीपराजमार्गः ।

[ प्रविशन्ति पथिचारी, नित्यानन्दो हरिदासश्च ]

पथिचारी—अपि भवतोः किमपि कर्तुं पारयामि ?

नित्यानन्दः—वाढम् । सततं वद—

"कृष्णः प्राणा बलं कृष्णो जीवनं नन्दनन्दनः ॥ ६३ ॥

पथिचारी—( हसित्वा ) स्वयमुन्मत्तौ अन्यान् अपि उन्मत्तान् कर्तुं समुद्यतौ । ( इति निष्क्रान्तः )

हरिदासः— ( द्वितीयं पथिचारिणं दृष्ट्वा ) भ्रातः ! शृणु । सर्वदुःखविनाशाय सर्वदा वद—

"कृष्णः प्राणा बलं कृष्णो जीवनं नन्दनन्दनः ।"

द्वितीय-पथिचारी—अहो कष्टम् ! एतादृशानाम् इहकालः परकालश्च निमाइ-पण्डितेन तुल्यमूल्यौ कृतौ । भवतु, एतौ जगन्नाथ-माधवयोर्हस्तेषु पतितौ भवेतां चेत् सुष्ठु भविष्यति ।

( उभयमुद्दिश्य ) भो परोपकारसाधकौ ! शृणुतम् । अदूरे दृश्येते जगाइ-माधाइ-समाख्यौ भ्रष्टचरित्रौ भ्रातरौ । ब्राह्मणसन्तानौ तौ सातिशयं कलुषाचारौ परगृहदाह-मद्यपानादिदोषलिप्तौ । अन्यान् परित्यज्य तावेव प्राथम्येन उद्धरतम् ।

[ इति तडिद्गत्या निष्क्रामति ]

नित्यानन्दप्रभुः—( हरिदासमुद्दिश्य ) अहो सुष्ठु भणितमनेन महोदयेन । अस्माकं प्रभोरागमनं करुणावितरणायैव । आवां तु तत्र भारप्राप्तौ कर्मचारिणौ । फलाफलं प्रभौ न्यस्याचिरादेव तयोः सकाशं गच्छावः यथा एतौ मदमत्तौ कदापि हसतो रुदितो वा, तद्वत् हरिनाममाहात्म्यात् कृष्णप्रेममत्तौ भवेताम् ।

हरिदासः—चलतु । भवतामाशयस्तादृशश्चेत् तदवश्यमेव भविष्यति ।

नित्यानन्दः– नहि हरिदास ! त्वमेतयोर्मङ्गलं चिन्तयसि चेत् तदवश्यमेव भविता । यतः प्रभुः स्वयमेवोक्तवान् न ते सङ्कल्पः कदापि व्यर्थो भविष्यतीति ।

हरिदासः– किन्तु प्रभोरिच्छा तवेच्छा च अभिन्ने एव । पशु-संबोधने यत् फलं मनुस्सम्बोधनेऽपि तथैव ।

( अन्यतः प्रविशतो जगन्नाथो माधवश्च )

नित्यानन्दः—हरिदास कथमनुभवसि ।

हरिदासः—दुःखकारणमेतद् यत चंलनशक्तिरहितोऽपि अहं चञ्चलमनु चलामि इति ।

नित्यानन्दः—एतौ जगन्नाथ-माधवौ समीपं समागतौ । हरिदास ! नाममन्त्रमहम् एताभ्यां दास्ये । त्वमदूरे तूष्णीं तिष्ठ ।

हरिदासः—अहं त्वया सह तिष्ठामि ।

नित्यानन्दः—नहि, हरिदास, प्रभोः सकाशं याहि । प्रभोर्नाम-मन्त्रमेताभ्यां दास्यामि । अस्माकं चेष्टितं प्रभुर्जानाति चेत् सर्वम् अस्माकं भविष्यति मङ्गलप्रदम् । त्वरितं गच्छ ।

हरिदासः—किं करोमि, वाढम् । ( इति निष्क्रान्तः )

( ततः प्रविशतः जगन्नाथ-माधवौ )

जगन्नाथः—क एष साधुः प्रभाववान् इव लक्ष्यते ।

माधवः—साधुः प्रभाववान् ? भण्डा भवन्ति सर्वदा तपस्विवेश-धारिणः । तस्मादचिराद् एनमाक्रम[illegible] ।

जगन्नाथः—( स्वगतम् ) किन्तु किमपि वक्तुकामोऽसौ । भवतु एनं प्रक्ष्यामि । ( नित्यानन्दमुद्दिश्य ) कस्त्वम् ? कतमस्या दिश आगतोऽसि । अपि न जानासि अत्र निवसतः पुरीरक्षकौ जगन्नाथ-माधवौ साक्षात् यमस्वरूपौ ?

नित्यानन्दः—अहमस्मि कश्चन तपस्वी ।

माधवः—तपस्वी वा गृहस्थो वा न तत्र आवयोः पार्थक्यं किञ्चन विद्यते।

नित्यानन्दः—भेदविचारः सर्वदा त्याज्य एव।

माधवः—शास्त्रपाण्डित्यप्रदर्शनम् अपहाय यथायथमागमनकारणं ब्रूहि। अपि पास्यसि मद्यादिकम्? आत्मनो हितमिच्छसि चेत् अस्मद्दलभुक्तो भव।

नित्यानन्दः—जगति दलमेकमेव—सर्वे वयं भागवतदलभुक्ताः।

माधवः—भगवति नास्माकमास्ते विश्वासः।

नित्यानन्दः—भगवतो भक्ते तु विश्वास आस्ताम्।

जगन्नाथः—कथं वृथा प्रलपसि? न भगवति, न भक्ते कस्मिंश्चिज्जने विश्वासोऽस्माकम् अस्ति।

नित्यानन्दः—भ्रातः! प्रार्थनं मे शृणु। हरिनाम सर्वैरेव ग्रहणीयं जपनीयञ्च।

भज कृष्णं हरिं कृष्णं वद कृष्ण हरे हरे॥ ६४॥

माधवः—कस्त्वम् अस्मान् हरिनाम श्रावयितुम्? रे मूर्ख! न जानासि वयमेव अद्यत्वे गौडदेशस्य शास्तारः?

नित्यानन्दः—हरिनाम एव रक्षति जगत्।

माधवः—रे मूढ! भूयोऽपि प्रलपसि? न जानासि साक्षाद् यमस्य हस्ते पतितोऽसि। साम्प्रतं पैतृकप्राणांस्त्यज।

नित्यानन्दः—तद्विषये नास्ति मे भीतिः। केवलं हरिनाम ब्रूहि, सुखमरणं मे भविष्यति।

भज कृष्णं हरिं कृष्णं वद कृष्ण हरे हरे।

माधवः—भूयोऽपि अश्राव्यं नाम कथयसि। तद् गच्छ यमालयम्। (इति कलशखण्डं गृह्णाति)।

जगन्नाथः—किं करोषि? विरम, विरम।

माधवः—तत् कथम्? न हि, अहमेनं मारयामि, कुट्टयामि च। (इति कलशखण्डं क्षिपति)।

नित्यानन्दः—जय प्रभो ! जय महाप्रभो !

( सहसा सर्वं तमोवृतं जातम् )

( ततः प्रविशन्ति साङ्गोपाङ्गो महाप्रभुः, रक्ताप्लुतो नित्यानन्दः, जगाइ-माधाइ भ्रातरौ च )

( अदूरे दृश्यते मृत्पात्रभग्नांशः )

महाप्रभुः—( सक्रोधं ) चक्र ! चक्र !

नित्यानन्दः—क्रोधं संवर संवर। यदा माधवो मयि मृत्पात्रांशं प्रक्षिप्तवान्, तदा जगन्नाथ एव माधवं प्रशमयितुमयतिष्ट। दैवादेव शोणितं मे निर्गलितमिति भवद्भिः चिन्त्यताम्। प्रभो ! एतयोर्द्वयोः शरीरं मह्यं भिक्षां देहि।

महाप्रभुः—( जगन्नाथमुद्दिश्य ) कृष्णकृपाभाजनं भव। नित्यानन्दं संरक्ष्य त्वं मां क्रीतवानेव। प्रेमभक्तिं लभस्व।

जगन्नाथ ! इतः अवलोकय किं पश्यसि ?

जगन्नाथः—शङ्ख-चक्र-गदापद्मधरं चतुर्भुजं श्रीकृष्णम्।

( महाप्रभुः जगन्नाथस्य वक्षसि श्रीपादपद्मं स्थापयति )

माधवः—देव ! जगन्नाथस्य भ्राताऽहम् तुल्यकृपां मयि च प्रदर्शयतु भवान्।

महाप्रभुः—नित्यानन्द-प्रहारकारिणस्ते कश्चन उपायं नाहं प्रेक्षे।

नित्यानन्दः—मम जन्मजन्मान्तरसञ्चितं पुण्यमस्मै ददामि। एनं क्षमस्व देव।

महाप्रभुः—क्षमार्होऽयं चेत्—आलिङ्गनपाशबद्धमेनं कुरु।

( माधवम् आलिङ्गति नित्यानन्दः )

महाप्रभुः—( भ्रातरौ दृष्ट्वा ) अतः पश्चात् मा पापमाचरतम्। अद्य प्रभृति युवां मां शरणम् आगतौ। युवयोः सर्वमेव पापमहं गृह्णामि।

( ततो महाप्रभुः कृष्णवर्णो जातः )

अद्वैतप्रभुः—पश्यत—एतयोः पापग्रहणाहेतोः महाप्रभोः शरीरं विवर्णं जातम्। तद् वैवर्ण्यमवश्यमपसारणीयम्। कीर्तन-मचिरादेव आरभध्वम्।

अहो राधारसास्वादनमेव रोचते गौरसुन्दराय। तस्मात् कुरुत श्रीराधाकीर्तनम्।

कीर्तिदानन्दिनी राधा वृन्दावन-विलासिनी।
वृकभानु-महाकन्या पद्मिनी कृष्णमोहिनी ॥ ६५ ॥
रक्त-विद्युल्लताकारा सर्वसौभाग्यदायिनी।
कान्ता कलङ्किनी शान्ता खेलत्खञ्जनगामिनी ॥ ६६ ॥
महामेधा महाभूतिर्महाभावस्वरूपिणी।
जयदेव-चण्डीदास-विद्यापति-प्रसादिनी ॥ ६७ ॥
गलत्काञ्चनसंदीप्ता गौराङ्गानन्दसाधिनी।
वङ्गेषु परमा देवी भक्तिस्वरूपधारिणी ॥ ६८ ॥
सृष्टिरक्षणसंनिष्ठा कनिष्ठा मातृरूपिणी।
ब्रह्मवैवर्तविख्याता यतीन्द्रसुतपालिनी ॥ ६९ ॥

[ कीर्तनानन्तरं महाप्रभुः पुनरपि गौरवर्णः सञ्जातः ]

( समाप्तं पञ्चमाङ्कस्य द्वितीयदृश्यम् )

## पञ्चमः अङ्कः—तृतीय-दृश्यम्

[ महाप्रभुणा सह हरिदासस्य नाट्याभिनयः ]

( प्रविशन्ति महाप्रभुः, बुद्धिमन्तखानः, अद्वैतप्रभुः, श्रीवासश्च )

महाप्रभुः—भो बुद्धिमन्तखान ! अद्याहं नृत्यं करिष्ये। श्रीवासो नारदः, हरिदासश्च नगररक्षकः ( कोतोयालः )। एतेषां सर्वेषां कृते त्वमेव सज्जादिकं संगृहाण।

भूयोऽपि शृणु ! प्रकृतिभावेन मे नृत्यं यत्र भविष्यति, अतोऽजितेन्द्रियस्य जनस्य तत्र गमनं निषिद्धमेव।

बुद्धिमन्तखानः—प्रभो ! अहमचिरादेव सवमेतत् संग्रहीष्ये। यथा सर्वे एव नाट्यपुरुषा झटिति आगच्छन्ति, तद्विषयेऽपि मया प्रयत्नः क्रियते।

महाप्रभुः—अतएव त्वं मे परमः प्रिय इति।

[ ततः निर्गच्छति बुद्धिमन्तः ]

अद्वैतप्रभुः—किन्तु प्रभो ! यदि भवतां मतानुसारेण अजितेन्द्रिया न गच्छेयुर्भवन्नृत्यदर्शनाय, कथम् अस्माभिः गन्तव्यम् ?

महाप्रभुः—( सहासम् ) युष्मान् विना कथं नर्तिष्यामि। अद्यत्वे सर्वे यूयं महायोगेश्वरा भविष्यथ; मद्दर्शनात् न च युष्माकं मोहः समुत्पत्स्यते।

अद्वैतप्रभुः—सकृत् महायोगेश्वरः सन् यथा कदापि तत्स्थानात् च्युतो न भवेयं—तदपि भवद्भिर्विधेयम्।

महाप्रभुः—त्वं महायोगेश्वरः असि, कः प्रभवेत् त्वां स्वस्थानात् प्रच्यावयितुम्।

श्रीवासः—किन्तु मद्विषये को विचारो भवताम् ? भवदाशिषा कथमहं न योगेश्वरो भवेयं चिराय।

महाप्रभुः—मातुर्मालिन्याः सम्पर्कात् त्वं हरेरपि पिताऽसि कथं चिराय योगेश्वरपदवीं वाञ्छसि ?

( इति महाप्रभुर्हसति )

## पञ्चमः अङ्कः—तृतीय-दृश्यम्

[ महाप्रभुणा सह हरिदासस्य नाट्याभिनयः ]

( प्रविशन्ति महाप्रभुः, बुद्धिमन्तखानः, अद्वैतप्रभुः, श्रीवासश्च )

महाप्रभुः—भो बुद्धिमन्तखान ! अद्याहं नृत्यं करिष्ये। श्रीवासो नारदः, हरिदासश्च नगररक्षकः ( कोतोयालः ) । एतेषां सर्वेषां कृते त्वमेव सज्जादिकं संगृहाण।

भूयोऽपि शृणु ! प्रकृतिभावेन मे नृत्यं यतो भविष्यति, अतोऽजितेन्द्रियस्य जनस्य तत्र गमनं निषिद्धमेव।

बुद्धिमन्तखानः—प्रभो ! अहमचिरादेव सवमेतत् संग्रहीष्ये । यथा सर्वे एव नाट्यपुरुषा झटिति आगच्छन्ति, तद्विषयेऽपि मया प्रयत्नः क्रियते।

महाप्रभुः—अतएव त्वं मे परमः प्रिय इति।

[ ततः निर्गच्छति बुद्धिमन्तः ]

अद्वैतप्रभुः—किन्तु प्रभो ! यदि भवतां मतानुसारेण अजितेन्द्रिया न गच्छेयुर्भवन्नृत्यदर्शनाय, कथम् अस्माभिः गन्तव्यम् ?

महाप्रभुः—( सहासम् ) युष्मान् विना कथं नर्तिष्यामि। अद्यत्वे सर्वे यूयं महायोगेश्वरा भविष्यथ ; मद्दर्शनात् न च युष्माकं मोहः समुत्पत्स्यते ।

अद्वैतप्रभुः—सकृत् महायोगेश्वरः सन् यथा कदापि तत्स्थानात् च्युतो न भवेयं—तदपि भवद्भिर्विधेयम्।

महाप्रभुः—त्वं महायोगेश्वरः असि, कः प्रभवेत् त्वां स्वस्थानात् प्रच्यावयितुम्।

श्रीवासः—किन्तु मद्विषये को विचारो भवताम् ? भवदाशिषा कथमहं न योगेश्वरो भवेयं चिराय।

महाप्रभुः—मातुर्मालिन्याः सम्पर्कात् त्वं हरेरपि पिताऽसि कथं चिराय योगेश्वरपदवीं वाञ्छसि ?

( इति महाप्रभुर्हसति )

( बुद्धिमन्तखानस्य प्रवेशः )

बुद्धिमन्तखानः—देव पूजनीयभक्तवृन्द च, नाट्यसज्जादिकं सर्वमेव मया संगृहीतम्। अचिरात् नाट्यारम्भणाय प्रयतितव्यम्। सर्वे एव भक्ताः प्रभोः प्रकृतिनृत्यं द्रष्टुं समुत्सुकाः। तथापि स्वल्पावसरेऽपि भाग्यवन्तः सर्वे समागमिष्यन्ति। सत्यं महानन्दकारणं यत् जननी शचीदेवी तस्याः पुत्रवधूश्च समागमिष्यतः प्रभोर्नृत्यदर्शनाय।

महाप्रभुः—तदस्माभिः सर्वैः अचिरेणैव चन्द्रशेखरगृहं प्रति गन्तव्यम्। देवि जगदम्बिके! स्वरूपारोपणं मयि कुरु।

( सर्वे निष्क्रान्ताः )

[ ततः प्रविशति हरिदासः गुम्फद्वयशोभितः शिरस्त्राणधटी--परिहितो दण्डहस्तश्च ]

हरिदासः—[ मञ्चमुपरि इतस्ततः परिभ्रमन् ] अहं वैकुण्ठ-पुरीरक्षकः। मम कर्म जगति सर्वत्र श्रीकृष्णनामकथा-स्मारणम्। परममङ्गलकारणं सौभाग्यञ्च गौडदेशस्य यद्यत्वे श्रीभगवान् अत्रैवागतः। चिरप्रिय-वैकुण्ठस्थानमवमत्य नवद्वीपधाम्नि राजतेऽसौ। नाट्याभिलाषी भगवान् श्रीहरिः अद्य प्रियाया लक्ष्म्या रूपं धृत्वा नर्तिष्यति। अहो महान् अयम् अवसरो हरिभक्तिप्रेमलुण्ठनस्य।

[ गुम्फं समीकरोति ]

श्रीवासः—[ नारदवेशधारी ]—भ्रातः वैकुण्ठपुरीरक्षक! कथय माम् आनुपूर्विकं यत् यत् संघटितम्। निखिलं विश्वब्रह्माण्डं संभ्रम्य वैकुण्ठं गत आसम्। किन्तु श्रीहरिः नदीयायाम् अवतीर्ण इति ज्ञात्वा पुनरत्रैव समागतोऽस्मि।

( सर्वे वैष्णवा जयोल्लासतत्पराः। प्रविशति श्रीरुक्मिणीरूपधरो गदाधरः )

गदाधरः—अहो दौर्भाग्यं मे विदर्भसुतायाः। मा प्राण-प्रिय क्षणविलम्बनं कुरु; पत्र-पाठमात्रं समागच्छ, देव! मम

प्राणान् रक्ष रक्ष। धरणीविमोहन कोटीजन्मजन्मान्तरसाधनभजनैक-फल! त्वाम् अद्यत्वेऽहं चिराय प्राप्तास्मि। दूरं गता मे त्रिविधाङ्ग-तापाः। त्वद्‌यशोगाथाश्रवणात् त्वद्दर्शनातुरं मे मनः त्वदभिमुखं नितरां धावतितराम्। त्वां विना सर्वमेव मेऽपार्थकं भविष्यति। राजराज! धृष्टतां मे क्षमस्व। आत्मसमर्पणकारिणीं मां रुक्मीणीं त्वत्पादपद्मयो रेणुकां कुरु। कुरङ्गिणीं मां शिशुपालव्याघ्राद् रक्ष।

( ततः प्रविशति राधावेशधारी महाप्रभुः )

महाप्रभुः—अहो! वृन्दावनं मे चिरलीलास्थानम्। तत्रैव गच्छामि। तत्रैव मे प्राणारामो लीलाभिरामः श्रीकृष्णसुन्दरो नित्यं विहरति। युगलविभूषणोऽसौ मां विना खिद्यते खलु। देव! नाथ! जगद्रक्षक! झटिति धावनपरा गच्छाम्यहं, मा मा विमनस्को भव। इयं तवैव राधाहं भाग्यवशाद् दूरं नीता—त्वत्पाद-पद्मे चिरेणैव लीना भविष्यामि। ( इति मुह्यति )

मूर्च्छोत्थिता आद्याशक्तिः नरीनृत्यते।

( भक्तानां जयोल्लासः। सर्वे निष्क्रान्ताः च )

( समाप्तं पञ्चमाङ्कस्य तृतीय-दृश्यम् )

## पञ्चमाङ्कस्य चतुर्थं दृश्यम्

## चाँदकाजि-दमनम्

( कदलीवृक्ष-माल्यादिभिः सुसज्जिता नवद्वीपराजवीथी। प्रागेसरति कीर्तनवाहिनी। सर्वाग्रे कीर्तनरतो हरिदासः। तदनु द्वितीये दले श्रीअद्वैताचार्यः, तृतीये महाप्रभु-नित्यानन्दौ, ततः पश्चात् श्रीवास-गदाधर-मुकुन्दादयः )

हरिदासः—

अहिंसा परमधर्मो भारतसाधनामर्मे
प्रभुदर्शितकर्म सर्वसारात्सारम्।
असहयोगान्दोलनं भीरोर्नात्मगूहनं
बलिजन-बलाधानं नित्य-परात्परम्॥ १०० ॥
सततमात्मसंयमिनः दृढसङ्कल्पधारिणः
प्राणपणकलनीय-सत्यानुसारम्।
साधना-सुसिद्धिपथे बाधादलं लीयते
कार्पासतूलहुताशा-कृशा-प्रसारम्॥ १०१ ॥
धन्यं भारतवर्षं वर्धयतेऽत्रानुदिशं
धर्मानिलः कलावपि भवहिताङ्कुरम्।
यथाश्चर्यविशोभनं दिगन्तसंप्रसारणं
पिप्पलोऽधिरोहति वज्रप्राचीरम्॥ १०२ ॥
नास्ति कोऽपि भयलेशः नवद्वीपमधुहासः
रूपं धत्ते श्रीहरिः कनकगौरम्।
जातिधर्माविशेषं प्रकटप्रेमप्रकाशं
नृत्यत कीर्तनदले भक्ति-पुरःसरम्॥ १०३ ॥

अद्वैतप्रभुः—अहो माहात्म्यं विश्वम्भरस्य। सर्वे हिन्दवो मदीया अन्यधर्मावलम्बिनश्च महाप्रभोः जीवनादर्शविमुग्धाः तस्य

आज्ञानुसारेण नृत्यन्तः गायन्तश्च काजिभवनाभिमुखं प्रागेसरन्ति। न केवलं सहस्रशः, लक्षशो जनाः राजवीथ्यादिषु समवेताः। निश्चितं काजिमहोदयोऽपि अनुतप्तो भविष्यति।

महाप्रभुः—भो मुकुन्द! कुत्रासि, जानासि किल त्वां विना, तव मृदङ्गरङ्गं विना, मे नृत्यं न स्फुरति। महत्यस्मिन् दिवसे भृशम् अस्माभिर्नर्तितव्यं यथा सुचिरकालसञ्चितं पापं प्रमोक्षं याति।

मुकुन्दः—देव! अत्रोपागतोऽस्मि। मा कदाचन भवतो नृत्ये वाधा स्यात्।

अद्वैतप्रभुः—(महाप्रभुमुद्दिश्य दूरात्)—देव। शृणु। तव एव माहात्म्यात् नगरवासिनामीदृशी स्फूर्तिः, जनजागरणञ्च। अपगतं भवतु राष्ट्रस्य रागद्वेषादिमूलकं शृङ्खलम् आत्मनश्च!

महाप्रभुः—सुभगप्रयत्नो न कदापि निरर्थको भविता।

काजी—परमाराध्यदेव! अहं भवत्साक्षात्कारेण सर्वथा परिवर्तितोऽस्मि। भवदुद्दिष्ट-हरिनाम-कीर्तनमेव मम प्राणाराम-कारणं भविष्यति। भगवन्! आदिशतु श्रीकृष्णकीर्तनम् अधुनैव अस्मिन् भवत्पादरजःपूतस्थाने हरिदासप्रभुपरिचालितभक्तवृन्दस्य।

महाप्रभुः—श्रीहरिदास एव अत्र प्रभुः। हरिनामकरणे तस्य तुलनं भूभारतयोर्न दृश्यते। पुनः मुकुन्दः कीर्तनविषये परमसहायको भक्तजनस्य। मुकुन्द! काजिमहोदयस्य परितृप्तये श्रीहरिनाम-स्तुतिं कुरु।

मुकुन्दः—देव! वाढम्। (गायति)

(१)

हरेर्नाम परा कान्तिः स्थितेश्च स्थिति-कारणम्।
हरेर्नाम धरादीप्तिर्गतेर्गतिः परायणम्॥ १०४॥
हरेर्नाम महामुक्तिर्मुक्तेश्च परमोचनम्।
हरेर्नाम वरा शान्तिः शान्तेश्च परसान्त्वनम्॥ १०५॥

## पञ्चमाङ्कस्य चतुर्थं दृश्यम्

## चाँदकाजि-दमनम्

( कदलीवृक्ष-माल्यादिभिः सुसज्जिता नवद्वीपराजवीथी।

प्रागेसरति कीर्तनवाहिनी। सर्वाग्रे कीर्तनरतो हरिदासः। तदनु द्वितीये दले श्रीअद्वैताचार्यः, तृतीये महाप्रभु-नित्यानन्दौ, ततः पश्चात् श्रीवास-गदाधर-मुकुन्दादयः )

हरिदासः—

अहिंसा परमधर्मो भारतसाधनामर्मे
प्रभुदर्शितकर्म सर्वसारात्सारम्।
असहयोगान्दोलनं भीरोर्नात्मगूहनं
बलिजन-बलाधानं नित्य-परात्परम् ॥ १०० ॥

सततमात्मसंयमिनः दृढसङ्कल्पधारिणः
प्राणपणकलनीय-सत्यानुसारम्।
साधना-सुसिद्धिपथे बाधादलं लीयते
कार्पासतूलहुताश-कृश-प्रसारम् ॥ १०१ ॥

धन्यं भारतवर्षं वर्धयतेऽत्रानुदिशं
धर्मानिलः कलावपि भवहिताङ्कुरम्।
यथाश्वर्यविशोभनं दिगन्तसंप्रसारणं
पिप्पलोऽधिरोहति वज्रप्राचीरम् ॥ १०२ ॥

नास्ति कोऽपि भयलेशः नवद्वीपमधुहासः
रूपं धत्ते श्रीहरिः कनकगौरम्।
जातिधर्माविशेषं प्रकटप्रेमप्रकाशं
नृत्यत कीर्तनदले भक्ति-पुरःसरम् ॥ १०३ ॥

अद्वैतप्रभुः—अहो माहात्म्यं विश्वम्भरस्य। सर्वे हिन्दवो स्मदीया अन्यधर्मावलम्बिनश्च महाप्रभोः जीवनादर्शविमुग्धाः तस्य

आज्ञानुसारेण नृत्यन्तः गायन्तश्च काजिभवनाभिमुखं प्रागेसरन्ति। न केवलं सहस्रशः, लक्षशो जनाः राजवीथ्यादिषु समवेताः। निश्चितं काजिमहोदयोऽपि अनुतप्तो भविष्यति।

महाप्रभुः—भो मुकुन्द! कुत्रासि, जानासि किल त्वां विना, तव मृदङ्गरङ्गं विना, मे नृत्यं न स्फुरति। महत्यस्मिन् दिवसे भृशम् अस्माभिर्नर्तितव्यं यथा सुचिरकालसञ्चितं पापं प्रमोकं याति।

मुकुन्दः—देव! अत्रोपागतोऽस्मि। मा कदाचन भवतो नृत्ये वाधा स्यात्।

अद्वैतप्रभुः—(महाप्रभुमुद्दिश्य दूरात्)—देव। शृणु। तव एव माहात्म्यात् नगरवासिनामीदृशी स्फूर्तिः, जनजागरणञ्च। अपगतं भवतु राष्ट्रस्य रागद्वेषादिमूलकं शृङ्खलम् आत्मनश्च!

महाप्रभुः—सुभगप्रयत्नो न कदापि निरर्थको भविता।

काजी—परमाराध्यदेव! अहं भवत्साक्षात्कारेण सर्वथा परिवर्तितोऽस्मि। भवदुद्दिष्ट-हरिनाम-कीर्तनमेव मम प्राणाराम-कारणं भविष्यति। भगवन्! आदिशतु श्रीकृष्णकीर्तनम् अधुनैव अस्मिन् भवत्पादरजःपूतस्थाने हरिदासप्रभुपरिचालितभक्तवृन्दस्य।

महाप्रभुः—श्रीहरिदास एव अत्र प्रभुः। हरिनामकरणे तस्य तुलनं भूभारतयोर्न दृश्यते। पुनः मुकुन्दः कीर्तनविषये परमसहायको भक्तजनस्य। मुकुन्द! काजिमहोदयस्य परितृप्तये श्रीहरिनाम-स्तुतिं कुरु।

मुकुन्दः—देव! वाढम्। (गायति)

(१)

हरेर्नाम परा कान्तिः स्थितेश्च स्थिति-कारणम्।<br>
हरेर्नाम धरादीप्तिर्गतेर्गतिः परायणम्॥ १०४॥<br>
हरेर्नाम महामुक्तिर्मुक्तेश्च परमोचनम्।<br>
हरेर्नाम वरा शान्तिः शान्तेश्च परसान्त्वनम्॥ १०५॥

( २ )

स्मरणं मधुरं मननं मधुरं
जपनं मधुरं लपनं मधुरम् ।
हरिनाम शुभं रमणं मधुरं
मधुरं मधुरं मधुरान्मधुरम् ॥ १०६ ॥

श्रीनाम नित्यद्युति विश्वशोभनं
श्रीनाम वक्षोबलमन्तहीनकम् ।
श्रीनाम हृत्स्पन्दनमादिरक्षणं
श्रीनाम प्राणामृतमात्ममोचनम् ॥ १०७ ॥

ज्ञानञ्च भक्तिश्च ततोऽनु कर्म च
श्रीनाम सर्वेषु परं हि साधनम् ।
श्रेयःसु सर्वेषु परं शुभंकरं
श्रीनाम सत्यं शिव-सुन्दरात्मकम् ॥ १०८ ॥

सर्वस्वरूपेषु परं स्वरूपकम्
आनन्द-सच्चिद्युतकं हि नाम शम् ।
आद्यन्तमध्येष्वधुना भविष्यति
श्रीनाममाधुर्यमहो महीयते ॥ १०९ ॥

कमलादपि कम्रतरा सुखदा
तपनादपि दीप्ततरा प्रखरा ।
अचलादपि तुङ्गतरा प्रसरा
मधुरा मधुनोऽपि हरेरभिधा ॥ ११० ॥

तरणी भवाब्धितरणे शरणी
द्युमणिद्युतिर्घनतमोहरणी ।
मरणे सुधा गरलसंयमनी
हरिनाम संनयतु मां सरणिम् ॥ १११ ॥

सत्यमेव यथा महाप्रभुणा कथितम् । हरिनाम-प्रचारणेऽस्मिन् युगे हरिदासस्य नास्ति तुलनम्—

सत्ये युगे भक्तमनःसुखाधृतं
त्रेतायुगे मारुति-वक्षसि स्थितम् ।
मध्ये युगेऽक्रूर-धनञ्जय-श्रुतं
काले कलौ श्रीहरिदास-कीर्तितम् ॥ ११२ ॥

श्रीनाम पूतं कुरुतात् काजिवरम् ॥

महाप्रभुः—सुष्ठु गीतं भणितं च मत्प्रियेण मुकुन्देन—"श्रीनाम पूतं कुरुतात् काजिवरम् ।" पवित्रं च करोतु काजि-महोदयस्य भविष्य-परिवारजनम् ।

[ समाप्तं पञ्चमाङ्कस्य चतुर्थं दृश्यम् ]

## पञ्चमः अङ्कः—पञ्चम-दृश्यम्

### हरिदासस्य पुरीधाम-गमनाय प्रस्तुतिः

[ प्रविशतः शचीमाता, जगदानन्द-पण्डितश्च ]

जगदानन्दः—जननि ! भवतीं साष्टाङ्गं वन्दे। महाप्रभुणा भवदर्थमेव नवद्वीपे संप्रेषितोऽस्मि। श्रीश्रीजगन्नाथप्रभोर्महाप्रसादश्च महाप्रभोः स्वहस्तेन संगृहीतः मया आनीतः।

शचीदेवी—अपि सर्वाङ्गीणं कुशलं मम पुत्रस्य ? पुत्रेण मे किंवा कथितम् ?

जगदानन्दः—सर्वम् अव्याहतं तत्र महाप्रभोः। दिवसयामिन्यौ तेन ध्यानाराधनादिभिः याप्येते। सात्त्विकभावोद्गमाश्च कुसुमप्ररोहा इव तस्य गात्रोद्याने निरन्तरं दृश्यन्ते। तथापि जननि ! यदा यदैव महाप्रभुरस्माकं स्वस्वभावे तिष्ठति, तदा तदैव भवत्या विषये निरन्तरं प्रश्नजालं विस्तारयति। "कीदृशी आस्ते मे जननी ? अपि वास्तुशाकं तया साम्प्रतं पच्यते ? अहं तत् भक्षितुमिच्छामि। अपि जननीं गृहे परित्यज्य अहं सुष्ठु आचरितवान् ?" - भवद्विषये ईदृशानां शतशत-प्रश्नानां समुचितोत्तरं वयं सर्वदा दद्मः।

शचीमाता—( जगदानन्दस्य मस्तकोपरि स्नेहात् करविलेपनं कृत्वा ) विरम, विरम, जगदानन्द ! अपि पुत्रो मे मदर्थमीदृशी-मवस्थामापन्नः। कदा पुत्रं मे पश्यामि ? ईदृशनवनीतकोमलः पुत्रो मे कथं कठोरसन्न्यासधर्मं समाचरति ?

जगदानन्दः - मातः ! स्थिरा भवतु भवती। पुत्रस्य ते कायिकं कष्टं नास्ति किमपि। तदर्थं वयं सर्वे सततमेव यतामहे। किन्तु वाह्यज्ञानावस्थः प्रभुः सदा भवतीमधिकृत्य लपति।

ईदृशी मातृभक्तिः कल्पनाया अपि ध्रुवं बहिर्भूता। "मातृ"-शब्दोच्चारणेनापि प्रभोः अश्रूद्गमो भवति, गद्गदं जायते वाक्यं—क्षणेन अनाथशिशुरिव "मातः" मातः" इति ध्वनिभिः उच्चैः रोदनतत्परो भवति। अथ मूर्च्छां गतवतः तस्य त्वन्नामोच्चारणेनैव, नान्यैः उपायैः, बहोः कालात् अनन्तरं श्वासः क्रमशः स्वाभाविको जायते।

शचीदेवी—वत्स जगदानन्द! युष्माकं हस्तेषु न्यासोऽयं मम पुत्रः। यूयं तस्य रक्षणावेक्षणं कुरुत।

जगदानन्दः—महाप्रभुणा मम नवद्वीपप्रत्यागमनसमये उक्तं—मन्नाम्ना मातुश्चरणयुगलं धृत्वा इत्थं वद—"तव स्मरणमात्रम् अत्रत्योऽपि अहं भवच्चरणयुगलं वन्दे। तव इच्छामात्रं तव स्वहस्तपकं व्यञ्जनादिकं भुञ्जे। मम नीलाचलवासोऽपि भवदाज्ञया एव स्थिरीकृतः। वस्तुतः, त्वत्सकाशमेव सर्वदास्मि, त्वयि निलीनोऽहं वत।"

शचीदेवी—राधासनाथः श्रीकृष्णः पुत्रस्य मे निरन्तरं कल्याणं विदधातु।

जगदानन्दः—मातः! महाप्रसादो गृह्यताम्!

शचीदेवी—अस्मिन् विषये श्रेष्ठाधिकारो मम जीवनशतगुणाधिकप्रियायाः परमकल्याण्या विष्णुप्रियायाः। तामत्र आह्वयामि। मातर्विष्णुप्रिये! विष्णुप्रिये! किन्तु कथं न सा प्रत्युत्तरं ददाति? भवतु, पश्यामि।

[ उभौ निष्क्रान्तौ ]

[ दृश्यान्तरम्। प्रविशति शचीमाता—विष्णुप्रिया भूमौ मूर्च्छिता आस्ते ]

शचीमाता—[ अश्रूणि निषिच्य ] अहो कष्टम्? पुत्रस्नेहातुरा एतावत्कालपर्यन्तम् अहं बहिरेवासम्। इतश्च पतिविरहजर्ज्जरिता वाष्पवेगाकुलिता झञ्झावेगात् कोमलवल्लरी इव भूमौ पतिता

विष्णुप्रिया। मन्ये जगदानन्देन सह मम भाषणं श्रुत्वा पतिस्मरणाकुला मूर्च्छामापन्ना।

[ उपसृत्य ] विष्णुप्रिये ! विष्णुप्रिये ! पश्य महाप्रसादः त्वदर्थं संप्रेषितो विश्वम्भरेण। एहि, मातः, गृहाण। ( उच्चैः रोरुद्यमाना ) मातर्विष्णुप्रिये ! वृद्धाम्, अतिवृद्धां श्वश्रूं त्यक्त्वा त्वं कुत्र गच्छसि ? विश्वम्भरेण तव हस्ते अहं न्यस्ताऽस्मि। मम जीवद्दशायां त्वं मां परित्यज्य कुत्र गमिष्यसि ?

(विचिन्त्य) किं करोमि ? मम विष्णुप्रिया भिषग्वर्याणां चिकित्सायाः सर्वथा बहिर्भूता। नहि साधारणचिकित्सया कोऽपि भविष्यति फलोदयः। तत्, आह्वयामि अमिताभां काञ्चनां च। तत् सखीद्वयमेव अस्या रोगस्य औषधं जानाति। [ उच्चैः ] काञ्चने ! अमिताभे !

[ त्वरितं प्रविशतः अमिताभा काञ्चना च ]

काञ्चना—[ विष्णुप्रियायाः शिरः स्वाङ्के निधाय स्वल्पतोयधारया मस्तकं प्रक्षाल्य च ]

सखि विष्णुप्रिये ! कथमीदृशीमवस्थामापन्नासि ? ( सरोदनम् ) अहो कठिनीभूतोऽस्या देहबन्धः, श्वासप्रश्वासौ सम्यक्तया स्थगितौ। किं करोमि ?

अमिताभा—ईदृश्यां कठिनायाम् अवस्थायां श्रीकृष्णचैतन्य-नाम एव केवलौषधिः। नान्यत् भेषजं कार्यकरि भविष्यति। ततः सर्वे मिलित्वा तत् नाम उच्चैः करवाम।

जय श्रीकृष्ण चैतन्य जय जय जय
जय श्रीकृष्णचैतन्य जय जय जय
जय विश्वम्भर प्रभो जय जय जय
जय जय जय—जय जय जय
विश्वम्भरप्रभो जय जय जय।

अमिताभा—अहो ! आनन्दः, प्रियसखी मे प्रत्यागत-चेतना इव लक्ष्यते ।

विष्णुप्रिया—( चक्षुरुन्मील्य ) काञ्चने ! किं संघटितम् ? कथं रोदिषि ?

( श्वश्रूमवलोक्य )—जननि ! कोटीजन्मसाधनाफलस्वरूपिणि जननि, परमादरिणि जननि मे - मातः ! कथं वा भवत्यपि रोदिति ?

काञ्चना—त्वयैव मूर्च्छामापन्नया वयमेतादृशीम् अवस्थां नीताः । तत् यातु । पश्य ! महाप्रभुणा प्रेषितः पुरीधामतः त्वदर्थं महाप्रसादः श्रीजगदानन्दपण्डितेन ।

विष्णुप्रिया—सखि ! देहि मह्यम् । ( शनैः शिरसि निधाय ) अपि माता मे प्रसादं गृहीतवती ? जननि ! भवती प्राथम्येन गृह्णातु श्रीमहाप्रसादम् । पश्चादहं ग्रहीष्यामि ।

शचीदेवी—अहो ! सर्वावस्थासु नियमकुशलता सेवादक्षता च कल्याणीयाया विष्णुप्रियायाः । यत् सत्यम्,

श्वशुरचरण-श्वश्रूमात्रोर्नितान्तवशंवदा
मधुरमधुरालापा हास्योज्ज्वला विनयान्विता ।
स्वसुखविरता सेवादक्षा रता पतिसेवने
जगति तनयात् कन्यायाश्च स्नुषा हि गरीयसी ॥ ११३ ॥

[ परमं स्नेहं प्रकटय्य विष्णुप्रियाया मस्तकोपरि हस्तं संप्रसार्य ]

मातः विष्णुप्रिये ! तवाभिमतानुसारेण गृह्णामि श्रीमहाप्रसादम् । विश्वकल्याणमयि मातः ! चिरायुष्मती भव ।

[ ईशाननागरः प्रविशति ]

ईशाननागरः—[ स्वगतम् ] दिष्ट्या बहोः कालादनन्तरं जननी विष्णुप्रिया चक्षुषोर्गोचरीभूता । किन्तु भृशं कातरा लक्ष्यते । [ प्रकाशं ] मातः शान्तिपुरतः समागतः श्रीहरिदासठक्कुरः ।

शचीदेवी—त्वरितं तमत्रानय। विष्णुप्रिये, काञ्चने, अमिताभे! यूयमन्तर्गच्छत।

( अन्तर्गतासु तासु ईशाननागरः हरिदासेन सह प्रविशति )

ईशाननागरः—अयमत्रागतः।

हरिदासः—( शचीदेवीं प्रणम्य ) महाप्रभुसम्पर्कात् विश्वस्य जननीं परममङ्गलमयीं वन्दे।

शचीदेवी - सर्वं ते कुशलम् ? कथमास्ते आचार्य-प्रभुः ? सीता देवी च ?

हरिदासः—सर्वं तत्र कुशलं, मम च। किन्तु भृशम् अहं पुरीधामगमनाय उत्कण्ठितोऽस्मि। अद्वैतप्रभोरादेशात् भवत्या अपि अनुमोदनलाभार्थमागतोऽस्मि।

शचीदेवी—तात! सर्वं वृत्तान्तं प्राथम्येन ज्ञास्ये। पुरीधामतः सौभाग्यात् समागतो जगदानन्दोऽपि। युवां भोजनादिकं कृत्वा विश्रामं कुरुतम्। श्रीकृष्णप्रसादात् सर्वं शुभं जायेत। विष्णुप्रियया सार्धमहमेतद्विषयकमालपनमपि करिष्ये। तस्या अभिमतमेव सर्वथा युष्माभिः वरणीयम्। शुभं शुभं, निखिलजगतः शुभं भवतु।

( समाप्तं पञ्चमाङ्कस्य पञ्चमं दृश्यम्।

समाप्तः पञ्चमः अङ्कः॥ )

# षष्ठः अङ्कः

## प्रथमं दृश्यम्

( नीलाचलधाम्नि हरिदासः )

( प्रविशतो महाप्रभुः कश्चन भक्तश्च )

महाप्रभुः—सुखं यथास्थानं सन्निवेशिताः परमभक्ताः शिवसेनादयः साम्प्रतमेव वङ्गदेशात् समागताः। किन्तु कुत्र मे प्रियो हरिदासः ?

भक्तः—देव ! हरिदास आत्मानं जन्महेतुना अशुचिं मन्यते। ततः नात्र अस्माभिः सह समागतः। तेन बहिः राजपथे स्थीयते।

महाप्रभुः—तत् तस्य दर्शनाय मयैव गन्तव्यम्।

एष एव जगतो नियमः—

ये पूताः स्वत एव तीर्थसलिलाद् वह्नेश्च वायोस्तथा
ते स्वीयामपवित्रतामविरतं संस्मृत्य शोचन्त्यहो।
संभूताः खलु ये न पुण्यसरणेः पान्थाः क्वचिज्जीवने
ते पूताः सुतरां वयं वयमिति प्रोद्घोषयन्ति स्फुटम् ॥ ११४ ॥

यस्मात् पवित्रतरं किमपि नास्ते, न गङ्गातोयं नान्यत् किमपि वा स एव आत्मानं शुद्धिहीनं मन्यते। अन्ये तु क्षीणपुण्या जना आत्मानं विशुद्धतमं मन्यन्ते।

( ततः प्रविशति भक्तो हरिदासः अन्यो भक्तश्च )

भक्तः—देव ! एष गौडागतो हरिदासः राजपथे दण्डवत् शयान आसीत्। मया बलादानीतोऽपि नासौ गृहान्तः प्रवेष्टु मिच्छति।

महाप्रभुः—( तमुपसृत्य ) आगच्छ हरिदास, कथं बहिस्तिष्ठसि ?

हरिदासः—( दण्डवत् प्रणम्य ) अधमस्य प्रणामाञ्जलिं गृह्णातु देवः।

( महाप्रभुर्हरिदासमुत्थाप्य आलिङ्गति )

हरिदासः—( महाप्रभोः पादयोः पतित्वा ) देव ! क्षमस्व। मा मा स्पृश माम्, सर्वथाऽस्पृश्योऽस्मि। मा मत्स्पर्शेन पापं ते भूयात्।

महाप्रभुः—( पुनरपि आलिङ्गय ) हरिदास ! तव स्पर्शनं मे आत्मन एव पवित्रतावर्धनाय। त्वद्वत् पावित्र्यं नास्ति मयि। मुहुर्मुहुः त्वं सर्वतीर्थेषु स्नासि ; मुहुर्मुहुः च करोषि यज्ञं तपो दानञ्च। आजीवननिरन्तर-वेदपाठफलं ते करतलगतमेव *। तस्मात् द्विजन्यासिनोऽपि त्वं पवित्रतरः।

हरिदासः—देव ! यथाऽहं प्रत्यहं भवद्दर्शनं प्राप्नुयां तथैव विधीयताम्।

महाप्रभुः—साम्प्रतमदूरस्थिते काशीनाथमिश्रस्य उद्याने त्वं गच्छ। यथा तत्रैव मद्दर्शनोचितस्थाने तव कुटीरं निर्मीयते तथैव अहं विधास्ये। तव भोज्यं च प्रत्यहं मत्स्थानात् संप्रेषयिष्यामि।

हरिदासः—अहो ! सौभाग्यम्। प्रत्यहं महाप्रभोः संदर्शनं भविष्यति, इतः सौभाग्याधिक्यं किं स्यात् ? गदाधरगोस्वामिनो भागवतपाठं श्रोष्यामि, जगन्नाथस्य रथसमीपे नृत्यं करिष्यामि, उच्चैर्हरिनाम प्रतिक्षणं करिष्ये।

महाप्रभुः—तव वासस्थानमिदम् अक्षयपुण्यहेतुकं भविष्यज्जनानां कृते भविष्यति। कोटीकोटीनामजपस्थानं सिद्धपीठस्थानमिति कः सन्देहः। १

हरिदासः—तव वासस्थानसन्निकर्षादस्य स्थानस्य गौरवम् आचन्द्रदिवाकरस्थायि भविष्यति।

महाप्रभुः—तव भक्तिः सर्वथाऽतुलनीया। सर्वत्रैव त्वं प्रभुं पश्यसि। त्वादृशे भक्ते जने एतत् सर्वथा युज्यते। सुखं तिष्ठ ; गम्भीरामन्दिरं यामि। स्वरूप-दामोदर-रामानन्दादयो नाम रसास्वादनाय तत्र अपेक्षन्ते।

हरिदासः—प्रभो ! कोटिशः भक्ति प्रणामान् मे गृहाण।

---

१ (१.) स्थानमिदं सिद्धबकुलस्थाननाम्ना साम्प्रतं प्रसिद्धमास्ते। अत्रैव हरिदासप्रभुः विंशतिवर्षाणि न्यवसत्।

## षष्ठः अङ्कः द्वितीयं दृश्यम्

[ सनातन-हरिदासयोरानन्द-विसंवादः ]

[ स्थानं पुरीस्थ- हरिदासकुटीरम् ]

[ ततः प्रविशतः सनातनो हरिदासश्च ]

हरिदासः—मथुरानिवासी द्वारकाधीशसहचरः नमस्य एव भवान् अस्माकम ।

सनातनः– भवान् प्रणम्यतरो महाप्रभोः सततसान्निध्यात् । द्वापरलीलाचतुरो भगवान् कलौ श्रीकृष्णचैतन्यरूपेण स्वयम् अवतीर्णस्त्वामेव श्रेष्ठं भक्तं मन्यते। तस्मात् सर्वथा त्वम् अतुल-सौभाग्याधीश्वर एव ।

हरिदासः—भक्ताधमोऽहम् । किन्तु प्रभुः स्वयं "त्वदेहं ममैव धनम्" इति सर्वदा वदति। अत एव अतुलनीय-सौभाग्यं ते।

यत् कार्यं प्रभुः स्वयं कर्तुमपारगः तत् कार्यं मथुरास्थेन भवता संसाध्यते । भक्तिसिद्धान्त-प्रचार एव महाप्रभोर्नित्याभिप्रेतः। प्रचार-व्यापार-सुनियामकः प्रभोरेकान्ततः अन्तरङ्गमस्ति भवान् ।

सनातनः—नहि भक्तप्रवर हरिदास, नहि ! बहुसाधना-फलेन प्रभोः सन्निकर्षे वसति भवान् । किं च नामप्रचार एव महाप्रभोः वर्तमानावतारस्य महत्तमं कर्म । तत्र भवतः पार्श्वमपि उपेयाद् ईदृशो जनो भूभारतयोः नास्ति ।

प्रतिदिवसमुच्चैः त्रिलक्षनाम-जपनम् । सवदा सर्वथा नाम-जप-महिम-प्रचारणं—न केवलं तथा आत्माचार-प्रचारयोरभेद-साधन-पूर्वक-नाम-महिम-प्रचारणम्—एतत् सर्वयुगदृष्टि-क्रमेण अपि अघटित-पूर्वमेव मया विचिन्त्यते। आचारः प्रचारश्च कार्यद्वयं त्वयि सममेव व्यवस्थितम्—तस्मात् आर्याणां त्वम् आर्योऽसि, सर्वेषां गुरुश्च असि।

हरिदासः—सनातन ! अहमधमाधमः महाप्रभोः कृपया जीवामि। न जाने किं मेऽभविष्यत् यदि परमदेवताऽसौ परमानुग्रहेण मह्यं स्वीयवासस्थानाददूरे स्थानं नादास्यत्। महाप्रभुश्रीचरणकमलेभ्यो नमः।

## षष्ठः अङ्कः—तृतीयं दृश्यम्

( परीक्षाग्नि महाप्रभोरिष्टगोष्ठी )

( प्रविशतो महाप्रभुर्हरिदासश्च )

महाप्रभुः—हरिदास ! कथं समुद्धारो भविष्यति जगतः पापरतानां जनानाम् ।

हरिदासः—प्रभो "हा राम" इति पदोच्चारणात्, नामाभासेनापि सिद्धेरवश्यंभावित्वात् ।

महाप्रभुः—किन्तु हरिदास ! सर्वेऽपि जना मुक्तिं प्राप्य जगत् त्यजन्ति चेत् ब्रह्माण्डं स्याज्जीवशून्यम् । तादृशी अवस्था तु भीतिप्रदा ।

हरिदासः— भगवन् ! निगूढां ते लीलां बोद्धुं के शक्नुवन्ति ? तथापि मन्यते मया—प्रेषिताः सन्तु नाम जना वैकुण्ठं मुक्तिमापन्नाः । भूयोऽपि जीवा उत्पत्स्यन्ते, विश्वब्रह्माण्डं च पूर्णं करिष्यन्ति—यथापूर्वं तथा परम् एवमेव भविष्यति ।

महाप्रभुः—अस्माद् हेतोस्त्वं मे समालिङ्गनभाजनम् ।

( महाप्रभुर्हरिदासमालिङ्गति )

अन्यदपि आस्ते मे कथनीयम् । सनातनो मह्यं देहं प्रदाय मां तस्य पुनः प्रदानं याचते; तन्न युक्तम् । अस्मिन् विषये त्वमपि मे सहायको भव । दद्रुदुष्टे देहे मे शान्तिबाधकं किमपि नास्ति, विशेषतः भक्तजनस्य । कथं सनातनस्यास्मिन् विषये सङ्कोचः ? सन्न्यासिनो जनस्य यथा पङ्के तथा चन्दने समदृष्टिः स्यात् ।

हरिदासः—महाप्रभो ! अत्रास्ते मे वैमत्यम् । मादृशमपि जनं यो महाप्रभुः पादपद्मे स्थापयति तस्य दया एव सर्वत्र बलवत्तमा । दृष्टेः भेदाभेदयोः प्रश्नो नास्ति ।

महाप्रभुः—( विहस्य ) हरिदास ! यूयं मे सन्तानसदृशा इति न वा ?

हरिदासः—एतद्विषये कः सन्देहः ।

महाप्रभुः—यथा जननी सन्तानानां सर्वभारग्रहणक्षमा, तथाहमपि । माता कदापि देहक्षतादिहेतोः पुत्रं न दूरे करोति; वस्तुतः—एतादृशाय तनयाय एव मातुः सेवा उत्कण्ठा च समधिकतरा । मातृरूपेण अहं भक्तसमाजं जगच्च परिपालयामि । हरिदास ! सृष्टिसंरक्षणे मातृ-हस्त एव प्रशस्ततमः !

एवं सनातनस्य कण्डूशोणिताप्लुतदेहो मे विशेषतः सेवा-भाजनम् ।

हरिदासः—भागवती कृपा ईदृशी एव ।

महाप्रभुः—हरिदास ! भक्तदेहं कदापि प्राकृतं मा गणय । असौ ध्रुवमप्राकृतः चिदानन्दमयश्च ।

हरिदासः—देव ! इयं ते शिक्षा जगति विशेषफलाधायिका भविष्यति ।

महाप्रभुः—सर्वे मे भक्ताः सुखिनो भवन्तु । ॐ हरे कृष्ण ।

( षष्ठाङ्कस्य तृतीयं दृश्यं समाप्तम् )

( समाप्तश्च षष्ठः अङ्कः )

## ाम: अङ्कः—प्रथम-दृश्यम्

### हरिदासप्रभोर्निर्याणम् ।

( भाद्री शुक्ला त्रयोदशी तिथिः )

ततः प्रविशतः गोविन्द-हरिदासौ

स्थानं सिद्धवकुलतरोरधस्तात् हरिदासस्य कुटीरम्

हरिदासः—अहो ! वृद्धे वयसि जराग्रसनात् नाहं शक्नोमि साम्प्रतं मत्प्रतिज्ञानुसारेण प्रतिदिवसं त्रिलक्षसंख्यक-हरिनाम-जपनं कर्तुम् । यथा तथा भवतु—त्रिलक्ष-नामजपनं मयाऽवश्यमेव करणीयम् ।

गोविन्दः—प्रभो ! महाप्रसादो महाप्रभुणा प्रेषितः, गृह्यताम् ।

हरिदासः—महाप्रसादं नाद्यत्वे गृह्णामि, संख्याजपो मे नाधुना शेषं यातः । किन्तु कथं वा महाप्रसादं नाद्रिये । एवं भवतु—कणमात्रं ग्रहीष्यामि ।

( इति सस्तुतिकं प्रसादकणं गृह्णाति । गोविन्दो निष्क्रान्तः )

हरिदासः—( सिद्धवकुलतरुमुद्दिश्य ) तरो पित्रधिक सिद्धवकुल ! —महाप्रभोर्दन्तमार्जनदारुखण्डात् पुनर्जीवनमाप्तस्त्वं सुशोभित-शाखोपशाखः मह्यमधमाधमाय यावज्जीवं स्वयं महाप्रभुरिव आश्रयं दत्तवान् । अद्य जीवन-दीपनिर्वाणस्य पुरोभागे भवन्तं साष्टाङ्गं वन्दे । [ इति साष्टाङ्गं प्रणमति ]

स्थित्वा सुखेन सुतरामुटजे त्वदीये
नीता मया यदिह विंशतिवर्षकालाः ।
यद्वीक्षितोऽनुदिवसं स महाप्रभुस्तद्
भूयाच्छिवं वकुल ते मुकुलोद्गमानाम् ॥११५॥

अहो इच्छामृत्योरपि सर्वान् विहाय अपरिचिते पथि गच्छतो वैक्लव्यमिवानुभवति मे अन्तरात्मा, यतः प्रकृतिम् अपि मत्प्रयाण-दुःखितां संभावयति। तथाहि—

आच्छाद्य मेघवसनेन नभोऽपि वक्त्रं
वर्षाच्छलेन करुणं वत रोदितीव।
पत्राग्रतः स्खलितवारिदवारिबिन्दु-
रेखोऽपि केसरतरुस्त्यजतीव चास्रम्॥११६॥

(ततः प्रविशति महाप्रभुः)

महाप्रभुः—(स्वगतं)

जानेऽहं हरिदास एष न चिरान्निर्याणमापत्स्यते
नाहञ्चापि ततः परं बहुदिनं स्थास्यामि भूमण्डले।
एवं सर्वमिदं करामलकवत् स्पष्टं विजानन्नपि
प्रारब्धं विषयं समं परिकरैर्निष्पादयाम्यज्ञवत्॥११७॥
सुहृदयं जननान्तरसञ्चितो
वितनुते मयि कामपि हृद्यताम्।
भजन-कीर्तन-नामरसास्पदं
न हरिदासमृते मम जीवनम्॥११८॥

(प्रकाशं) हरिदास! कणमात्रं महाप्रसादं त्वं गृहीतवान् इति गोविन्देन मत्सकाशे उक्तम्। अपि शरीरं ते अस्वस्थतां भजते? सततमेव मया कथितं—मदर्थमेव तव जीवनम् अवश्यं रक्षणीयम्।

हरिदासः—देव! सत्यां तव कृपायां कथं मे दौर्भाग्यं जायेत? अधमाधमस्य निन्द्यकलेवरस्य मे शरीरं त्वत्प्रसादात् सुस्थमेव। महाप्रभो! तवैव आशीर्वादै रौरवादहं वैकुण्ठमिव नीतोऽस्मि। भगवतो भवतोऽशेषकृपाभाजनमहं न जानामि

किमपि कष्टम्। किन्तु यस्मात् कष्टात् कष्टतरम् एकमपि नास्ति भवितु-महर्हति वा, तदेव दूरे कर्तुमहं यतमानोऽस्मि।

महाप्रभुः—हरिदास! का कथा ते हृदये वर्तते? निःशङ्कं मां ब्रूहि।

हरिदासः—शिव शिव, महाप्रभो! स्पष्टं ब्रवीमि यदास्ते हृदये मम। नाहं ते वियोगव्यथां सोढुं समर्थो भविष्यामि। अनुभूति-रद्यत्वे मे इयं जाता एष एव मे प्रकृष्टः समयः संसारपारावार-परपारगमनाय। तवैव चरणयोर्मस्तकं निधाय, तवैव वदनेन्दु-सुधाम् आपरितोषं निपीय, तव सन्निधौ तव श्रीपूतनाम यथेच्छं जिह्वया उच्चार्य, अहं मानवजीवनस्य सर्वसार्थक्यं भगवच्चरणप्राप्ति-मिच्छामि इति। देवदेव! मा अस्मिन् विषये त्वं बाधा भव। त्वत्-सकाशे इयमेव मे ऐकान्तिकी प्रार्थना। त्वद्विहीनं जगत् नाहं कदापि द्रक्ष्यामि, कदापि कदापि न।

महाप्रभुः—हरिदास! भक्तवाञ्छापूरणमेव मे स्वाभाविको धर्मः। भक्ति-सम्राजस्ते वस्त्राञ्चल एव भगवान् सर्वदा सर्वथा बद्ध आस्ते। तथापि त्वमेव मे वक्षःपञ्जरास्थि, त्वमेव मे निःश्वसितस्वरूपमिति विचिन्त्य विमनायमानोऽस्मि।

हरिदासः— तत् सर्वं भवतः, मम गुणापेक्षि कदापि न।

त्रातो न केवलमिहैव भवे त्वयाऽहं
लीलासु तावदपरासु तथैव गुप्तः।
विप्राधिकारकलनादि महोच्चभाग्यं
किं किं न मेऽत्र घटितं तव हि प्रसादात्॥११६॥
यस्य प्रभो तव विलोकनमन्यमर्त्यै-
रेकान्तदुर्लभमनर्जितपुण्यभारैः।
तं त्वां निरन्तरमहं प्रविलोकये यद्
धन्यस्ततः क इह भूमितलेऽस्ति मत्तः॥१२०॥

अहं ध्रुवं जानामि—सत्यमहं भक्ताभास एव; मत्तो गुण-गरिष्ठाः कोटिभक्ताः ते राजन्ते। तव धर्मस्य परिपोषणं परिरक्षण-संविधानं च ते एव करिष्यन्ति।

महाप्रभुः—( स्वगतम् )

भक्तस्येच्छा कथमिव मयैकान्तिकी नानुमोद्या
मित्रस्यैवंविधगुणवतो विप्रयोगोऽप्यसह्यः।
यद्वा तद्वा भवतु शतधा दीर्यतां हृत्प्रदेशः
शेषेच्छायास्तदपि भवतान्मित्रवर्यस्य पूर्तिः ॥१२१॥

( हरिदासमुद्दिश्य प्रकाशं )

ईदृशी बलवती तव इच्छा चेत्, नाहं तव पथि बाधा भविष्यामि।
हरेर्नाम विजयताम्! मधुसूदनस्य श्रीकृष्णस्य इच्छा विजयताम्॥

हरिदासः—

नाहं प्रार्थी विमुक्तेजनिमरणभयात् किन्तु जन्मान्तराणां
येषु त्वद्दासदासस्तव च परिकरोच्छिष्टभोजी सदा स्याम्।
प्रेमोन्मत्तो धरायां नियतमवतरिष्याम्यहं तावदस्यां
भक्तेष्वेकोऽपि यावद् धरणितलगतः क्लिश्यते वैष्णवेषु ॥१२२॥

महाप्रभुः—( करुणकरुणं दृष्ट्वा ) भक्तवाञ्छा विजयताम्।

( सप्तमाङ्कस्य प्रथमं दृश्यं समाप्तम् )

रिदासस्य अन्तिमो दिवसः

हरिदासः—महाप्रभो ! मदग्रत एव उपविश । मम वक्षसि तव गीपादपद्मं धारय । निष्पलकनेत्राभ्यां तव वदनारविन्द-माधुर्य-सुधाम् अहं पास्यामि । सर्वे भक्ता मह्यं चरणरजांसि ददतु ।

महाप्रभुः—सर्वैरुच्चैर्हरिनाम क्रियताम् ।

सर्वे—नमो नारायण हरे नमो नारायण हरे ।

महाप्रभुः—जयो दीयतां भक्तश्रेष्ठाय हरिदासाय ।

( वक्रेश्वर-पण्डितो नरीनृत्यते )

सर्वे ।

जय जय जय जय हरिदास जय
जय जय जय जय महाप्रभो जय—
गौरहरे जय
जय जय जय जय हरिदास जय
जय जय भूयो भूयो हरिदास जय
जय जगन्नाथ जय
जय महाप्रभो जय

महाप्रभुः –

प्रेमोन्मत्तः प्रणयमधुरो वैष्णवैकान्तसेवी
श्रद्धाशुद्धोऽविगणितविपत्पात-पूतान्तरात्मा ।
नाम्नां कोटेर्जपननिरतः श्रद्धया योऽनुमासं
प्राप्तो लोकान्तरमहह मे प्राणभूतः स बन्धुः ॥१२४॥

अघटितं घटतेऽद्य किमहो स्वरूप रामराय ।
समप्राणो हरिदासो मां कथं त्यजति चिराय ॥१२५॥
शून्यं मम धराधाम
श्रावयेत् को हरिनाम
मम सुखसङ्गं करोति भङ्गं श्रीकृष्णरायः ॥१२६॥

कृष्णनामगीतपरः
कोटीभक्तसहचरः
प्रहारजर्जरो मार्जनकातरो याचते कः कुशलाय ।।१२७।।
कृष्णनामप्रेममत्तः
जीवहितदत्तचित्तः
प्रेमभृत्यः परोन्मत्तः कोऽन्यो यतेत परोन्मादाय ।।१२८।।
किं करोमि कुत्र यामि
कुत्र मे प्रियमाप्नोमि
कतमदोषात् कृष्णरोषाद् भवामि निःसहायः ।।१२९।।
कुत्र स मे हरिदासः
प्रयामि शतप्रयासः
लभेय यत्र मम त्यागासहं प्राणरक्षणाय ।।१३०
याहि सिन्धुतीरेऽथवा वकुलाजिरे ! स्वरूप रामराय ।
नीलसिन्धुनीरे कृतस्नानो रे कस्मै यामि प्रायः ।।१३१
श्रीजगन्नाथ-श्रीमहाप्रसाद-परितृप्त-हरिदासाय ।
सिद्धवकुलतले देहि पुण्यफले श्रीभोगं कृतजपाय ।।१३२
भक्ताय हरिदासाय
गम्भीरा-चिरजपाय
देहि भोगं चिरप्रसादाय
गम्भीर-मित्राय
गम्भीरा-जपाय
देहि हरिदासाय
कुर्वाणाय नाम नित्यपुण्य-धाम मम कर्णविनोदाय ।।१३३

( समाप्तं सप्तमाङ्कस्य द्वितीयं दृश्यम् )

## सप्तमः अङ्कः—तृतीयं दृश्यम्

[ स्थानं जगन्नाथमन्दिरस्य सिंहद्वारम् ]

[ हरिदासस्य महानिर्याणानन्तरं महाप्रभोः खेदः अनुष्ठानानि च ]

( प्रविशन्ति महाप्रभुः, स्वरूपदामोदरः, राय-रामानन्दः, वक्रेश्वर-पण्डितः, अन्ये च )

महाप्रभुः—भो भक्ताः ! युष्माभिः साक्षात् दृष्टं भक्तः कथं स्वेच्छामृत्युमवलम्बते। एतादृशभक्तानां सर्वमेव स्वेच्छाधीनम्। अनेन व्यसनेन बहोः कालात् सन्न्यासधर्मावलम्बिनो ममापि हृदयं द्विधा भिद्यते, देहबन्धः स्रंसते इव। न मनो वशीकर्तुमस्मि समर्थः।

आ बाल्यात् हरिनामजपपरायण एष महात्मा स्वीयजन्मपरिग्रहेण वसुन्धरामपि पावयामास। हरिनामसंप्रसारणाय नासीदस्य किमपि अदेयमकरणीयं वा। जगति निवसतः अपि अस्य मनः सर्वथा जगतो बहूध्व स्वत एव व्यचरत्।

न जाने कथमेतादृशमकारणबान्धवं भक्तश्रेष्ठं विहाय प्राणान् धारयिष्ये।

क्व लब्धव्यस्तादृग् भजननिपुणो नामनिरतः
क्व वा लभ्यः प्रेम्णा गलितहृदयः कीर्तनपरः।
प्रचारार्थं नाम्नो निखिलभुवने दुर्जनकरे
शतं वेत्राघातानधिततु सहेताद्य कतमः ॥ १३४

राय-रामानन्दः—प्रभो ! संसारत्यागी परमसन्न्यासी भवान् अस्य कृते समुद्रतीरे वालुकाभ्यन्तरे कवर-प्रदानादि यत् यदेव करणीयमासीत अन्त्येष्टिक्रियाविषये, तत् सर्वमेव कृतवान्।

किं शोच्यते भगवता कृतमेव सर्वं
लोकान्तरं गतवतो यदिहास्ति कृत्यम्।
आ प्रोथनान्मृततनोर्विवरे धरण्याः
साकं मृदङ्गनिनदेन च कीर्तनेन ॥ १३५

वक्रेश्वरपण्डितादीनां नर्तनकीर्तनैः पुरुषोत्तमधाम उच्चाहृत-शब्दब्रह्मप्रपूरितमास्ते ।

स्वरूपदामोदरः—एतस्य महात्मनः शून्यस्थानं न कदापि पूर्णं भविष्यति ।

सत्यं धराऽस्य चरणाब्जपरागपूता
लोकाश्च धूतकलुषा हरिनाममन्त्रात् ।
एतादृशाः सुकृतिनो बहुभाग्ययोगात्
प्रादुर्भवन्ति भुवने क्षणजन्मभाजः ॥१३६

महाप्रभुः—रायरामानन्द !—अतः परमावयोः गमनसमयः—स्पष्टमेव उक्तं ठक्कुरहरिदासेन—ममैव विरहासहनहेतोः त्वरितमेव तेन प्रस्थितं धराधाम्नः—मदर्थं स्वर्गसिंहद्वारं परिष्कर्तुम् ।

स्वरूपदामोदरः—

प्रभो केयं वाणी वदनसरणेर्निःसरति ते
यया प्राणस्पन्दः सपदि ननु मन्दं प्रवहति ।
विलीना यावन्नो न खलु हरिदासस्य विरह-
व्यथा तावद्धाता किमिदमतिघोरं घटयति ॥१३७॥

राय-रामानन्दः—मा इत्थं भण । शतशतभक्ताः तव मुखारविन्दं निरीक्ष्यैव सुखं प्राणान् धारयन्ति । श्रीवृन्दावने, नवद्वीपधाम्नि, पुरीधाम्नि, एवं सर्वत्र तव प्राणप्रियतमभक्तगणाः त्वद्वदनार-विन्दसौरभं दिशि दिशि आघ्राय स्वर्गीयानन्दान् निरन्तरं लभन्ते । त्वत्प्रचारितश्रीधर्मो महामहीरुह इव दिशि दिशि शाखाप्रशाखा विस्तार्य वरीवृध्यते । वयसा नवीन एव भवान् कथम् अकाले अन्तिमकालं चिन्तयति ?

मग्ना हि शोकतिमिरे हरिदासयानाद्
भक्तास्त्वदास्य-शशिना वशिना ध्रियन्ते ।
वृन्दावनादिषु जनास्तव पार्षदा ये
तिष्ठन्ति तेऽपि सततं तव दर्शनोत्सुकाः ॥१३८॥

महाप्रभुः—रामानन्द ! तिष्ठतु नामैतत् सर्वम् । इदानीं श्रीहरिदासस्य पारलौकिककृत्ये मनो दीयताम् । इच्छाम्यहं तस्य पारलौकिकसुखार्थम् अद्यैव महोत्सवं कर्तुम् । द्रव्यसंग्रहे- को विधिः स्यात् ? भवतु—जगन्नाथसिंहद्वारेऽद्य अहं हरिदासार्थं भिक्षां याचिष्ये । (उच्चैः)

बणिजोऽवधत्त मम याचनामिमाम्
अवधूत एक इह देहमत्यजत् ।
परलोकशान्तिमभिलक्ष्य साध्यते
स्वजनैस्ततोऽस्य महतो-महोत्सवः ॥१३६॥

करे करण्डं परिगृह्य तस्माद्
भिक्षां यथार्हां भवतोऽद्य याचे ।
तस्यैव पारत्रिकमङ्गलार्थं
प्रदत्त किञ्चिद् यदि रोचते वः ॥१४०॥

( प्रतिजनं भिक्षां याचमानो महाप्रभुः )

जानन्तु भवन्तः यस्मात् कोऽपि जगति पवित्रतरो नासीत्—सोऽसौ महात्मा हरिदासः धराधाम त्यक्तवान् । अद्यैव तस्य आत्मनः परितृप्त्यर्थमहं महोत्सवानुष्ठानं करिष्ये । यथाशक्ति मह्यं किञ्चिद् ददतु ।

प्रथमविपणिकः—[ स्वगतम् ] अहो महाप्रभुः स्वयमेव अद्य भिक्षां करोति ! प्रभो ! सर्वमेव एतत् भवतः । तव मन्दिरे सर्वं नेष्यामि ।

द्वितीयः—भगवन् !

विपणिरियमशून्याऽनेकपण्यादिभिर्मे
सुखद-विविध-भोज्य-द्रव्य-सम्भारपूर्णा ।
यदि भगवदनुज्ञा जायते मात्रयापि
प्रभुचरणसरोजे सर्वमप्यर्पयामि ॥१४१॥

महाप्रभु:—( उन्मत्तवत् हुङ्कारं कृत्वा )

हे धरावासिनो मनुष्यस्थावरजङ्गमाः सर्वे शृणुत—अद्यैव भीष्मवत् स्वेच्छामृत्युं वृणुते स्म मे प्राणप्रियो हरिदासः। मदर्थमेव असौ जगति समागच्छत्, मम धर्मं प्रचार्य मम जीवनं फलपुष्पैः चिरसौन्दर्यमयं लावण्यप्रसादितं कृत्वा असौ सुदूरतमदेशं गतः—नराकारेण यस्मात् स्थानात् न कोऽपि प्रत्यावर्तते।

किन्तु किमहं करोमि मन्दभाग्यः। ईदृशस्य त्यागासहनस्य बन्धोः त्यागं कथम् अहं सहिष्ये। श्रीकृष्ण राधामाधव—कीदृशमेतत् ?

[ ततः प्रविश्य गायति कश्चन भक्तः ]

श्रीकृष्णचैतन्यकष्टंमहो जीवनान्तकारि।
प्रदीपः प्रभाहीनो व्योमचरो निष्पन्दनः
भालचन्द्रमोहीनो यथा शिवस्त्रिपुरारिः ॥१४२॥
नाद ओङ्कारहीनः सागरो वारिहीनः
निष्कौस्तुभः श्रीकृष्णो राधाचित्तहारी।
श्रीशचीस्नेहपुष्टोऽद्वैतहुङ्कारतुष्टः
श्रीहरिदासहीनस्तथा नदीयाविहारी ॥१४३॥
पापतापदूरकारी सर्वदुःखहारी।
भक्तगणप्रेमपुष्टो नवद्वीपहरिः ॥१४४॥
हरिदासकान्तिहीनः कान्तकान्तो हरिः।
राजतेऽद्य दुःखदीर्णो नदीयाविहारी ॥१४५॥

( कोऽपि भक्तः प्रविशति )

भक्तः—महाप्रभो ! वाणीनाथपट्टनायकेन तथा काशीमिश्रेण पक्कानि पर्वतप्रमाणानि भोज्यद्रव्याणि समाहृतानि। तद् विरम्यतां देवेन भिक्षाटनात्।

महाप्रभुः—( भक्तगणमुद्दिश्य ) तद् अहं स्वयं परिवेशनं करिष्ये।

स्वरूपः—भगवान् क्लान्तः। तस्माद्वयमेव परिवेशनादिकं करिष्यामः।

महाप्रभुः—हरिदासार्थमेतत् मया करणीयमेव।

स्वरूपः—तद् भवान् प्रारभताम्।

महाप्रभुः—स्वरूप! जगदानन्द-काशीश्वर-शङ्कर-प्रभृतीनाह्वय। तेऽपि सहायका भवन्तु।

पुनः शृणुत भक्तजनाः सर्वे—अद्यत्वे ये जना अत्र समुपस्थिताः नृत्य-कीर्तन-विजयोत्सवदर्शन-भोजनादिव्यपदेशेन, तेषां सर्वेषामेव कृष्णप्राप्तिरवश्यमेव भविष्यति—हरिदासस्य शक्तिमाहात्म्यात्।

स्वरूपः—वयं धन्याः स्मः। विजयतां भक्तिधर्मः

महाप्रभुः—अहो! श्रीकृष्णः सानुग्रहम् एतत् महारत्नं मह्यं ददौ; तस्य इच्छया एव अद्य मे वक्षो जातं शून्यम्। एष आसीत् विश्वस्य शिरोमणिः, येन विहीना पृथिवी रत्नहीना जाता।

भगवत इच्छा सर्वथा विजयताम्। सर्वे जयकारं ददतु—

जय जय जय हरिदास जय।

हरिदास! चिरं जीव; आचन्द्रसूर्यं भक्तानां हृदयेषु जीविष्यसि। हरिदास! पुष्पे सौरभमिव, दुग्धे धवलिमेव त्वं मयि सर्वदा भविष्यसि।

स्वरूपः—एष एव भगवतो महिमा। इत्थं भक्तमहिमा च। स्वयं भवसागरतरणी भक्तान् स्वाभीष्टपदं प्रापयितुं समुपस्थिता भवति। स्वयं भगवान् निरन्तरं रोदिति भक्तजनसंदर्शनार्थम्।

महाप्रभुः—(साश्रु-गद्गदकण्ठम्)

हरिदास! तव पादस्पर्शेन धन्या जाता धरणी; तव स्पर्शादहमपि अस्मि धन्यतमः। अद्य प्रभृति तव भक्तिः प्रवहतु नदीकल्लोलेषु, वहतु च सा पवनगतौ। काननपुष्पेषु भवतु सा विकशिता, पक्षिकण्ठेषु ध्वनिता, पार्थिवरजःसु प्रतिकणमुल्लसिता।

तवैव माहात्म्यात् निखिलस्य जगतः, भक्तानां सर्वेषां चिरकल्याणं भूयात्।

स्वरूप ! भक्तानां कृते किम् अन्यत् प्रियं कर्तुं शक्नोमि ?

स्वरूपः—देवदेव ! इतोऽपि प्रियमस्ति। तथापीत्थं भवतु (भरत-वाक्यम्)

जगदघदलदूर-संप्रेरणी
करुणाकरजलरोहि-मन्दाकिनी।
अभिनव-सुख-नित्य-संतोषिणी
सुमधुर-मधु-लोल-गोराभिधा ॥१
महिममयी सा धरणिलसित्री
स्थिरसुखसम्पत्-सततविधात्री।
अतल-भवाब्धौ विहितवहित्रा
जनयतु हर्षं कुसुमविचित्रा ॥१४७

(समाप्तं सप्तमाङ्कस्य तृतीयं दृश्यम्)

समाप्तश्चायं श्रीयतीन्द्रविमलचतुर्धुरीण-विरचितः
महाप्रभु-हरिदासनामाख्यः नाटकग्रन्थः ॥

## महाप्रभु-हरिदास-नाटकस्य

### श्लोक-सूची

| श्लोकः | पृष्ठा | श्लोकसंख्या | छन्दः |
|---|---|---|---|
| जीवदेहरत्नाकर | ३५ | ६० | मात्रा |
| ज्ञानञ्च भक्तिश्च | ५६ | १०८ | इन्द्रवंश |
| तत्त्वकण्टकितं ज्ञानं | ७ | १४ | अनुष्टुप् |
| तरणी भवाब्धितरणे | ५६ | १११ | प्रमिताक्षरा |
| तलातल-रसातल | २६ | ४६ | मात्रा |
| तेषु केचित् | २ | ३ | अनुष्टुप् |
| त्रातो न केवलमिहैव | ७० | ११९ | वसन्ततिलक |
| त्रेतापदग्धसंसारे | १० | २६ | अनुष्टुप् |
| दावानलाद् द्यूतसमा | ४४ | ९२ | इन्द्रवज्रा |
| दास्यभावं हरेर्नाम्नो | ४१ | ८१ | अनुष्टुप् |
| देव कुरु मयि कृपां | ७ | १६ | मात्रा |
| द्वापरे मोहनो वेणू | ४२ | ८७ | अनुष्टुप् |
| धनी वा दीनो वा | ८ | १९ | शिखरिणी |
| धन्यं भारतवर्षं | ५४ | १०२ | मात्रा |
| धरित्री कालिमव्याप्ता | ४२ | ८६ | अनुष्टुप् |
| नवघनश्यामं नयनारामं | ६ | २० | मात्रा |
| न ह्यम्मयानि | १० | | उद्धृत श्लोक |
| नाट्ये नियोजितं | ३ | ५ | अनुष्टुप् |
| नाद ओङ्कारदीन | ७८ | १४३ | मात्रा |
| नामाचार्यहरिदासः | ३७ | ७१ | मात्रा |
| नामाचार्यो हरेर्दासो | २६ | ४४ | अनुष्टुप् |
| नामात्मना ब्रह्म | ३३ | ५७ | उपजातिः |
| नायं पलायिता जातु | २८ | ५२ | अनुष्टुप् |
| नारीं दीनां हीनां | ७ | १७ | मात्रा |

| श्लोकः | पृष्ठा | श्लोकसंख्या | छन्दः |
|---|---|---|---|
| नास्ति कोऽपि भयलेशः | ५४ | १०३ | मात्रावृत्तम् |
| नाहं प्रार्थी विमुक्तेः | ७१ | १२२ | स्रग्धरा |
| नीरूपनिरञ्जन | २० | ४० | मात्रा |
| पापतापदूरकारी | ७८ | १४४ | मात्रा |
| प्रजापतेरवतार | ३५ | ६२ | मात्रा |
| प्रणमामि महाप्रभु | १ | १ | मात्रा |
| प्रतिध्वनिमयकुहु | २० | ३८ | मात्रा |
| प्रभो केयं वाणी | ७६ | १३७ | शिखरिणी |
| प्रागेव सूर्योदयत० | १३ | ३० | इन्द्रवंशा |
| प्रेमोन्मत्तः | ७३ | १२४ | मन्दाक्रान्ता |
| प्रोल्लसद्-रागरस | २० | ३६ | मात्रा |
| बन्धुवर कृष्णसर्पे | २५ | ४३ | मात्रा |
| भक्तस्येच्छा कथमिव | ७१ | १२१ | मन्दाक्रान्ता |
| भक्ताय हरिदासाय | ७४ | १३३ | अनुष्टुप् |
| भक्तिपुष्पाञ्जलिं | ४१ | ८४ | „ |
| भक्तिभावपरज्योतिः | ४२ | ८५ | अनुष्टुप् |
| भक्तिवाटिका | ११ | २८ | मात्राच्छन्दः |
| भक्तिसुखं | १४ | ३२ | „ |
| भगवतः प्रसादेन | ३ | ६ | „ |
| भज कृष्णं | ४८ | ६४ | „ |
| भूतले लुठनात् प्रेमी | ४३ | ६० | „ |
| मग्ना हि शोकतिमिरे | ७६ | १३८ | वसन्ततिलकम् |
| मत्प्राणमित्र | ४३ | ८६ | „ |
| मया नीतः कालो | ७ | १८ | शिखरिणी |

| श्लोक | पृष्ठा | श्लोकसंख्या | छन्दः |
|---|---|---|---|
| महाजनस्य माहात्म्यं | १० | १५ | अनुष्टुप् |
| महानन्दो नन्दसुतः | ३७ | ६८ | मात्रा |
| महामेधा महाभूतिः | ५० | ६७ | अनुष्टुप् |
| महिममयी सा | ८० | १४७ | कुसुमविचित्रा |
| यं तावदेको | २८ | ५० | उपजातिः |
| यथा मध्याह्नभास्करः | ३५ | ६१ | मात्रा |
| यमुनातटविहारि | २७ | ४८ | मात्रा |
| यवनश्रीहरिदासो | १ | २ | मात्रा |
| यस्य प्रभो तव | ७० | १२० | वसन्ततिलकम् |
| यावत्यस्तु विपद् घोरा | २६ | ५३ (क) | अनुष्टुप् |
| याहि सिन्धुतीरे | ७४ | १३१ | मात्रा |
| ये पूताः स्वत एव | ६३ | ११४ | शार्दूलविक्रीडितम् |
| रक्तविद्युल्लताकारा | ५० | ६६ | अनुष्टुप् |
| राधाजीवन भूतलं | ६ | १३ | शार्दूलविक्रीडितम् |
| राधारमणं रसिकरञ्जनं | ६ | २३ | मात्रा |
| लक्षभक्तपुरःसर | ३६ | ६६ | मात्रा |
| वणिजोऽवधत्त | ७७ | १३६ | मञ्जुभाषिणी |
| वन्दनेन हरेर्नाम्नो | ४१ | ७६ | अनुष्टुप् |
| वरान् दास्यामि भक्तेभ्यो | ४२ | ८८ | अनुष्टुप् |
| विपणिरियमशून्या | ७७ | १४१ | मालिनी |
| विश्ववाञ्छनं वत्सलाञ्छनं | ६ | २१ | मात्रा |
| विषयसुखविरागतः | १८ | ३५ | पुष्पिताग्रा |
| वेदादिषु | ३३ | ५८ | अनुष्टुप् |
| शिखिसुशेखरं | ६ | २२ | मात्रा |
| शून्यं पश्यामि | ७२ | १२३ | स्रग्धरा |

# महाप्रभु हरिदास-नाटकस्य

## छन्दःसूची

## INDEX OF METRES

*The figures here refer to the number of verses.*

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

| July, 1960. | १८८२-शकीयश्रावणस्य १४श-वर्षस्यैकादशी संख्या | Vol. XIV No. 11 |
|---|---|---|

## तत्पुरुषः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

तत्पुरुषसमासस्य मूर्धाभिषिक्तमुदाहरणं राजपुरुष इति। तथाच निरुक्ते समासस्योदाहरणत्वेनोपन्यस्तं राज्ञः पुरुषः राजपुरुष इति। महाभाष्येऽपि समासस्योदाहरणरूपेणासकृद् राजपुरुषशब्द उपात्तः। तथाहि तत्र 'सतो निमित्तभावात्पदसंज्ञाभावः' [ १।१।६१ ] इति वार्त्तिकस्य व्याख्यायां दृश्यते—सन् प्रत्ययो येषां कार्याणाम् अनिमित्तं राज्ञः पुरुष इति। स लुप्तोऽप्यनिमित्तं स्याद् राजपुरुष इति। समर्थः पदविधिः [ २।१।१ ] इति सूत्रे षष्ठीसमासस्योदाहरणं भाष्ये—राजपुरुषो ब्राह्मणकम्बल इति। पञ्चाक्षरस्यास्यैवानुरूप्येण चतुरक्षरं नाम तत्पुरुष इति। अत एवोक्तं प्रक्रियासर्वस्वे—

स्यात्तस्य पुरुषस्तत्पुरुषः षष्ठीसमासतः।
तेन तज्जातिजाः सर्वे कृद्वत्तत्पुरुषाः स्मृताः॥

इति। तत्पुरुषशब्दोऽयं प्रथमतः कर्मधारयरूपेण तैत्तिरीयारण्यके श्रूयते—तत्पुरुषाय विद्महे महादेवाय धीमहि [ १०।१।५ ] इति। तत्पुरुषसमासनिष्पन्नस्तत्पुरुषः प्रथमतः कात्यायनश्रौतसूत्रे दृश्यते—

चतुरो वाद्यांस्तत्पुरुषा इतरे यथावेदम् [ ७।१।८ ] इति। अथवा आद्यान् ब्रह्मोद्गातृहोत्रध्वर्यून् चतुरो वृणीते न सर्वानिति विकल्पः। इतरे द्वादश ऋत्विजो यथावेदं तत्पुरुषाः तेषां ब्रह्मादीनां पुरुषा आदेशकारिण इति।

छान्दोग्ये श्रूयते—मासेभ्यः संवत्सरं संवत्सरादादित्यम् आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनं ब्रह्म गमयत्येष देवयानः पन्थाः [ ५।१०।२ ] इति। अत्र तदिति तत्रार्थकं पृथक् पदमिति व्याख्यातारः।

---

## सततं कुरु कर्म त्वम्

कर्मभूमिरिदं भारतं वर्षम्। सर्वै रेवास्माभिर्निरन्तरं कर्म कर्तव्यम्। अत एव गीतायां भगवतोक्तम्—

सततं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः॥

इति। अत एवैतरेयब्राह्मण उपदेशः—चरैवेति।

पाश्चात्त्यकविशेखरेणोक्तम्—

I slept, and dreamed that life was Beauty,
I woke, and found that life was Duty.

सुप्तोऽहं स्वप्नमद्राक्षं जीवनं सौन्दर्यमयम्, प्रबुद्धोऽहमपश्यं जीवनं कर्तव्यमयमिति।

वर्तन्ते खलु बहवो ये महद्भ्यः कर्मभ्य एव स्पृहयन्ति क्षुद्रेभ्यश्चोद्विजन्ते, एवं च वर्तमानाः किमपि न कुर्वन्ति, आलस्येनैव कालं नयन्ति। ईदृशमेव कञ्चनोद्दिश्य मनीषिणोक्तम्—Between the great things he planned to do and the little things he spurned to do he did nothing. इति।

कथासरित्सागरे पठ्यते। कश्चन तरुणो निदाघे वनमतिक्रामन् पिपासया पीडितः कमपि पुरुषमपृच्छत्, भद्र, वर्तते वात्र सविधे कोऽपि

जलाशयो यतः सलिलम् आकण्ठं पिबन् प्राणापहारिणीं पिपासामिमां प्रतिकुर्याम् इति। तेनोक्तम्, अस्ति भद्र। अग्रे वर्तते मनोहरः सरोवर इति। स चाग्रेसरीभूय सरः समासाद्य विशालं सरोवरं सन्दृश्य फूत्कर्तुमारेभे—हा हन्त! कथमेतावज्जलं पिबेयमिति। तत्रत्याश्च प्रोचुः—अरे मूढ, न खलु सर्वं सलिलं पातव्यमिति धर्मसूत्रकाराः समामनन्ति, राजपुरुषा वा समादिशन्ति। यावत् पातुं प्रभवसि, यावतः पानेन पिपासा दूरीभवति, स्वस्थश्च संपद्यसे तावदेव पिब। इति। तथापि स मूढः पानीयमपीत्वा क्रन्दनपर एवावतस्थे।

एवं न शक्नुवन्तीह यद् यत् कर्तुमशेषतः।
यथाशक्ति न तस्यांशमपि कुर्वन्त्यबुद्धयः॥ इति।

एषा हि परा काष्ठा मौढ्यस्य यत् सुमहत् कर्म कर्तुं न पार्यत इति क्षुद्रमपि कर्म न क्रियत इति। यथाशक्ति यथाज्ञानं कर्म कर्तव्यमेव।

विघ्नभयेनापि कर्मणो न विरन्तव्यम्। कति वेह कर्माणि निर्विघ्नं साधयितुं शक्यन्ते? विघ्नवत्यः प्रार्थितार्थसिद्धय इति कविकुलचूडामणिः प्राह स्म। मुनिप्रवरेण पतञ्जलिनाप्युक्तम्—न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्तीति यवा नोप्यन्ते इति। अत एवोक्तमभियुक्तशिखामणिना भर्तृहरिणा—

रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे विघ्नभयेन भीतिम्।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद् विरमन्ति सन्तः॥ इति।

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति॥ इति च।

व्याख्यातं चेदं रामचन्द्रबुधेन्द्रेण। नीचैः अधमैः विघ्नेभ्यः अन्तरायेभ्यो यद् भयं तेन हेतुना न प्रारभ्यते खलु नैवोपक्रम्यते। कार्यमिति शेषः। विघ्नोऽन्तरायः प्रत्यूह इत्यमरः। मध्या मध्यमास्तु कार्यं प्रारभ्य उपक्रम्य विघ्नैर्विहता विह्वलीकृताः सन्तो विरमन्ति। उत्तमा उत्कृष्टा गुणा धैर्यशीलादयो येषां ते तथोक्ताः पुरुषश्रेष्ठास्तु

विघ्नैः पौनःपुन्येन प्रतिहन्यमाना बंम्भज्यमाना अपि प्रारब्धम् उपक्रान्तं कर्म न परित्यजन्ति विसृजन्ति। अतः कालकूट-वडवानलादि-विघ्नाद्युपहतत्वेऽप्युक्तगुण-सम्पन्नतया देवानां सुधोत्पत्तिपर्यन्तं मथनमुक्तम्। "मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु" इत्युक्तलक्षणं धैर्यम्। शीलं नियतकुलोचितसत्स्वभाव इति विवेकः। इति।

## प्रश्नः

यादवपुरविश्वविद्यालयत आयुष्मान् मणीन्द्रकिशोर-चक्रवर्ती पृच्छति—

"आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्। आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्॥" [ वा० स० २२।२२ ] इति वाजसनेयिश्रुतौ ब्रह्मञ्छब्द आद्युदात्त उपलभ्यते, तथाप्येतस्य साम्प्रतिकैः सम्बोधनतया व्याख्यानं समीचीनं वा ? इति।

## उत्तरम्

लेशतोऽपि न समीचीनम्। यद्यप्युवटमहीधरभाष्ययोस्तथाविधं व्याख्यानमुपलभ्यते तथापि तच्चिन्त्यम्, आमन्त्रितत्वे निघातस्य दुर्निवारत्वात्। अत एव तैत्तिरीयब्राह्मणभाष्ये सायणाचार्यैर्व्याख्यातम्—"ब्रह्मन् ब्राह्मणजातियुक्ते पुरुषे ब्रह्मवर्चसी वेदशास्त्राभिज्ञः पुत्रो ब्राह्मण आजायताम्।" इति। अत्र ब्रह्मन्निति पदं सप्तम्येक-वचनान्तम्। सुपां सुलुगिति ङेर्लुक्, न ङिसम्बुद्ध्योरिति न-लोपा-भावः। अत्र ब्राह्मणवाचित्वाच्छब्दोऽयं पुंलिङ्ग आद्युदात्तश्च।

## प्रश्नः

यादवपुरविश्वविद्यालयत आयुष्मान् सीतानाथ-गोस्वामी पृच्छति—

वेदान्तकल्पतरौ दृश्यते [ १।४।१६ ]—

जीवाज्जज्ञे जगत्सर्वं सकारणमिति ब्रुवन्।
क्षिपन् समन्वयं जीवे न लेजे वाक्पतिः कथम्॥

इति। अत्र लेजेपदं कथं सिध्यति ? इति।

## उत्तरम्

लेजे इति तौदादिकस्य ओलजी व्रीडायामितिधातोर्लिटि रूपम्। यद्यपि लस्जधातोरेव प्रयोगा बाहुल्येनोपलभ्यन्ते तथापि भट्टिकाव्ये [ १४।१०५ ] समुपलभ्यमानं लेजिरेपदमनुसृत्य ग्रन्थकृता लेजे इति प्रयुक्तम्। कल्पतरौ "त्रेपे" इति पठित्वाऽप्रयुक्ततादोषः परिहर्तव्यः।

---

## इक्श्तिपौ धातुनिर्देशे

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"इक्श्तिपौ धातुनिर्देशे" इति वार्त्तिकस्य व्यभिचारोऽर्तिसर्त्योः सन्दृश्यतेऽष्टाध्याय्याम्। तत्रार्तिमधिकृत्य माधवेनोक्तम्—सर्वत्रार्तिग्रहणेषु भौवादिकजौहोत्यादिकयोर्द्वयोरपि ग्रहणमिति स्थितं व्याख्यानेषु, अत एवार्तीत्यविकरणेन निर्देशः कृतः। भौवादिकग्रहणे ऋच्छतीति वक्तव्यम्, जौहात्यादिकस्य तु शपः श्लावियर्तीति। अर्तिपिपर्त्योश्च [ ७।४।७७ ] इत्यत्र श्लौ [ ७।४।७५ ] इत्यधिकाराद् भौवादिकस्य न सम्भवः। सर्तिशास्त्यर्तिभ्यश्च [ ३।१।५६ ] इत्यङ्विधावपि शासिना विद्यमानशपा साहचर्यात् सर्त्यर्ती अप्यविद्यमानशपौ गृह्येते इत्युक्तम्। [ धातुवृत्ति १।२१८ ] इति।

अत एवोभयोरेव धात्वोः क्रोडीकरणार्थम् उणादिसूत्रेषु सर्वत्रार्तिसर्ती उपलभ्येते।

कातन्त्रव्याकरण आख्यातप्रकरणे दृश्यते सूत्रम्—पुषादिद्युताद्य्लकारानुबन्धार्तिसर्तिशास्तिभ्यश्च परस्मै [ ६२ ] इति। अस्य टीकायां दुर्गेणोक्तम्—अत्र धातुनिर्देशमात्रे तिप् प्रतिपत्तव्यः, विशेषस्याविवक्षायां विकरणो न स्यात्, अतो भौवादिकाभ्यामप्यणा भाव्यमित्येके। इति।

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेष्वित्यत्र व्याख्यातृभिरुक्तम्—गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरण इणादेशो गृह्यत इति। ३।३१।२ ऋचो भाष्ये बहूनां हस्तलिखितपुस्तकानां "जिगाति-

गत्यर्थः” इति पाठमनादृत्य M. महोदयेन पुण्यपत्तनेन च “गाति-गत्यर्थः” इति मुद्रितम् !

ऐतरेयब्राह्मणादिषु क्तप्रत्ययेन धातोर्निर्देश उपलभ्यते। तथाहि तत्रैकविंशाध्यायस्य प्रथमे खण्डे श्रूयते यद्रतवदिति। तच्च व्याख्यातं षड्गुरुशिष्येण—रमिधातुयुतं यच्चेति। एवं कौषीतकिब्राह्मणे गत-वत्प्रभृतय उपलभ्यन्ते।

शाकपूणिनापीयमेव सरणिरनुसृतेति यास्कवचनतो विज्ञायते। तथाच निरुक्ते पठ्यते—[ अग्निशब्दः ] त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः। इताद् अक्ताद् दग्धाद् वा नीतात्। [ ७।१४ ] इति। यास्कस्य समयेऽर्वाचीना पद्धतिः प्रचलितासीदिति प्रतीयते। तथाहि शाकपूणिवचनं व्याचक्षाणेन यास्केनोक्तम्—स खल्वेतेरकारमादत्ते गकारमनक्ते र्वा दहतेर्वा नीः पर इति।

[ धात्वर्थनिर्देशे महर्षिणा यास्केन ल्युट् प्रयुज्यते। तथाहि मुञ्जीजा-शब्दनिर्वनप्रसङ्गे नोक्तम्—मुञ्जीजा मोचनाच्च सयनाच्च तननाच्च ( ५।१६ ) इति। ]

तितउशब्दस्य व्याख्यानावसरे यास्केनोक्तम्—तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा [ ४।६ ] इति। अत्र ततवत् इत्यनेन तनधातुनिष्पन्नत्वं तुन्नवदित्यनेन तुदधातुनिष्पन्नत्व-मपि प्रतिपादयितुं शक्यते। एवञ्चेन्महर्षिणा पूर्ववर्तिनः कस्यचन निरुक्तकारस्य मतमुद्ध्रियत इति बोद्धव्यम्।

प्रातिशाख्ये ष्विका श्तिपा च धातुनिर्देशः सन्दृश्यते।

प्रथमाया ऋचो भाष्ये दृश्यते—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम्। इति। अत्र सायणाचार्येण ईडधातोरिति वा ईडिधातोरिति वा विलिखि-तमिति प्रतिभाति। निरुक्ते “ईळिरध्येषणाकर्मा पूजाकर्मा वेति” वर्तते। महाभाष्येऽपि दृश्यते—ईडिः स्तुतिचोदनायाच्ञासु दृष्टः प्रेरणे चापि वर्तते इति। ३।४८।३ मन्त्रभाष्ये दृश्यते—ईळिरध्येषणा-कर्मेति यास्कः ...ईळि [ड?] याच्ञार्थः। इति।

## भारतवर्षीयाणां स्वार्थशून्यत्वम्

एतत्त्वतिमात्रं विचित्रं यद्भारतवर्षीयैर्धातोर्लटः प्रथमपुरुषैकवचनेन तत्रापि परस्मैपदेन धातुनिर्देशः क्रियते, पाश्चात्त्यैः पुनर्ग्रीसीयलातीनादिधातूनां लट उत्तमपुरुषैकवचनेन धातुनिर्देशः क्रियते, तत्रापि परस्मैपदिनां धातूनां परस्मैपदेन निर्देश आत्मनेपदिनां चात्मनेपदेनेति।

किञ्च धातुरूपप्रदर्शनावसरेऽपि पाश्चात्त्यैः प्रथमत एवोत्तमपुरुषस्य रूपाणि प्रदर्श्यन्ते, ततो मध्यमपुरुषस्य, ततः प्रथमपुरुषस्य। ग्रीकभाषायां lūō (उ० पु०), lūeis (म० पु०), lūei (प्र० पु०) इत्यादि; लातीनभाषायाम् amo, amas, amat, इत्यादि; आङ्गलभाषायाम् I love, we love, thou lovest, you love, he loves, they love इति। अस्माभिस्तु प्रथममेव प्रथमपुरुषस्य ततो मध्यमपुरुषस्य तत उत्तमपुरुषस्य रूपाणि प्रदर्श्यन्ते। एतदेव प्रथममध्यमोत्तमसंज्ञायां बीजमिति प्रतिभाति।

एतस्माच्च भारतवर्षीयाणां स्वार्थलेशशून्यत्वं सततपरार्थसाधनोद्युक्तत्वं च, पाश्चात्त्यानां च सर्वथा स्वार्थपरत्वं स्फुटीभवन्ति। स्वात्मनोऽप्रकटीकरणं परार्थे स्वसमर्पणं च भारतवर्षीयाणां स्वभावसिद्धौ धर्मौ।

---

## आभाणकमाला

Death defies the doctor.

विनाशो वैद्यं परिभवति।

Lat. Contra vim mortis non est medicamen in hortis.
German. Gegen den Tod ist kein Kraut gewachsen.

नौषधिर्विद्यते लोके मृत्योर्बलविघातिनी।

कुतो मरणभेषजम्!

No sweet without sweat.

न स्वादु स्वेदं विना। न हि सुखं दुःखैर्विना लभ्यते।

French. Nul pain sans peine.

German. Ohne Fleiss kein Preis.

Lat. Absque sudore et labore nullum opus perfectum est.

न खलु स्वेदं श्रमं चान्तरेण किमपि कार्यं सम्पूर्णतां नीयते।

कुतः कार्यसमाप्तिः स्याद्विना स्वेदं विना श्रमम्।

To fall out of the frying pan into the fire.
Greek. Eis to pūr ek tou kapnou.

Greek. Pheugōn kapnon eis pûr despoteias empeptōkōs.

Fr. Tomber de fièvre en chaud mal, de la poêle dans la braise, de Charybde en Scylle.

Greek. Tēn kharubdin ekpheugōn tēi Skullēi periepeson.

Lat. Incidit in Scyllam cupiens vitare Charybdim

French. Il se jette à l'eau, peur de la pluie.

वृष्टिभयान्नद्यां पतति ।

Thus when I shun Scylla, your father, I fall into Charybdis, your mother. SHAKESPEARE, *The Merchant of Venice*, iii. 5

वृश्चिकभिया पलायमानस्याशीविषमुखे निपातः ।

धूमात्पलायमानस्यानले सन्निपातः ।

पाशदर्शनभयपलायितस्य फणिनि पदन्यासः ।

बन्धनमुक्तो गृहकपोतको बिडालिकालोके पतितः ।

अव्याप्तिं परिहरतः पुनः सैवातिव्याप्तिरावर्तत इत्यहो कष्टमायुष्मतः श्वभ्रादभ्रमध्ये प्रवेशः ।

तदिदमातपार्तस्यच्छायामन्विष्यतो दारुणदवदहनवेष्टनं यदङ्गरागमेव द्रष्टुमक्षमाया नखक्षतसाक्षात्कारः । मल्लिनाथः ।

German. Vom Regen unter die Traufe kommen. Aus dem Regen in die Traufe.

वर्षणभयात् पलायमानस्य च्छदिषोऽधस्तात् समागमनम् ।

Marathi. आगींतून निघाले आणि फोपाट्यांत पडले । चुलीतून निघून वैलांत पडणें ।

अनलान्निर्गतस्तप्ताङ्गारेषु निपतितः ।

How Mr. Winkle, when he stepped out of the frying-pan, walked gently and comfortably into the fire. *Pickwick Papers*, Chap. xxxviii.

---

# उदेति दोषादपि दोषलाघवम्

कस्य वा न विदितं नैषधचरितगतं सुभाषितम्—उदेति दोषादपि दोषलाघवं कृशत्वमज्ञानवशादिवैनसः [ नै० ९।१३२ ] इति ? चिकित्सकानामपि मतेनोन्मत्तश्चेज्ज्वरेणाक्रम्यते तस्योन्मादो ग्रीष्मसरिद्विलायं विलीयते इति । महाभाष्ये पस्पशायामपि दृश्यते—अज्ञानं तस्य शरणमिति । भारविणाप्युक्तं—संवृणोति खलु दोषमज्ञता [ १३।६३ ] इति । शास्त्राण्यपि समामनन्ति—"अनृतं हि मत्तो वदति पाप्मा

चैनं पुनाति" [ ८।१।३५ ] इति। पाप्मा मद उच्यते। यस्मादनृतं मत्तो वदति तस्मात् पाप्मा एनं विपुनाति शुद्धिमापादयति, मत्तस्यानृतमदोष इति कृत्वा। इति काशिकाविवरण-पञ्जिका। क्वचित्तु पाप्मा मद इति पाठः। पापहेतुत्वात् पाप्मा। मदादीनां हि विरुद्धानां दोषेषु गणनात्। यस्मान् मदयुक्तः पुरुषो मद्यपानादिना व्याकुलचित्ततयाऽज्ञानादनृतं वदति तस्मात् स मद एवानृतवादिनं पुरुषं पुनाति। अनृतवदनदोषकृतमपावित्र्यं न करोतीत्यर्थः। यद्वा, अनृतवदनजन्यमेनस्तं न सम्बध्नाति। मत्तत्वादेवेत्यर्थः। पापासम्बन्ध एवात्र पवनम्। इत्युद्द्योतः।

वृत्तान्तपत्रेषु दृष्टम् (The Sunday Statesman, May 15, 1960, p. 8, c. 6) खालित्यस्य प्रतीकारः शल्यचिकित्सकसाहायकेन वृषणच्छेदः (surgical castration) इति। भेषजमिदमामयतोऽपि भीषणतरम् (the medicine is worse than the disease*)। खालित्यस्यासाध्यत्वं कथासरित्सागरगताख्यायिकातोऽपि स्फुटी-भवति। कोऽपि मूर्खो धनिकस्ताम्रकुम्भोपमशिराः खलतिरासीत्। स च केशैर्विना सदैव लज्जते स्म। ततश्च धूर्तः कश्चित् तस्मात् प्रभूतं धनं स्वीकृत्य भिषजमानाययामास। ततश्च बहून् मासान् स वैद्यस्तस्मान्महान्तमर्थमलभत, अन्ते च वेष्टनमपाकृत्य स्वीयं केशलेशशून्यं शिरो दर्शयामास। उवाच च, अरे मूर्ख, स्वयमसिद्धः कथमन्यान् साधयेदिति।

---

## चण्डीं निकृत्य मुण्डीं कुरु

### ( जामातृसंशोधनम् )

ऋग्वेदभाष्ये प्रदातुरस्तु चेतनम् [ १।१३।११ ] इत्यस्य व्याख्यानावसरे सायणा-चार्येण लिखितम्—दातुः। ददातेस्तृच्। चित इत्यन्तोदात्तः। ङसि ऋत उदित्युत्त्वम्। एकादेशो रपरत्वं च। रात्सस्येति सलोपः। एकादेशस्वरेणोकार उदात्तः। इति।

Max Müller मुद्रिते पुस्तके पुण्यपत्तनतः प्रकाशिते पुस्तके कलिकाताविश्व-विद्यालयस्य श्रौतपाठे (*Revised Edition*) सर्वत्रैवैकतकारकमुत्त्वंपदं मुद्रितम्। एतत्तु

---

*I find the medicine worse than the malady. BEAUMONT AND FLETCHER, *The Lover's Progress*. To epanorthōma tēs algēdonos ouk axion (the cure is not worth the pain). Remark of Gaius Marius after having had a varicose vein cut from his leg.

व्याकरणानवबोधविजृम्भितम्। उदित्यत्रैकस्तकारो वर्तते, त्वप्रत्यये चापरस्तकारः, अत एवोत्त्वमित्यत्र तकारद्वितयमेवावश्यकम्। यथा पाश्चात्यशब्दे प्राकृतैस्तकारस्यैकस्य लोपो विधीयते तथात्रापि कृतमिति प्रतिभाति! किञ्च, एकादेशस्वरेणोकार उदात्त इति वाक्यं कलिकाताविश्वविद्यालयस्य श्रौतपाठे (*Revised Edition*) चण्डीं निकृत्य मुण्डीं कुरु (चण्डी केटे मुण्डी कर) इति वङ्गीयाभाणकानुसारेण एकादेशः स्वरेणोदात्तः इत्येवं विपरिवर्तितम् !!!

किञ्च, परवर्तिन्या ऋचो भाष्ये Max Müller ग्रन्थे तदनुसारिणि च पुण्यपत्तन-पुस्तके हविष्प्रदानवाची इति मुद्रितम्। कलिकाताविश्वविद्यालयेन संस्कृत्य मुद्रापितम्—हविःप्रदानवाची इति !!!

---

## रुर्वा रुवा

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ससजुषो रुः [८।२।६६] इत्यत्र पुमान् रुर्विराजते। अतो रोरप्लुतादप्लुते [६।२।२१३] सिपि धातो रुर्वा [८।२।७४] इत्यत्रापि तथा। मतुवसो रु सम्बुद्धौ छन्दसि [८।३।२] इत्यत्र पुनर्नपुंसकलिङ्गं रु दृश्यते। किमत्र बीजमिति विचारे मतुवसो रु सम्बुद्धौ छन्दस्यत्रानुनासिकः पूर्वस्य तु वेति दण्डपाठे वृत्तगन्धित्वसम्पादनमेव भगवतः पाणिनेरभीष्टमिति प्रतिभाति। श्लोके पञ्चमाक्षरस्य लघुत्वमपेक्ष्यते, सविसर्गस्य रुः इत्येतस्योपादाने पञ्चमस्य गुरुत्वाच्छन्दःपतनं स्यादिति नपुंसकलिङ्गो रुशब्दोऽत्र प्रयुक्त इति प्रतिभाति।

वारान्तरे इदन्तो मसीति सूत्रगतं मसिपदमधिकृत्य किञ्चिद् वक्ष्यते।

---

## प्रमादमुक्ताहारः

तैत्तिरीयब्राह्मणे श्रूयते—यद्वा इदं किंच तत्सर्वमुत्तान एवाङ्गीरसः प्रत्यगृह्णात्। तदेनं प्रतिगृहीतं नाहिनत्। इति। अत्र मुद्रिते सायणभाष्ये दृश्यते—लोके प्रतिग्रहयोग्यं यत् किंचिद् द्रव्यं तत्सर्वमङ्गिरसः पुत्र उत्तानाख्य एव पुरा कदाचित् प्रत्यगृह्णात्। तत्र प्रतिगृहीतं द्रव्यं प्रतिगृहीतारमुत्तानमेनं नैव हिंसेत्। इति।

स्वर्गताप्फशास्त्रिणां

# लावण्यमयी

[ २२८तम पृष्ठतोऽनुवर्तते ]

प्रियपाठकमहाभागाः! इत्येवमभिधाय श्रीमतां परिचितपूर्वया तापस्या साम्प्रतिक्या सरलया समादायार्चिशलाकां प्रज्वलितो दीपः। प्रादुर्भूते च प्रदीपे यावद्विकिरति पुरस्तात् प्रमदभरजडीकृतां दृशं श्रीमान् रमेशमहाभागस्तावदासीदस्य नयनगोचरा तापसीवेषसमाच्छन्ना सरला। यत्सत्यमपरेव देवतेयमिदानीमालक्ष्यत। व्रीडावनतवदना चेयं पुरस्ताच्छ्रीमतो रमेशमहाशयस्यातिष्ठत्। यदि तावद्वेषमस्या इदानीन्तनं यः कोऽपि वा साक्षादकरिष्यत् तदा नूनं प्रादुरभविष्यन्मनस्येतस्य सरलायामादरातिशयः। श्रीमान् रमेशमहाशयोऽपि समवेक्ष्यैनां विस्मितस्तिमित एवादितः समभूत्। परस्तात् समुच्छलत्प्रणयरसेन चेतसा सरभसं गाढं परिष्वज्य मुहुर्मुहुरचुम्बन्नातिमांसलमनोरमौ दरविकसितपाटलकुसुमसप्रभौ कपोलावस्याः। व्यपगतः खल्विदानीं तुषारशिशिरेणास्याः शरीरस्पर्शेन सर्वाङ्गीणस्तापः श्रीमतो रमेश-महाभागस्य। परस्तात् पुनर्यदनयोः संवृत्तं तदेतदाचष्टे महाकवेः श्रीमतो भवभूतेरिदं पद्यम्—

> किमपि किमपि मन्दं मन्दमासत्तियोगा-
> दविरलितकपोलं जल्पतोरक्रमेण।
> अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
> रविदितगतयामा रात्रिरेव व्यरंसीत्॥ इति।

अन्ततः पुनरभ्यधात् सरला 'यद्यनुमन्यत आर्यपुत्रेण तदा वाञ्छामि विनिवेदयितु-मशेषमपि वृत्तमात्मीयम्। येन किमिति वानिवेद्यैव प्रयाता न्यपातयं कालमेतावन्तं दुस्तरतरे विरहाम्बुधावात्मानमितीदं विशदीस्यात्' इति।

रमेशः। अवहितोऽस्मि। किन्त्वार्ये बहु खल्वस्ति ममेदानीं जिज्ञास्यम्। तथापि किं वा प्रथमतः किं च परस्तात् प्रष्टव्यमिति न किल किमपि मे चेतसि परिस्फुरति। तदिदानीं स्वयमेव तावन्निवेदयतु श्रीमती यथाभिलषितक्रममात्मनो वृत्तम्।

इत्थमनुमोदिता श्रीमता रमेशमहाभागेनोपक्रान्तवती वृत्तमात्मीयमाख्यातुं श्रीमती सरला।

"आर्यपुत्र! यदा किल प्रथमतो जातमात्रमेव दिवं गतमपत्यमस्माकं ततः प्रभृति सन्तानार्थिना समवलम्बिता नानाविधा अभ्युपाया भवता, सेविताश्च यथादेशं मया नैकविधा ओषधयः। किन्तु नासीद्विना नैराश्यं किमपि फलमभ्युपायानामेतेषाम्। अथ समुपदिष्टः

खलु गुरुभिरार्यपुत्रः पुनः परिणेतुम्। अनुमतश्च मयाप्ययं गुरुजनानामुपदेशः। प्रयतितं चानेकशः समावर्जयितुमन्तरङ्गमार्यपुत्रस्य। तथापि यदा नान्वमोदिष्टार्थमिमं श्रीमांस्तदा तु समधिकमेव व्याकुलीबभूव मे हृदयम्। अथ कदाचिद् दक्षिणेन मन्दिरं वृक्षवाटिकायां विचरन्ती यदृच्छयोपगतां कामपि योगिनीमद्राक्षम्। सन्दर्शनमात्रपरिचितयापि सञ्जनितप्रीत्या स्नेहैकरसया तया संलपन्ती तत्तदशेषमपि व्यवृणवं पुरस्तादस्या वृत्तमात्मीयम्। नापि नाब्रवमनपत्यताव्यसनम्। सा तु तत् समाकर्ण्य सावधारणमिव समाश्वासयन्ती प्रत्याह, 'भद्रे! अस्ति किल मत्सविधे मूलं किमपि यस्मिन्नासेविते सञ्जायते चापत्यं, जीवति च सुदीर्घं समयं यदि नैतदनुपालयिष्यति जनन्येतस्य। तया हि परिपाल्यमानमिदं वियुज्यते प्राणैः' इति। अथ 'तत् किं वात्र मयानुष्ठेयम्' इति मयानुयुक्ता च प्रत्यवदत् सेयं 'भद्रे! सेव्यतां मया प्रदीयमानमिदं मूलम्। तेन चावश्यं सञ्जनिष्यते ते गर्भः। अथ यदा व्यतीतेषु नवसु मासेषु समनुभूयेरन् प्रसववेदनास्तदा समाहूयतां श्रीमत्या सखीयमात्मीया। अस्याः पुनरयमेव ग्रामो निवास इत्यवबुध्यतां श्रीमत्या। अवसरे च तस्मिन्नुपस्थिताहं कथमप्यपवाह्य तत्त्वापत्यं यथोचितमनुपालयिष्यामि। अतिक्रान्ते शैशवे चैतन्नेष्यसि सदनमात्मीयम्। ततो हि नास्ति निधनभीतिरेतस्येति।

"अथाहं स्वीकृत्य तस्याः सकाशान्मूलिकां यथोपदेशमासेविषि। अचिरादेव चाहमन्तर्वत्नीत्वमापन्ना। ततः प्रभृति च प्रत्यहमेवासीदस्याः साक्षात्कारः। अथ यदा प्रत्यासन्नः प्रसूतेः समयस्तदा निराकृत्य सार्वदिकीं साविकामपरामेव सन्न्यधापयमिति मन्ये स्मरत्येवैतदार्यपुत्र इति। सैवेयं योगिनी। एषा च जातमात्रं कुमारकं पञ्चत्वमापन्न इति व्यपदिश्य समादाय प्रतिजगामेति विदितमेवेदमार्यपुत्रस्य।" इति।

रमेशः। आं स्मर्यते खल्वेतत्।

सरला। ततः परं पुन र्व्यपगतेष्वपि पञ्चषेषु वर्षेषु न किल सकृदपि मे योगिन्याः समागमः सङ्घटितः। तेन च गृहीतं मे मनो बलीयसा नैराश्येन। कुतश्चावसरेऽस्मिन्नेतावन्मे प्रागल्भ्यं येन सङ्घटितपूर्वं वृत्तमेतदाख्यातुं प्रभवेयम्। तत एव च नास्मि श्रीमतः सविधे किमप्याख्यातवती केवलं तु गुरुतरया चिन्तया कवलीक्रियमाणेन चेतसा समवास्थिषि। अथैकदाऽवितर्कितोपगतां महाभागामिमामद्राक्षम्, अप्राक्षं च सोत्कण्ठमेवैनां कुशलं कुमारस्य। असौ तु 'कृतं चिन्तया, कुशली किलेदानीं ते तनयः। यदि च समनुष्ठास्यति मयोपदिश्यमानं विधिं भवती, तदैनमवश्यं प्रदर्शयिष्यामि।' इति प्रत्याह। अथ 'कस्तावन्महाभागायाः समादेशः?' इत्यनुयुक्ता

मया पुनरप्यसावभाषिष्ट। 'सखि! नाधिकं किमपि। इदमेव तु केवलं विधीयताम्। अद्य किल प्रौढप्रायायां तमस्विन्यां सह मया समागच्छतु भवती। समादाय च मया वितीर्णां कामपि मासजातां स्तनन्धयीं तनयां तूष्णीमेव प्रतिनिवृत्ता प्रविश्य मन्दिरमात्मीयं विनिधाय चैनामात्मनः पत्युः शयनीये पुनरपि समीपं मे समागच्छ। आत्मजा किलेयं मदीयैव। श्रीमत्याः पुनः कुमारमनुपालयन्ती नाहमिदानीमेनां प्रपोषयितुं प्रभवामि, बलवद्धि मे दारिद्र्यम्। अवश्यं पुनः परिपालयिष्यति दयितस्ते कुमारिकामेनाम्।' इति। (क्रमशः)

---

## यादृशो यक्षस्तादृशो बलिः

धूमशकटेषु महाञ्जनसंमर्दो वर्तते। विपुलेन प्रयत्नेनान्विष्य महादेवमहोदयः प्रकोष्ठमेकं प्राप यत्रैकस्मिन्नासने केवलं चर्मभस्त्रिकासीत्। स तत्र प्रविश्य तत्पुरोवर्तिनं यात्रिणमपृच्छत्, अपि तत्र कोऽप्युपविशेदिति। तेनोक्तम्—एतत् खलु मम मित्रस्य स्थानम्। वृत्तान्तपत्रिकाक्रयणायासौ गत इति। यात्रिणोक्तम्—भवतु। किं वा करणीयम्? मयागत्या दण्डायमानेन स्थातव्यमिति। कियतीचित् कालकला व्यतीता, किमपि मित्रं पुनर्नागतम्। ततस्तिष्ठतोक्तम्—यदि ते मित्रं न त्वरेत शकटं स नैव प्राप्स्यतीति। अपरेण ससाध्वसमुक्तम्—एवम् इति। अचिराच्छकटं प्रचलितम्। भस्त्रिकां विधृत्य नवागतेनोक्तम्—'मासौ भस्त्रिकामपि हारयतु' इत्युक्त्वासौ भस्त्रिकां बहिर्निक्षिप्योपाविशत्।

---

## पारमार्थिकं मित्रम्

रमेन्द्ररायो नरहत्यापराधेन गृहीतः। धर्माधिकरणे तस्य विचारः प्रवृत्तः। तत्र जुरीषु तस्यैको बान्धव आसीत्। यथा मया दृश्यते तथा मम निस्तारो नास्तीति विचिन्त्य स तमुक्तवान्, भद्र तथा भवता प्रयतितव्यं यथा केवलस्याघातापराधस्य दण्डो मयि पात्येतेति। ततश्चावसिते विचारे आघातापराध एव तस्य निर्णीतो जुरीमहोदयैः। यावत् तेन मित्राय धन्यवादा वितीर्यन्ते स्म तावन्मित्रेणोक्तम्, अहो गरीयसा प्रयत्नेनैतत् सम्पादितं मया। अपरेषां सर्वेषां मतेन त्वं निरपराध एवासीः, केवलं मया बहु विजल्प्याघातापराधे भवतस्तेषां प्रतीतिरुत्पादिता। एवं पञ्चहोराविमर्शानन्तरं जुरीभिरुक्तं न खलु भवान् निर्दोषः परमाघातापराधाद् दण्डयितव्य इति।

---

# ब्राह्मणविमर्शः

वेद इन्द्रस्यानेकानि दुष्कृतान्यापराधाश्च वर्ण्यन्ते। तत्रैतरेये [ ३५।२ ] पञ्चापराधान् गृहीत्वेन्द्रस्य सोमपानतो वियोजनं देवैः कृतम्। ते च पञ्चापराधास्तत्रोक्ता यथा "विश्वरूपं त्वाष्ट्रमभ्यमंस्त, वृत्रमस्तृत, यतीन्सालावृकेभ्यः प्रादात्, अरुर्मघानवधीत्, बृहस्पतेः प्रत्यवधीदि"ति। तत्र विश्वरूपवधविषये वृत्रवधविषये चाख्यायिके ब्राह्मणे उच्येते। यतिविनाशविषये न काप्याख्यायिकोक्ता। तत्र भाष्यकृता 'यतीन्सालावृकेभ्य" इत्यस्य व्याख्यावसरे यतिवेषधरान् धर्मविरुद्धाचारिणो राक्षसान् सालावृकेभ्यः प्रदानेन हिंसितवानित्यर्थ उच्यते। परन्तु क इमे यतयः कुत्रत्याः कुतस्तेषां धर्मविरुद्धाचरणं कुतस्तेषामिन्द्रेण स्वयं वधमकृत्वा सालावृकेभ्यः प्रदानेन विनाशः? सामवेदब्राह्मणे[1] यतय इन्द्रेण विनाशितास्तेषां त्रयोऽवाशिष्यन्त बृहद्गिरिः पृथुरश्मिः रायोवाज इति तेषां को वा भरणं करिष्यतीति प्रश्ने इन्द्रेणोक्तमहमेषां भरणं करिष्यामीति। तेषां क्रमेण बार्हद्गिर-पार्थरश्म-रायोवाजीयसामदर्शनेन सन्तुष्ट इन्द्रस्तेभ्यो ब्रह्मचर्यादिकं प्रदत्तवानिति उच्यते। नैतावता क एते यतयः कुत्रत्याः, किमिति चैतेषां वध इन्द्रेण, किमिति तेषां त्रय एवावशिष्टाः, किमिति चेन्द्रेण तेषां भरणमित्यादिकं वर्ण्यते। भाष्यकारेण यतिवेषधारिणो धर्मविरुद्धाचारिणो राक्षसा इति वर्णनमिन्द्रवध्यत्ववर्णनतो मतिकल्पितमुत तत्र कश्चन निर्णायको हेतुरस्तीति सर्वस्मिन्नेतस्मिञ्छङ्कासमुच्चये निरासप्रकारोऽपेक्ष्यते। यदि कैश्चिदेतद्विवरणार्थं प्रयासः प्रमाणसहितः करिष्यते शोभनं भवेदिति।

---

# Fiancé शब्दस्य निर्वचनम्

माधवः। आर्य! Fiancé ( पुं ) Fiancée ( स्त्री ) शब्दयोः किं निर्वचनम्?

अध्यापकः। अरे! यैस्तावच्छाकटायनविरचितान्युणादिसूत्राण्यधीतानि तेषां पुरतः fiancé इत्यतिलघीयसीयं मात्रा। देशभाषासु प्रचलितौ फाँसफाँसीशब्दावस्य सनाभी। येनोद्बध्यते यो वोद्बध्यते स फियाँसे (fiancé), ययोद्बध्यते या वोद्बध्यते सा फियाँसे (fiancée)। उद्वाहोद्बन्धनयोः hanging wiving इत्यनयोश्चैक्यं प्रसिद्धं लोके। कथाशिल्पिकुलचूडामणेः Dickensमहोदयस्य ग्रन्थे च दृश्यते—

"It's very soon done, sir, isn't it?" inquired Mr. Folair of the collector, leaning over the table to address him.

"What is soon done, sir?" returned Mr. Lillyvick.

---

[1] ताण्ड्यमहाब्राह्मणे १३।४

"The tying up, fixing oneself with a wife," replied Mr. Folair. "It don't take long, does it ?"

"No sir," replied Mr. Lillyvick, colouring. "It does not take long. And what then, sir ?"

"Ah ! nothing," said the actor. "It don't take a man long to hang himself either, eh ? Ha, ha !"

Mr. Lillyvick laid down his knife and fork, and looked round the table with indignant astonishment.

"To hang himself !" repeated Mr. Lillyvick.

A profound silence came upon all, for Mr. Lillyvick was dignified beyond expression.

"To hang himself !" cried Mr. Lillyvick again. "Is any parallel attempted to be drawn in this company between matrimony and hanging ?"

"The noose, you know," said Mr. Folair a little crest-fallen.

---

## प्राप्तं पत्रद्वयम्

[ श्रीमाधवपटवर्धनस्य ]

( १ )

श्रीमतां पत्रे दूळभ-शब्दविषये सायणभाष्यीया व्युत्पत्तिरयुक्तेत्युक्तं प्रतीयते यतः 'दुरो दाशनाशदभध्येषु' इति वार्त्तिके कैयटेन दम्भेर्नलोपोऽत एव निपातनादिति वर्णनेन दम्भेरेवेदं रूपं वार्त्तिके गृहीतमिति प्रतीतिः। 'इक्श्तिपौ धात्वर्थनिर्देशे' इति वचतो 'दभे'रितिरूपमननुगुणमिति दम्भेरिति वर्णनस्य समुचितत्वेन तथा व्याख्यानमिति।

परंत्वत्र भाष्ये न कोऽपि विरोधः। भाष्ये दूळभमित्यस्य नोक्तवार्त्तिकतोऽत्र सिद्धिर्मन्यते। अत एव बाहुल्येनात्र ऊकारलोपडकारभकारादीनां साधनं प्रतिपाद्यते। तत्र नायं नियमो यद् दूळभपदं दम्भेरेव साधनीयं न दहेरिति, वैदिकत्वाद्रूपस्य। बाहुल्याश्रयणं तूभयत्राविशिष्टम्। अथ वार्त्तिके दभेति ग्रहणात् कैयटेनेदं दम्भेरेवेति निर्णयाल्लाघवाद् दूळभेति दम्भेरूपं गृहीत्वैव तत्पदसिद्धिरुचिता नान्यथेति चेत्, तदपि न। दभेति विषये लक्षणप्रतिपदोक्तन्यायस्यानवकाशात्। तद्रूपं दहेश्चेद् बाहुलकाद्धकारस्य भकारः दम्भेश्चेन्निपातनान्नकारलोपाश्रयणमित्युभयत्र लाघवाभावात्। एतेन 'दुःऽदभम'

इति पदपाठो व्याख्यातः। प्रातिशाख्यमपि दूळभपदे 'द' इत्यस्य नतिसाधकत्वमात्रं प्रतिपादयति न तु दभशब्दोऽयं दम्भेर्नतु दहेरिति निर्णयति। यदि दभेति रूपं दम्भेरपि दहेरपि तदानीं भाष्ये व्याख्याने वार्त्तिकोल्लेखेन तत्साधनमनुचित्तम्। तदुल्लेखमकृत्वा सर्वेषां कार्याणां बाहुल्येन साधनवचनं विरुध्यत इति तदपि न। वार्त्तिकस्य वैदिकशब्द-विषयकत्वेन व्यत्ययो बहुलमित्यादेः प्रपञ्चरूपत्वात्। एवं च व्यत्ययो बहुलमित्यादितः सिध्यतामूकारादीनां मौलिकतया तथोल्लेखो भाष्ये। यत्तु दग्धिपदम् 'इक्श्तिपौ धात्वर्थनिर्देशे' इति वचनविरुद्धमिति वचः, तदपि न। श्तिपि प्रत्यये शित्त्वात्सार्वधातु-कत्वात् इडभावे 'हो ढ' इति ढत्वे 'दादेरि'ति घेन निषिद्धे तेन घत्वे झषस्तथोरिति धत्वे जश्त्वे तद्रूपसिद्धेर्निराबाधत्वात्। न चात्र शपः प्राप्तिः श्तिपः कर्तृवाचित्वाभावात्। सुनोत्यादिष्वकर्तृवाचित्वेऽपि निर्देशात् श्नुप्रभृतीनां प्रवृत्तिः। ज्ञापकस्यासार्वत्रिक-त्वान्नात्र तत्संभवस्तस्मादत्रत्यं भाष्यं विनायकमिति न्यायविषयो नेति दिक्।

( २ )

दूळभविषये उत्तरं दृष्ट्वैका कथा मनस्युद्भूता। द्वयोर्विवदमानयोर्वादप्रारम्भ आसीत्—'कस्कः' 'कः कः' इति प्रयोगयोः कस्य साधुत्वमिति। एकेनोक्तं प्रथमः प्रयोग एव साधुर्न द्वितीय इति। अपरेणोक्तम् अयं द्वितीयः प्रयोगोऽपि साधुरर्थभेदादिति। तत्र प्रथमेनोक्तं कः-शब्दः किंशब्दतः समुत्पद्यते तस्याम्रेडने विसर्गस्य सकारः पारस्करादि-पाठवशतो भवति। यदानेकेषां मध्ये प्रत्येकं जिज्ञासाविषयत्वाभिप्रायकता तदानीं कः, क इति प्रयोगस्तदानीमपि सकारस्य प्राप्तिः। विसर्गस्य स्थाने सकारविधानं बहुशः प्रसिद्धं प्रायः सर्वैरनुस्रियते च स्थलविशेषे। तत्रेण उत्तरस्य परं षत्वं भवति इत्यादि। तत्र द्वितीयस्य वक्तुरभिप्रायः कः क इति प्रयोगोऽपि साधुर्भवति। नहि तेन द्वितीयः ककारः किंशब्दा-वयवो वाऽन्यशब्दावयवो वेति विशिष्य किमप्युक्तं केवलं कः क इति प्रयोगोऽपि साधुर्भवत्यर्थभेदादित्येवोक्तम्।

एवं मदीयं दभ इति दहधातोरपि भवितुमर्हतीत्येव वचनं न तु दम्भेर्न भवतीति। पदपाठे दूळभमित्यस्य दुःऽदभमिति केवलमुच्यते न तु दभमित्येतद् दम्भेरेव न तु दहेरिति निर्णीयते। दभरूपे निष्पन्ने तत्र दुःशब्दयोगे दूभावो दकारस्य मूर्धन्यभाववचनमपि टीकाकृतां न विरुद्धम्। प्रातिशाख्येषु निष्पन्नं दभेतिरूपं गृहीत्वा मूर्धन्यभावादिवचनम्, न तावता दभेति दम्भेरेव न तु दहेरिति निर्णयः। यदि नामान्ये ग्रन्थकारा दम्भेस्तत्पदं साधयन्ति न तावता कश्चन विरोधः दम्भेस्तत्पदं भवतीति स्वीक्रियत एव, दहेरपि तत्सम्भव इत्येव केवलमुच्यते, नैतावताऽन्यैर्विरोधसम्भावना। एवं स्थलान्तरे सायणभाष्ये दम्भे-स्तत्पदसाधनपूर्वं वचनमपि न विरुध्यते। भाष्यपाठे दम्भेरनुसारेणानेकस्थलेषु पाठ-

संशोधनापेक्षया यथाश्रुतभाष्यपाठोऽपि सङ्गच्छत उंकरोत्येति कल्पनस्यैव वरीयस्त्वम्। एवं च प्रातिशाख्यविरोधोऽपि न सम्भावितः। यतस्तत्र दम्भेतिरूपं गृहीत्वा प्रवृत्तिर्न पुनरिदं दम्भेरेव न तु दहेरिति निर्णय इत्युक्तमेव। एवञ्च दम्भिं गृहीत्वाऽन्येषां वचनानि भाष्यकारीयाणि वा स्थलान्तरवचनानि व्याख्यातानि। भ्रष्टयवन्यायस्त्वत्रानुचित एव, अत्र भ्रष्टेत्यस्य विरोधे भृष्टेतिरूपसाधकसूत्राणां जागरूकत्वात्। अत्र दभेत्येव वार्त्तिककारादिभी रूपमाश्रीयते तच्च दम्भेर्दहेश्चेति निराबाधमिति नात्र किमपि शास्त्रं बाधकम्। रसमज्जर्यान्तूच्छङ्खलभाव एवानुस्रियत इति सीताभोगमिहिदानादिसम्बन्धेन वर्धमानपदं शोभते न त्वत्र दभविषये। दभशब्दस्य दम्भधातुतश्चेत्सिद्धिर्मन्येवे मन्यतां न तत्र विरोधः। दहधातोरपि दभेतिपदसिद्धिर्भवतीत्येव प्रतिपाद्यते। केवलं कैयटेन दम्भेर्नलोपेन तत्सिद्धिः प्रतिपादिता। तत्र दम्भेश्चेत्तत्पदसिद्धिर्नलोपो वक्तव्य इत्यत्रैव तस्य तात्पर्यं न तावता धात्वन्तरतस्तत्साधनवारणम्। निघण्ट्वादिषु दभिः पठ्यते चेन्न तेन विरोधोऽस्माकं न ह्यस्माभिः स धातुर्नास्ति न वा तस्य तदर्थकत्वं निरस्यत इत्युच्यते। दभिपदं शितपा प्रत्ययेन भवितुमर्हति, तदुक्तमेव। श्तिपि शित्त्वात्सार्वधातुकत्वप्राप्तावपि नहि कर्त्रर्थत्वप्राप्तिः। कर्त्रर्थत्वं विना विकरणाप्राप्तिः। निर्देशाच्चेत्तस्यासार्वत्रिकत्वमित्युक्तमेव। दभेत्येतद्विषये लक्षणप्रतिपदोक्तन्यायस्याप्राप्तिः, दभेत्यस्य लाक्षणिकत्वात्।

किञ्च युवं दक्षमिति मन्त्रे मित्रावरुणयोर्यज्ञव्याप्तिरुच्यते, सा च हविर्व्याप्तिरूपैव यज्ञशब्देन यजनीयहविषो बोधनात्। तस्मिन्यज्ञे दक्षमितिविशेषणेन प्रकृष्टा वृद्धिरुक्ता। एवं च तस्मिन्यज्ञपदार्थे दाहस्यैवाग्निसम्बन्धादुपस्थितिः। तत्सम्बन्धेनात्र दूळभमिति विशेषणम्। एवं तद्धविः कीदृशम्? दूळभम् दुःखेन दग्धुमशक्यम्। यथा सामान्यतोऽसुशकं भारवहनादिकर्म महता प्रयत्नेन दुःखेनानुष्ठीयते नैवमिदं प्रकृतं यज्ञरूपं हविर्दुःखेनापि दग्धुं शक्यम्, अर्थाच्छत्रुभिर्यतो यज्ञशास्त्रप्रवृत्त्या सुदुरारोहेण प्रवृद्धत्वात्। एवं चात्र दूळभशब्देन दुर्दह एवार्थो वक्तव्यस्तदर्थमत्र भाष्यकृतो दह भस्मीकरणे इत्यस्मात्तत्साधनार्थं प्रयासः। अत एवात्र मन्त्रव्याख्याने दहधातोरेव प्रयोगो व्याख्याने व्युत्पत्तिप्रदर्शने च। व्याख्याने उक्तम्—दूळभम् दुर्दहम्। शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्थ इति। व्युत्पत्तावुच्यते दूळभम् दह भस्मीकरणे दुःखेन दह्यत इति दुर्दहम्। ईषद्दुःसुष्वित्यादिना दुर्युपपदे दग्धेः खल् व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य भकार इति। एवं च दूळभम् दुर्दभम् शत्रुभिर्दम्भितुमशक्यमित्यर्थः। दम्भहनने दुःखेन दभ्यते इति दुर्दभम्। ईषद्दुःसुष्वित्यादिना दुर्युपपदे

दम्भेः खलु व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो डकारस्य ळकार इति। एवं रेखाङ्कितस्थले पाठान्तरकल्पना सा च दग्धेरिति वचनत इति भवताभिमतं तच्च व्युत्पत्तिप्रदर्शनस्थले। व्याख्यानभागे च न तादृशं किञ्चन भवद्रीत्या सूचकमिति बहुलो विपर्ययो वक्तव्यो भवति। व्यर्थश्च स प्रयासः दहधातुतोऽपि दभशब्दस्य साधयितुं शक्यत्वादिति।

यद्यप्यत्र भाष्यस्योक्तन्यायविषयत्वं कण्ठतो नोक्तं तथापि दहधातोर्दभेतिरूपसाधकभागस्य संशोध्यत्ववचनेन, उकरीत्यानेकस्थले संशोधनेन पाठान्तरकल्पनाकरणापेक्षया यथास्थितपाठस्याविरोधात्स्वीकार्यत्वे तत्पाठनिबन्धनमभिमतमुक्तन्यायविषयत्वं भाष्ये एव पर्यवस्यतीत्यलम्।

---

# सायणभाष्यपाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## दूळभ-

सायणभाष्यम् [ ऋ० १।१५।६ ] अधिकृत्यास्मदीयं मतं मतान्तरं च प्रकाशितम्। इदानीं विपश्चितो विचारयन्तु।

अस्माकं मतेनेदानीन्तनैः प्रयुज्यमानं दहधातोरर्थे दग्धिपदं सर्वथा दुष्टमेव, ज्ञापकसिद्धं न सर्वत्रेतिवचनेन तस्य समर्थनं क्रियते चेत् सर्वेषामालङ्कारिकाणां सम्मतश्च्युतसंस्कृतिदोष एव जगतोऽस्तमियात् (पृः २८३)। भवतु। दग्धिपदस्य शुद्धत्वेऽपि न कापि हानिः। को वा प्रेक्षावान् सुप्रयुक्तं दहेरितिपदं परित्यज्याप्रयुक्तं दग्धेः-पदं प्रयुञ्जीत? यदि दग्धिपदं मुनित्रयेण वा काशिकाकाराभ्यां वा प्रायोक्ष्यत तर्हि सायणाचार्येणापि तस्य प्रयोगः समभाविष्यत, परं यथास्माभिर्दृष्टं तथा वैयाकरणानां लेखेषु पदमिदं सर्वथा गगनकुसुमायते। अत एव सर्वेषु हस्तलिखितपुस्तकेषु सन्दृश्यमानं दग्धेःपदं दम्भेःपदं संसूचयति। तदनुरोधेन चान्यान्यपेक्षितानि परिवर्तनानि विधेयानि। फलमुखगौरवं न दोषायेति संशोधनबाहुल्यं सोढव्यम्।

७।३३।१० ऋचो भाष्ये दृश्यते—अस्मिन् पक्षे जहातेर्गत्यर्थत्वादात्मनेपदं छान्दसं भवतीति। सर्वेष्वेव हस्तलिखितेषु मुद्रितेषु च पुस्तकेष्वयं पाठः। अत्र लिपिकरपरम्पराप्रमादेन जिहीतेर्जहातेरिति सञ्जातमिति स्फुटमेव।

३।३०।१० ऋचो M. मुद्रिते भाष्ये दृश्यते— बहूदकतयालमत्यर्थमातृद्यते हिंस्यत इत्यलातृणः।…अलातृणोऽलमातर्दनो मेघः।…तृहि हिंसायां। अलंपूर्वात्तृहेर्घञर्थे

कविधानमिति कर्मणि कप्रत्ययः। अल्मो मकारस्याकारः। समासस्वरः। इति। पुण्यपत्तन-पुस्तकेऽपि मूलेऽयमेव पाठः। अत्र तृदिः लिपिकरप्रमादात् तृहिः सञ्जात इति व्यक्तमेव।

अत एवास्माभिः सम्भाव्यते १।१५।६ ऋचो भाष्येऽपि लिपिकरप्रमादाद् दम्भेरिति पदं दग्धेः सञ्जातम्, तदनुसारेण चान्यान्यपि परिवर्तनानि सञ्जातानि। केषुचिद्धस्तलिखितेषु पुस्तकेषु विस्पष्टमेव दम्भेरिति वर्तते केवलं दहधातुवासनावासितचित्ततया Max Müller-प्रभृतिभिस्तन्न दृष्टमिति द्रढीयसी नः प्रतीतिः।

एतादृशः पाठविपर्यासो हस्तलिखितपुस्तकेषु बहुत्र सन्दृश्यते। शाकुन्तलस्य राघवभट्टविरचितव्याख्यानतः उदाहरणानि वारान्तरे प्रकाशयिष्यन्त इति शिवम्।

---

# छात्रहितैषिणी

[ श्रीवेङ्कटाचार्यः ]

## *किं साधुशब्दस्य ज्ञाने धर्मो भवति? उत प्रयोगे?*

लोकत एवार्थप्रत्यायनार्थं शब्दप्रयोगे सिद्धे सति, "शब्देनैवार्थोऽभिधेयो, नापशब्देन, एवं क्रियमाणमभ्युदयकारि भवति" इतीत्थं धर्मार्थं नियमो व्याकरणशास्त्रेण क्रियते इति पूर्वमुक्तम्। तत्प्रसङ्गात् किं साधुशब्दस्य ज्ञाने धर्मः? उत तत्प्रयोग इत्यनुमर्शं पतञ्जलिर्विमृश्य दर्शयति। इह तत्सारांशः किञ्चिदिव प्रदर्श्यते। तत्र

१। साधुशब्दस्य ज्ञानं धर्मं जनयतीत्येकः पक्षः;

२। न ज्ञानं, किंतु तस्य प्रयोग एव धर्मजनक इत्यपरः;

३। न केवलं ज्ञानं न वा केवलः प्रयोगः, किन्तु शास्त्रज्ञानपूर्वक-साधुशब्दप्रयोग एव धर्मोत्पत्तौ कारणमिति तृतीयः।

एषु पक्षेषु सम्भावितान् गुणदोषानपि पतञ्जलिरुपपादयति।

१। तत्र, "ज्ञाने धर्म" इति चेदङ्गीक्रियेत तर्हि साधुशब्दस्य ज्ञानाद् धर्म इव, तद्विपरीतस्यापशब्दस्य ज्ञानाद्धर्मविपरीतोऽधर्मोऽपि प्राप्नोति (शब्दज्ञानवतः पुरुषस्य)। "यो हि शब्दाञ्जानाति, अपशब्दानप्यसौ जानाति।" यथोष्णस्पर्शवान् वह्निर्दाहस्य कारणं, तद्विपरीतशीतस्पर्शवज्जलं तु दाहविपरीतस्य शैत्यस्य हेतुस्तद्वदत्रापि स्यात्। न केवलमधर्मः प्राप्नोतीतीयानेव दोषः, प्रत्युत भूयानधर्मः स्यात्, धर्मस्त्वल्पीयानेव वर्तेत। एकैकस्य साधुशब्दस्य बहवो ह्यपभ्रंशा दृश्यन्ते। तद्यथा—गौरित्यस्य गावी, गोणी, गोता, गोपोतलिकेत्येवमादयः। यदैकः साधुशब्दः स्वज्ञानद्वारा धर्मं जनयति

तदा तस्यैव ये बहवोऽपशब्दास्सन्ति ते बहुत्वाद् भूयांसमधर्मं जनयेयुः। "भक्ष्याशयाहिमञ्जूषां दृष्ट्वाऽऽखुस्तेन भक्षितः" इति रीत्या धर्मलिप्सो र्भूयोऽधर्मप्राप्तिरियं शोचनीया स्यात्।

एवं ज्ञाने धर्म इति कथनं वेदविरुद्धमपि भवति। "तेऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवु"रिति वेदवाक्यमसुराणामपशब्दप्रयोगादेव ( न तु तज्ज्ञानात् ) अधर्मं पराभवञ्च वृत्तं कथयति। अपशब्दप्रयोगादधर्मवत्, शब्दप्रयोगाद्धर्म इत्येव युक्तं ततो गम्यते। तस्माज् ज्ञानाद्धर्म इति कथनं वेदविरुद्धम्।

२। अथ "प्रयोगे धर्म" इत्यङ्गीकारे उक्तयोर्दोषयोर्यद्यपि नावकाशः, तथापि शास्त्राध्ययनप्रयत्नो निष्फलः स्यात्। यो महता प्रयत्नेन व्याकरणशास्त्रमधीत्य, साधुशब्दाञ्ज्ञात्वा प्रयुङ्क्ते तस्य, यश्च तथानधीत्य यदृच्छया साधुशब्दं प्रयुङ्क्ते तस्य च यदि फलं ( धर्मः ) समानं स्यात्तर्हि क्लेशसाध्ये शास्त्राध्ययने न कोऽपि प्रवर्तेत। तस्मादयमपि पक्षो न युज्यते।

३। व्याकरणशास्त्रात्साधुशब्दं ज्ञात्वा यः प्रयुङ्क्ते तस्यैव धर्म इति पक्षस्तु साधीयान्। अत्र ज्ञानस्य प्रयोगस्य चेत्युभयोरप्यपेक्षितत्वाद् अन्यतराङ्गीकारप्रयुक्तानां पूर्वोक्तदोषाणां नास्ति सम्भवः। "योऽग्निष्टोमेन यजते य उ चैनमेवं वेद" इत्यादिवेदवाक्यमपि ज्ञानपूर्वके यागानुष्ठाने फलं प्रतिपादयदेतत्पक्षाङ्गीकारेऽनुकूलम्।

इत्थं तृतीयपक्षमङ्गीकारार्हमुपपाद्य भाष्यकारो 'ज्ञाने धर्म' इति प्रथमपक्षोऽप्यङ्गीकर्तुं शक्यते इति दर्शयति। तत्र च सम्भावितदोषप्रतिविधानं कर्तव्यम्।

( क ) शब्दज्ञानाद्धर्मश्चेदपशब्दज्ञानादधर्मो भवेत्। सोऽपि भूयान् स्यादिति यो दोष उक्तस्तत्रेदं समाधानम्। वेदशब्दोऽस्माकं प्रमाणम्। स यद्वदति तदस्माभिरङ्गीक्रियते। "एकः शब्दः सम्यग् ज्ञातः" इत्यादि वदन्ती श्रुतिः शब्दज्ञानादीप्सितावाप्तिं दर्शयति, न त्वपशब्दज्ञानादधर्मप्राप्तिम्। तस्मादपशब्दज्ञानादधर्मः स्यादित्यप्रमाणकं वचनमश्रद्धेयम्। एवमयं दोषः परिहर्तुं शक्यते।

( ख ) अन्यदपि समाधानमत्र सम्भवति। अपशब्दज्ञानपूर्वक-शब्दज्ञानाद्धर्मो जायत इत्यङ्गीक्रियते। अर्थात्, अपशब्दज्ञानं शब्दज्ञानस्योपायः। एवं चापशब्दज्ञानस्य शब्दज्ञाने नान्तरीयकत्वात् तस्य नातिरिक्तं फलं भवति। किन्तु तस्यापि शब्दज्ञानजन्यो धर्म एव फलम्। "नहि वह्न्यानयननान्तरीयकं पात्रानयनं ततः पृथक्फलं भवति।" ततश्च यत्पूर्वमुक्तं "यो हि शब्दाञ् जानाति, अपशब्दानप्यसौ जानाती"ति तदिदं व्युत्क्रमेण वक्तव्यं "यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाती"ति। तस्मादधर्मस्य भूयसो वाल्पीयसो वा नास्त्यापत्तिरिति तत्त्वम्।

अथवा—अपशब्दज्ञानाद् अधर्मस्य सम्भवेऽपि तस्य भाविना शब्दज्ञानजन्येन धर्मेणापाकरणं भविष्यति। अत्र लोकप्रसिद्धः कूपखानकन्यायो दृष्टान्तत्वेन पतञ्जलिना दर्शितः। "तद्यथा—कूपखानकः कूपं खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति। तथापि सोऽप्सु सञ्जातासु तत एव तं गुणमासादयति, येन स च दोषो निर्हण्यते, भूयसा चाभ्युदयेन योगो भवति। एवमिहापि यद्यप्यपशब्दज्ञानेऽधर्मः, तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन स दोषो निर्घानिष्यते, भूयसा चाभ्युदयेन योगो भविष्यति" इति। तस्माच्छब्दज्ञानाद्धर्म इति कथने, अपशब्दज्ञानादधर्म आपतेदिति न भेतव्यम्।

( ग ) अस्मिन् पक्षे "तेऽसुरा" इति वेदवाक्यविरोधोऽपि पूर्वोक्तो न शङ्कनीयः। तद्वेदवाक्यगम्यः "शब्दप्रयोगे धर्मः" "अपशब्दप्रयोगेऽधर्मः" इति प्रयोगनियमो हि यागक्रियाविषयः, न त्वन्यविषयः। यज्ञप्रकरणेऽपशब्दप्रयोगादधर्म इति तस्य प्रतिपाद्यम्। अन्यत्र लौकिकव्यवहारे शब्दज्ञानाद्धर्म इत्यभ्युपगमे न तेन वेदवाक्येन यादृशस्तादृशोऽपि विरोधः। एवं ज्ञाने धर्म इति पक्षोऽपि कथञ्चिदङ्गीकर्तुं शक्य इति पतञ्जलिरन्ते दर्शयामास।

———

## श्रद्धाजाड्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

स्मर्यत एव प्रायेण वाचकमहाभागैर्यद् ब्राह्मणादिन्द्र राधसः [ १।१५।५ ] इत्यस्य मुद्रिते सायणभाष्ये दृश्यते—ब्राह्मणात्। ब्रह्मशब्देनात्र ब्राह्मणाच्छंसी कथ्यते। स च पुँल्लिङ्गः शेषनिघातेनानुदात्तादिः। तस्य सम्बन्ध्युत्तष्टश्चमसः। स च तस्यैवावयवन्नियत इत्यवयवविवक्षायामनुदात्तादेरञ्। पा० ४.२.४४। तेन ञित्त्वादाद्युदात्तश्चमसपरोऽत्र ब्राह्मणशब्दः। इति।* यथास्माभिर्दृश्यते तथायमत्र शुद्धः पाठः—स च पुंलिङ्गोऽन्तोदात्तः शेषनिघातेनानुदात्तादिः। तस्य सम्बन्ध्युत्तष्टश्चमसः [ पृः २८१ ] (अथवा सम्बन्धित्वेनेष्टश्चमसः† )। स च तस्यैवावयववन्नियत इत्यवयवविवक्षायामनुदात्तादेरञ् यद्वा, अनुदात्तादेरित्यञ् [ ४।३।१४० ]। इति।

अष्टाध्याय्याश्चतुर्थाध्यायस्य द्वितीयपादे दृश्यते सूत्रम्—"अनुदात्तादेरञ्" इति तस्यैवाध्यायस्य तृतीयपादे विलसति सूत्रम् "अनुदात्तादेश्च" इति। Max Müller-महोदयेन तत्पदाङ्कानुसारिभिश्च सूत्रसूचिकासन्दर्शनावसरे प्रथमोपस्थितस्य परित्यागे कारणाभावात् तदेवावलम्बितम्!!! तस्य प्रसङ्गो वर्तते वा न वेति न विचारितम्।

---

* मञ्जूषा । १८८२-शकीय-ज्यैष्ठस्य, पृः २२५। † पाठान्तराणि द्रष्टव्यानि।

एवमेव १।१७।२ मन्त्रभाष्ये दृश्यते—गन्तारा। ऋदृशोऽङ्ग्गुणः !!! पा० ७, ४, १६। अपृतृन्नित्यादिनोपधादीर्घत्वम्। इति। पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम्! ऋतोङावृदृशोऽङौ च सूत्रत्वं सुप्रतिष्ठितम्! १।१२७।६ ऋचो भाष्येऽप्येवम्।

उक्तादन्यः शेष इति वैयाकरणाः, किमप्यनुक्त्वा शेषनिघातेनेत्युक्तिरसमञ्जसा। शेषनिघातशब्द "आकाशस्थो निरालम्बो वायुभूतो निराश्रय" इव वर्तते।

पुँल्लिङ्ग इति पदं प्रमाणपदवीमधिरोहति वा न वेति विचार्यतां विपश्चिद्भिः।

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

## प्रसिद्धिश्च ॥ १।३।१६

प्रसिद्धिश्च श्रुतावाकाशशब्दस्य परमात्मनि, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" [ छान्दोग्य १।९।१ ] "आकाशो वै नामरूपयोर्निर्वहिता" [छान्दोग्य ८।१।४] इति भूताकाशवत् परमात्मन्यपि श्रौतप्रसिद्धिः, न लोकप्रसिद्धिमात्रेण भूताकाशो ग्राह्यः, श्रौतप्रसिद्ध्यैव श्रौतार्थस्य सन्निकृष्टत्वादित्यर्थः ॥१६॥

## इतरपरामर्शात् स इति चेन्नासम्भवात् ॥१।३।१७

मा भूदग्निमं भूतं दहराकाशः "अथ स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच" [ छान्दोग्य ८।३।४] इत्युत्तरस्मिन् वाक्ये सम्प्रसादशब्देन इतरस्य जीवस्य परामर्शात् स एव दहराकाशो भविष्यतीति चेन्न। कुतः? असम्भवात्। अपहतपाप्मत्वादीनां धर्माणां जीवेऽसम्भवादित्यर्थः ॥१७॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१।३।१८

उत्तरात् प्रजापतिवाक्याज्जीवोऽपहतपाप्मत्वादिगुणक इति चेत्? तथाहि स आत्माऽपहतपाप्मेत्यादिप्रजापतिवाक्यश्रवणादिन्द्रस्तद्विजिज्ञासया प्रजापतिमुपससेदे, प्रजापतिश्च जाग्रत्स्वप्नसुषुप्त्यतीतं देहाद्यतिरिक्तं जीवं तस्मै विज्ञापयति स्म, देहाश्रितस्य तस्य प्रियाप्रियवत्त्वं तस्मान्मुक्तस्य च तच्छून्यत्वमुपदिश्य "एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" [छान्दोग्य ८।३।४ ] इति जीवस्वरूपमेवोक्तवान्। तस्य च मुक्तत्वान्महीपतिवत् पुरुषान्तरादुत्तमत्वं रथवृषयोगदृष्टान्तेन च तस्यैव देहसंयोगमुक्त्वा चक्षुरादिभिस्तस्यैव दर्शनादिकर्तृत्वं,

ब्रह्मलोके च ज्ञानेन चक्षुषा सर्वकामभोक्तृत्वम् अपहतपाप्मत्वादिगुणकस्यात्मन उपासनाच्च सर्वलोकसर्वकामप्राप्तिं फलं चोक्तवान्। तथाचापहतपाप्मत्वादिगुणकस्वरूपोपदेशात् तथाविध आत्मा जीव एवेत्यायातम्, तस्मादपहतपाप्मत्वादीनां जीवे सम्भवात् स एव दहराकाश इति चेत् तत्राह "आविर्भूतस्वरूपस्तु" इति। तथाहि अनादिकर्मसन्तानादन्तर्हितोपहतपाप्मत्वादिगुणकस्योपासनाकलापैरात्मज्ञानादूर्ध्वं देहान्निर्गतस्य यदा ब्रह्मलोके ब्रह्मसम्पत्तिस्तदैवास्यापहतपाप्मत्वादिना स्वेन रूपेणाविर्भावो न ततः प्राक्। वक्ष्यति चोपरिष्टात् "संपद्याविर्भावः स्वेन शब्दात्" [ब्रह्मसूत्र ४।४।१] इति। तादृश एव जीवः प्रजापतिवाक्येऽभिहित इत्यर्थः। दहराकाशस्तु स्वतः सिद्धापहतपाप्मत्वादिभिर्महागुणैरत्यूर्जित इति स परमात्मैवेति सिद्धम्।

नास्मिन् सूत्रे ज्ञानपूर्वकालीनजीवभावमादाय ब्रह्म व जीवत्वेनोक्तः प्रमाणाभावात्, प्रकरणेऽस्मिन् जाग्रत्स्वप्नसुषुप्तिमत्तया जीवस्यैव प्रपञ्चितत्वात्, तुर्यपर्यायेण च तस्यैव मोक्षदशापि दर्शिता।

---

कवीन्द्र-रवीन्द्रनाथस्य

## कचं प्रति देवयानी-शापः

*[ विदाय-अभिशाप ]*

[ श्रीफटिकलाल-दासकृततात्पर्यानुवादः ]

देवयानी

जानामि बन्धो सकलं तदेव।
मच्चित्तदीपच्छुरितत्विषा भो
दृष्टं मया ते कियतो हि वारान्
सुगूढमन्तःकरणं निमेषाद्—
अतो रमण्या मम धृष्टतैषा।
तिष्ठात्र, मा गा, अत एव बन्धो—
नास्ते सुखं किञ्चन कीर्तिमध्ये।
अस्मिन् सखे वेणुमतीप्रतीरे
छाया-सुशीते विजने वनान्ते
विश्रब्धमुग्धे हृदये विमिश्रय

एवमेव १।१७।२ मन्त्रभाष्ये दृश्यते—गन्तारा। ऋदृशोऽङ्गि गुणः !!! पा० ७. ४. १६। अपतृन्नित्यादिनोपधादीर्घत्वम्। इति। पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम्! ऋतोङावृदृशोऽङौ च सूत्रत्वं सुप्रतिष्ठितम्! १।१२७।६ ऋचो भाष्येऽप्येवम्।

उक्तादन्यः शेष इति वैयाकरणाः, किमप्यनुक्त्वा शेषनिघातेनेत्युक्तिरसमञ्जसा। शेष-निघातशब्द "आकाशस्थो निरालम्बो वायुभूतो निराश्रय" इव वर्तते।

पुँल्लिङ्ग इति पदं प्रमाणपदवीमधिरोहति वा न वेति विचार्यतां विपश्चिद्भिः।

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

## प्रसिद्धिश्च ॥ १।३।१६

प्रसिद्धिश्च श्रुतावाकाशशब्दस्य परमात्मनि, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" [ छान्दोग्य १।९।१ ] "आकाशो वै नामरूपयोर्निर्वहिता" [छान्दोग्य ८।१।४] इति भूताकाशवत् परमात्मन्यपि श्रौतप्रसिद्धिः, न लोकप्रसिद्धिमात्रेण भूताकाशो ग्राह्यः, श्रौतप्रसिद्धैयव श्रौतार्थस्य सन्निकृष्टत्वादित्यर्थः ॥१६॥

## इतरपरामर्शात् स इति चेन्नासम्भवात् ॥१।३।१७

मा भूदन्तिमं भूतं दहराकाशः "अथ स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच" [ छान्दोग्य ८।३।४] इत्युत्तरस्मिन् वाक्ये सम्प्रसादशब्देन इतरस्य जीवस्य परामर्शात् स एव दहराकाशो भविष्यतीति चेन्न। कुतः? असम्भवात्। अपहतपाप्मत्वादीनां धर्माणां जीवेऽसम्भवादित्यर्थः ॥१७॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१।३।१८

उत्तरात् प्रजापतिवाक्याज्जीवोऽपहतपाप्मत्वादिगुणक इति चेत्? तथाहि स आत्माऽपहतपाप्मेत्यादिप्रजापतिवाक्यश्रवणादिन्द्रस्तद्विजिज्ञासया प्रजापतिमुपसेदे, प्रजापतिश्च जाग्रत्स्वप्नसुषुप्त्यतीतं देहाद्यतिरिक्तं जीवं तस्मै विज्ञापयति स्म, देहाश्रितस्य तस्य प्रियाप्रियवत्त्वं तस्मान्मुक्तस्य च तच्छून्यत्वमुपदिश्य "एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" [छान्दोग्य ८।३।४ ] इति जीवस्वरूपमेवोक्तवान्। तस्य च मुक्तत्वान्महीपतिवत् पुरुषान्तरादुत्तमत्वं रथतृषयोगदृष्टान्तेन च तस्यैव देहसंयोगमुक्त्वा चक्षुरादिभिस्तस्यैव दर्शनादिकर्तृत्वं,

ब्रह्मलोके च ज्ञानेन चक्षुषा सर्वकामभोक्तृत्वम् अपहतपाप्मत्वादिगुणकस्यात्मन उपासनाच्च सर्वलोकसर्वकामप्राप्तिं फलं चोक्तवान्। तथाचापहतपाप्मत्वादिगुणकस्वरूपोपदेशात् तथाविध आत्मा जीव एवेत्यायातम्, तस्मादपहतपाप्मत्वादीनां जीवे सम्भवात् स एव दहराकाश इति चेत् तत्राह "आविर्भूतस्वरूपस्तु" इति। तथाहि अनादिकर्मसन्तानादन्तर्हितोपहतपाप्मत्वादिगुणकस्योपासनाकलापैरात्मज्ञानादूर्ध्वं देहान्निर्गतस्य यदा ब्रह्मलोके ब्रह्मसम्पत्तिस्तदैवास्यापहतपाप्मत्वादिना स्वेन रूपेणाविर्भावो न ततः प्राक्। वक्ष्यति चोपरिष्टात् "संपद्याविर्भावः स्वेन शब्दात्" [ब्रह्मसूत्र ४।४।१] इति। तादृश एव जीवः प्रजापतिवाक्येऽभिहित इत्यर्थः। दहराकाशस्तु स्वतः सिद्धापहतपाप्मत्वादिभिर्महागुणैरत्यूर्जित इति स परमात्मैवेति सिद्धम्।

नास्मिन् सूत्रे ज्ञानपूर्वकालीनजीवभावमादाय ब्रह्म व जीवत्वेनोक्तः प्रमाणाभावात्, प्रकरणेऽस्मिन् जाग्रत्स्वप्नसुषुप्तिमत्तया जीवस्यैव प्रपञ्चितत्वात्, तुर्यपर्यायेण च तस्यैव मोक्षदशापि दर्शिता।

---

कवीन्द्र-रवीन्द्रनाथस्य

# कचं प्रति देवयानी-शापः

*[ विदाय-अभिशाप ]*

[ श्रीफटिकलाल-दासकृततात्पर्यानुवादः ]

देवयानी

जानामि बन्धो सकलं तदेव।
मच्चित्तदीपच्छुरितत्विषा भो
दृष्टं मया ते कियतो हि वारान्
सुगूढ़मन्तःकरणं निमेषाद्—
अतो रमण्या मम धृष्टतैषा।
तिष्ठात्र, मा गा, अत एव बन्धो—
नास्ते सुखं किञ्चन कीर्तिमध्ये।
अस्मिन् सखे वेणुमतीप्रतीरे
छाया-सुशीते विजने वनान्ते
विश्रब्धमुग्धे हृदये विमिश्रय

विस्मृत्य बाह्यं निखिलं च विश्वं
दिवं नवीनां रचयाव आवाम्।
रहस्यमेतत् तव किं न जाने ?

कचः

शान्तं नु पापं, न हि देवयानि !

देवयानी

कथं न ? मिथ्या मयि केवलासीत्
प्रवञ्चना सा हि निदारुणा ते ?
दृष्टं मनस्ते न हि जातु किंस्वित् ?
न वेत्सि किं त्वं प्रणयो रमण्या
जानाति गूढं पुरुषस्य चित्तम् ?
प्रायेण लीनं घनपल्लवान्तः
प्रकाशमेति प्रसवस्तरूणां,
किन्त्वस्य गन्धो वद केन गोप्यः ?
कतिष्वहःसु त्वमनन्यचित्तो
मद्दृष्टिमात्रे श्रुतकण्ठरावः
समुन्नमय्यानतमाननं किं
स्थितो न सद्यः स्फुरिताखिलाङ्गः ?
सञ्चाल्यमानान्मणितो यथास्य
गभस्तिमाला च्छुरिता चकास्ति
तथैव देहात्तव वेपमानाद्
विसारिताभूदनुरागदीप्तिः।
दृष्टा मया किं न हि सा कदापि ?
धृतोऽसि बन्धो निजकर्मजालै-
स्त्वमद्य बन्दी मम चासि तस्मात्।
छेत्तुं न शक्तो भवितासि बन्धं—
शक्रः स भूयस्तव नैव शत्रुः।

(क्रमशः

# सायणभाष्यपाठविमर्शः

प्रमादो मानुष्यकसुलभो दोषो महतामपि संभवत्येव। संभावितदोषस्थले वस्तुनस्तत्र दोषो वा तात्पर्याविज्ञानं वेति निर्णयाभावे प्रश्नरूपेणैव तदुल्लेखकरणं मर्मस्पृक् न भवतीति स एव पन्था उचितः। भवद्भिर्मञ्जूषाया अभिनवेऽङ्के उल्लिखितं स्थलं तादृशं यतो भाष्यो-ल्लेखस्त्वेवम्—ब्राह्मणादिन्द्र राधसः पिबा सोममितिमन्त्रव्याख्याने ब्राह्मणाद्राधस इति-सामानाधिकरण्येन निर्देशात्पौत्रात्सोममितिप्रक्रमाद् राधःशब्देन सोमपानसाधनं पात्रमेवात्र विवक्षणीयम्। तथा सति ब्राह्मणादित्यनेन सोमपानसाधनपात्रसम्बन्धिन एव ऋत्विजो बोधोऽपेक्षितः। तदर्थं नामैकदेशन्यायेन ऋत्विग्विशेषस्य संसूचनमिति गृहीत्वोच्यते। ब्राह्मणादिति। ब्राह्मणादित्यस्मिन्पदे प्रकृतिभूतब्रह्मशब्देन ब्राह्मणाच्छंसिनो ग्रहणं स च सोमयागे ऋत्विग्वर्गचतुष्टये ब्रह्मवर्गे द्वितीयत्वेनोक्तो गृह्यते। तत्र ब्रह्मशब्दस्तु द्विलिङ्गोऽर्थभेदेन भवति नपुंसकलिङ्गो मोक्षार्थं जिज्ञास्यवस्तुपरः, एकमेवाद्वितीयं ब्रह्मेत्यादौ निर्दिश्य-मानः। भवति चापरः पुंलिङ्गो विप्रजातिपरः कार्यब्रह्मपरो वा। तत्रेदं वारयितुं भाष्ये स च ब्राह्मणाच्छंसिबोधको ब्रह्मशब्दोऽत्र पुंलिङ्गे वर्तमान इति शेषः। शेषनिघातेनानु-दात्तादिः। ब्रह्मशब्दस्य नपुंसकत्वे हि नब्विषयस्यानिसन्तस्येतिप्रवृत्त्याऽऽद्युदात्तो भवेत्। अत्र पुंलिङ्ग इति वर्णनेन नब्विषयस्येत्याद्युदात्ताप्रवृत्तौ फिषोऽन्त इत्यन्तोदात्ते शेषनिघातेना-द्यनुदात्तत्वेत्युक्तं भाष्ये शेषनिघातेनानुदात्तादिरिति। तस्मात्पुंलिङ्गाद् ब्राह्मणाच्छंसि-बोधकाद् ब्रह्मशब्दाच्चमसरूपार्थे संबन्ध्यर्थकः प्रत्ययो विवक्षितः। सोमयागे चमसिनोऽनेक ऋत्विजः। तेषां चमसरूपाणि पात्राण्यपि समानाकाराणि भवन्ति तेषां पात्राणां परस्परतो व्यावर्तनाय ऋत्विगभिप्रायेण विभिन्नानि चिह्नानि क्रियन्ते। तत्र ब्राह्मणाच्छंस्यृत्विग-भिप्रायेण पात्रस्योपरिष्टात्तक्षणं तत्सम्बन्धचिह्नरूपं क्रियते। एवं सत्युत्तरत्वं ब्राह्मणा-च्छंस्यृत्विक्चिह्नमिति तस्य तेनैव ऋत्विजा नियतः सम्बन्ध इति। तदभिप्रेत्य भाष्य उक्तम् तस्य सम्बन्ध्युत्तरश्चमस इति। तत्र सामीप्येऽवयवत्वारोपेण समासवदत्र नियतसम्बन्धेऽव-यवावयवित्वारोपेणात्रावयवत्वं चमस आरोप्य चमसरूपावयवविवक्षायां पूर्वोक्तानुदात्तादि-ब्रह्मशब्दात्सम्बन्ध्यर्थप्रत्यये विवक्षितेऽवयवे च विकारकल्पनया विकारार्थकोऽनुदात्तादेरित्यञ् प्रत्ययोऽत्रेत्यभिप्रायेण भाष्ये उक्तम्—स चावयववत्तस्यैव नियत इत्यवयवविवक्षायामनुदात्ता-देरञ्। अत्रानुदात्तादेरञितिवचनेन न तदानुपूर्वीकं सूत्रं विवक्ष्यते किन्तु अञ् प्रत्यये हेतुभूतानुदात्तादित्वसूचनद्वाराऽञ् प्रत्ययो विवक्ष्यते, तद्विधायकसूत्रं चावयवशोऽनूद्यते। एवं च तादृशं सूत्रमनुदात्तादेश्चे ति गृहीतं भवति। संपूर्णं भाष्यकारीयवचनं सूत्रसूचकमिति भ्रमेणाऽनुदात्तादेरञित्यानुपूर्वीकसूत्रसङ्ख्योल्लेखो मुद्रितस्थले। वस्तुतस्तत्रानुदात्तादेश्चे-त्येतत्सूत्रसङ्ख्योल्लेखोऽपेक्ष्यते। एवं च तादृशसूत्रसङ्ख्यानुल्लेखे च भाष्यमिदं सङ्गत-मेवेति दिक्।

———

# नाथ-सम्प्रदायः

[ श्रीगजानन-लक्ष्मण-रेगे, बि-ए ]

## गोरक्षनाथः

मत्स्येन्द्रनाथस्य शिष्यप्रवरो गोरक्षनाथः। अथैकदा मत्स्येन्द्रनाथो धर्मप्रचारार्थं ग्रामाद् ग्राममटन्नयोध्याया नातिदूरे जयश्रीनगरं प्राप्तः। भैक्षवृत्तिमुपाचरन् स कश्चिद् ब्राह्मणनिवासं समुपस्थितः। निहितं ब्राह्मण्या सादरं भिक्षापात्रे भैक्षम्। किन्तु ब्राह्मणीं विषण्णवदनां दृष्ट्वा मत्स्येन्द्रनाथेन पृष्टम्। पश्याम्यत्रभवतीं म्लानवदनाम्। न चेद्रहस्य-मिच्छामि श्रोतुं विषादहेतुमिति। तयोक्तं सुस्थास्मि भगवन्! किन्त्वनपत्येति। दयार्द्रमनसा मत्स्येन्द्रनाथेन कन्थातः किञ्चिद्भस्मोद्धृत्योक्तम्। भद्रे, भक्षयैतत्पुत्रं त्वं प्राप्स्यसीति। तदनु सोऽन्यत्र प्रतस्थे। मत्स्येन्द्रनाथस्य निर्गमनानन्तरं ब्राह्मणी प्रतिवेशिनीसविधे गत्वा तस्यै सर्ववृत्तान्तं निवेदयामास। "कथं जानासि परमार्थतोऽयं सिद्धपुरुष इति। कितवोऽपि स्यात्तन्मा भक्षय तद्भस्मेति" प्रतिषिद्धा सा ब्राह्मणी तद्भस्म निकटवर्तिनि गोमयगर्ते प्रक्षिप्तवती। द्वादशाब्दोत्तरं विविधक्षेत्रेषु सञ्चरन् मत्स्येन्द्रनाथस्तदेव गृहं प्रत्यागमत्, गृहस्वामिनीं च पप्रच्छ। भद्रे! क्व ते पुत्रः, कियान् संवृद्धः, कीदृशश्चेति। भगवन्! न मया भक्षितं भस्म, श्वभ्रे निक्षिप्तं तदिति ब्राह्मण्याभिहितम्। दर्शय मे तं श्वभ्रमित्युक्ता ब्राह्मणी तं दर्शितवती। श्वभ्रं दर्शितवत्यां ब्राह्मण्यामुदचरन्मत्स्येन्द्रवाणी भो वत्स, अपि स्वस्थोऽसि? उत्तिष्ठ, गर्ताद् बहिरागच्छेति। अनवसितवचसि मत्स्येन्द्रनाथे द्वादशवर्षीयः कश्चिच्छोभनाकृतिर्बालो गर्तादुद्गतः स्वगुरोश्च चरणयोः साष्टाङ्गपातं प्रणम्य स्थितः। दृष्ट्वा च तत्परमाद्भुतं कृत्यं ब्राह्मणी लज्जया विवर्णभावं प्रपेदे, निनिन्द चात्मनो दैवम्। तं समयमारभ्य बालोऽयं गोरक्षनाथनाम्ना प्रथितयशस्को नाथपथ-प्रवर्तकः सिद्धपुरुषो बभूव। गोरक्षसंहिता, गोरक्षसहस्रनाम, गोरक्षशतकं, गोरक्षकल्पः, गोरक्षपीठिका, विवेकमार्तण्डः इत्येते नैकविधाः संस्कृतभाषोपनिबद्धा ग्रन्थास्तस्य नाम्ना प्रचलन्ति। नेपालप्रदेशे गोरक्षनाथः श्रीपशुपतिनाथस्यावतार इति मन्यते। नेपालवासिनो यद् गुरखे इत्यभिधीयन्ते तत्तस्यैव नामतः। गोरखपुरे गोरक्षनाथस्य विशालं मन्दिरं विद्यते। गोण्डा मण्डले नागनाथनामके ग्रामे गोरक्षनाथस्यैका तपस्थली वर्तत इति श्रूयमः।

गोरक्षनाथस्य द्वौ शिष्यप्रवरौ गहिनीनाथ-चर्पटीनाथनामानौ। गहिनीनाथान्निवृत्ति-नाथो निवृत्तिनाथाज् ज्ञानेश्वर इति शिष्यपरम्परा महाराष्ट्रप्रदेशे लोकविश्रुता। अर्वाचीन-कालीनो गहिनीनाथशिष्यो महायोगी सोहिरोबा आम्बियेमहोदयोऽपि नाथसंप्रदायी। तस्य सिद्धान्तसंहिता, महदनुभवेश्वरी, अद्वयानन्दः, अद्वयबोधः, पूर्णाक्षरी इति योगशास्त्र-विवेचकाः केचिद् ग्रन्था विलसन्ति। (क्रमशः)

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अध्यापकः। वत्से मृदुले! किमिदं श्रीमत्या विलिखितं—दरिद्रय धनं देहीति। दरिद्रायेति लेखनीयम्।

मृदुला। आर्य, ज्ञापकसिद्धस्यासार्वत्रिकत्वाद् दरिद्रय इति भवत्येव।

अध्यापकः। भवतु। वत्से विप्लविके! किमिदं भवत्या विलिखितं मुग्धबुद्धिः सुशोभना पाषाणं पयो दुग्धीति।

विप्लविका। (सक्रोधम्) बाढं विलिखितम्, पुनरपि लेखिष्यते, शतकृत्वो लेखिष्यते, सहस्रकृत्वो लेखिष्यते। किं वा महापातकं मयानुष्ठितमेवं लिखन्त्या।

अध्यापकः। वत्से! कथं क्रुध्यसि? महापातकस्य वार्ताप्यत्र नास्ति, केवलं दुग्धीति पदं प्रामादिकम्।

विप्लविका। कस्य वा पण्डिम्मन्यस्य मतेन प्रामादिकमिदं पदम्?

अध्यापकः। वत्से! न खलु कस्यापि पण्डितम्मन्यस्य। तिपः पित्त्वात् सगुणत्वाद् दोग्धीत्येव साधु, न पुनर्दुग्धीति।

विप्लविका। आर्य! अत्रभवतो वचनं हासमेवोपजनयति। भवन्तस्तावदशीतिपरा वृद्धाः। अपि नाम सम्भवति संस्कृतभाषायां किमप्यशुद्धं पदम्? अपि न ज्ञायते भवद्भिः प्रामाणिकधुरन्धराणामपि सम्मता परिभाषा संज्ञापूर्वको विधिरनित्य इति।

अध्यापकः। वत्से चिरं जीव। सम्यग् बोधितोऽस्मि। (हरिचरणं प्रति) अरे हरिचरण! किमिदं त्वया लिखितं "महाराजन्! स्वस्त्यस्तु ते" इति।

हरिचरणः। आर्य! विचारमार्गप्रहितेनापि चेतसात्र कमपि दोषं नावधारयामि।

अध्यापकः। अरे महाराजन्निति पदमशुद्धमेव।

हरिचरणः। आर्य, राजन्निति पदं शुद्धं वा?

अध्यापकः। बाढं शुद्धम्।

हरिचरणः। तर्हि महाराजन्नित्यपि शुद्धम्।

अध्यापकः। अरे मूर्ख! समासे राजाहःसखिभ्यष्टजिति सूत्रेण समासान्तष्टज् भवति।

हरिचरणः। अस्मत्सतीर्थ्यया विप्लविकया सम्यगेवोक्तं संस्कृतभाषायामशुद्धपदत्वं न सम्भवति, एषा खलु देवभाषेति। देवताप्रसादात् सर्वमेव शुद्धिमुपयाति। कृपया स्मर्यतां तावत् परिभाषा समासान्तविधिरनित्य इति।

अध्यापकः। वत्स! सम्यगुक्तं श्रीमता। अरे नरेन्द्र! किमिदं त्वया

विलिखितम्—रमतु रमतु चित्ते भारती मे वरिष्ठेति। अपि न ज्ञायते श्रीमता रमधातुरनुदात्तेत्त्वादात्मनेपदीति।

नरेन्द्रः। आर्य, अपि न ज्ञायतेऽत्रभवतानुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति।

अध्यापकः। साधु वत्स साधु। वार्धकवशाद् व्यामोहो मे सञ्जातः। न केवलं समासान्तविधिः समासविधिरेवानित्यः, न केवलं समासविधिर्व्याकरणविधिरेवानित्यः, प्रमाणानां सामान्ये पक्षपातात्। अवितथं खलूक्तं विप्लविकया—न खलु संस्कृतेऽशुद्धं नाम सम्भवति। यदेव ब्रवीषि यदेव लिखसि सर्वमेव साधु। अत एव व्याकरणग्रन्थान् वह्नौ समर्प्य सुखी भव।

---

# पुस्तक-परिचयः

अमरुशतकम्। वेमभूपालविरचितया शृङ्गारदीपिकाख्यया व्याख्यया समलङ्कृतम्। श्रीमता चिन्तामन रामचन्द्रदेवधर एम् ए महोदयेनोपोद्घाताङ्गलभाषामयानुवादपरिशिष्टादियोगेन संस्कृतम्। Oriental Book Agency, 15 Shukrawar Peth, Poona 2 इत्यतः प्रकाशितम्। मूल्यं ६।२५ रूपकाः (Rs. 6.25).

यद्यप्यमरुशतकस्य व्याख्यास्वर्जुनवर्मदेवविरचिता रसिकसञ्जीवनी सर्वथा प्राथम्यमर्हति, तथापि वेमभूपालस्य शृङ्गारदीपिकापि रसिकजनमनोहारिणी। श्रीमता देवधर-महोदयेन महता यत्नेन हस्तलिखितपुस्तकानि परीक्ष्य व्याख्यानमिदं मुद्रापितम्। उपोद्घातेऽमरुशतकस्य पाठविषये विचारो वर्तते। अवश्यं संग्राह्यमिदं पुस्तकं साहित्यरसपिपासुभिः।

वाचकमहाभागानां विचारसौकर्यायात्रत्य एकः श्लोकष्टीकात्रितयसहयोगेन सम्मुद्र्यते।

आ दृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन् क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम्॥

देवधरमहोदयेनादृष्टिप्रसरादित्येकपदरूपेण मुद्रापितं दत्त्वेतिपदमप्येकतकारकं विहितमिति विषीदामः। यद्यपि सर्वैष्टीकाकृद्भिर्मा भूदागत इति पठ्यते तथापि विद्याकरविरचित सुभाषितरत्नकोषे समुपलभ्यमानः 'नाभूदागत' इति पाठ एव समीचीनः स्वारसिकश्चेति प्रतिभाति, ईदृशेषु स्थलेषु माशब्दप्रयोगस्य कविसम्प्रदायविरुद्धत्वात्। अत एव वेमभूपालेन कुशकाशावलम्बनन्यायेनोक्तम्—अत्र मेति प्रतिषेधे निपातो न

विलिखितम्—रमतु रमतु चित्ते भारती मे वरिष्ठेति। अपि न ज्ञायते श्रीमता रमधातुरनुदात्तेत्त्वादात्मनेपदीति।

नरेन्द्रः। आर्य, अपि न ज्ञायतेऽत्रभवतानुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति।

अध्यापकः। साधु वत्स साधु। वार्धकवशाद् व्यामोहो मे सञ्जातः। न केवलं समासान्तविधिः समासविधिरेवानित्यः, न केवलं समासविधिर्व्याकरणविधिरेवानित्यः, प्रमाणानां सामान्ये पक्षपातात्। अवितथं खलूक्तं विप्लविकया—न खलु संस्कृतेऽशुद्धं नाम सम्भवति। यदेव ब्रवीषि यदेव लिखसि सर्वमेव साधु। अत एव व्याकरणग्रन्थान् वह्नौ समर्प्य सुखी भव।

---

# पुस्तक-परिचयः

अमरुशतकम्। वेमभूपालविरचितया शृङ्गारदीपिकाख्यया व्याख्यया समलङ्कृतम्। श्रीमता चिन्तामन रामचन्द्रदेवधर एम् ए महोदयेनोपोद्घाताङ्गलभाषामयानुवादपरिशिष्टादियोगेन संस्कृतम्। Oriental Book Agency, 15 Shukrawar Peth, Poona 2 इत्यतः प्रकाशितम्। मूल्यं ६।२५ रूपकाः (Rs. 6.25).

यद्यप्यमरुशतकस्य व्याख्यासु अर्जुनवर्मदेवविरचिता रसिकसञ्जीवनी सर्वथा प्राथम्यमर्हति, तथापि वेमभूपालस्य शृङ्गारदीपिकापि रसिकजनमनोहारिणी। श्रीमता देवधर-महोदयेन महता यत्नेन हस्तलिखितपुस्तकानि परीक्ष्य व्याख्यानमिदं मुद्रापितम्। उपोद्घातेऽमरुशतकस्य पाठविषये विचारो वर्तते। अवश्यं संग्राह्यमिदं पुस्तकं साहित्यरसपिपासुभिः।

वाचकमहाभागानां विचारसौकर्यायात्रत्य एकः श्लोकष्टीकात्रितयसहयोगेन सम्मुद्र्यते।

आ दृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन् क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम्॥

देवधरमहोदयेनादृष्टिप्रसरादित्येकपदरूपेण मुद्रापितं दत्त्वेतिपदमप्येकतकारकं विहितमिति विषीदामः। यद्यपि सर्वैष्टीकाकृद्भिर्मा भूदागत इति पठ्यते तथापि विद्याकरविरचित सुभाषितरत्नकोषे समुपलभ्यमानः 'नाभूदागत' इति पाठ एव समीचीनः स्वारसिकश्चेति प्रतिभाति, ईदृशेषु स्थलेषु माशब्दप्रयोगस्य कविसम्प्रदायविरुद्धत्वात्। अत एव वेमभूपालेन कुशकाशावलम्बनन्यायेनोक्तम्—अत्र मेति प्रतिषेधे निपातो न

माङ्। माङ् भवतीति चेन्माङि लुङ्ङित्याशीः प्रसज्येत। सा त्वत्र न युक्ता। मा भूदित्यत्र काकुरनुसन्धेयेति।

रुद्रमदेवकुमारकृतव्याख्या। कयाचन पान्थस्त्रिया दृष्टिःसरं यावद् वल्लभस्य मार्गं दृष्ट्वोद्विग्नया सत्या पुनर्निवृत्तेषु मार्गेषु दिवसावसानेऽन्धकारे प्रसरति सति सशोकया पदद्वयं गत्वास्मिन् क्षणे स आगतो मा भूदित्याशयाधिकवक्रीकृतग्रीवं यथा॰स्यादेवं पुनरवलोकितम्॥९०॥

श्रृङ्गारदीपिका। आ दृष्टिप्रसराद् दृष्टिसञ्चारावधि प्रियस्य वल्लभस्य पदवीं मार्गं समुद्वीक्ष्य विलोक्य निर्विण्णया खिन्नया प्रियस्यानागमनेनेति शेषः। अहःपरिणतौ दिनावसाने ध्वान्ते तमसि समुत्सर्पति प्रसरति सति पथिषु विश्रान्तेषु विरतेषु सत्सु गतागतशून्येष्वित्यर्थः। सशुचा सखेदया पान्थस्त्रिया पान्थस्य प्रोषितस्य स्त्री वनिता तया गृहं प्रति गृहमुद्दिश्य एकं पदं दत्त्वा विन्यस्य अस्मिन् क्षणे तत्काल एवागत आयातो मा भूदिति नासीदिति प्रिय इति शेषः। अत्र मेति प्रतिषेधे निपातो न माङ्। माङ् भवतीति चेत्, माङि लुङ्ङित्याशीः प्रसज्येत। सा त्वत्र न युक्ता। मा भूदित्यत्र काकुरनुसन्धेया। अमन्दवलितग्रीवं शीघ्र[वि]वर्तितकन्धरं यथा भवति तथा पुनर्वीक्षितं पुनर्विलोकितमिति सम्बन्धः। अस्मिन् क्षणे मा भूदागत इत्यनेन पुनर्वीक्षणेनौत्सुक्यातिशयः सूचितः। अत्र नायिका स्वीया मध्या च, किञ्च प्रोषितभर्तृका। यथा भारतीये। देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका इति। नायकोऽनुकूलः। प्रवासविप्रलम्भशृङ्गारः। अत्र चेष्टाकृतं सङ्गेच्छारूपं शृङ्गारि नर्म। जातिरलङ्कारः॥९१॥

रसिकसञ्जीवनी। कयाचिदध्वगवध्वा सकलं दिवसं यावद् दृष्टिः प्रसरति तावदन्तरे दयितस्यागमनपद्धतिमुद्ग्रीविकया वीक्ष्य प्राणनिरपेक्षतारम्भकं निर्वेदं प्राप्तया वासरान्ते विरलसञ्चारेषु वर्त्मसु तमसि सम्यग् उत्कटं प्रसरति सति निष्प्रत्याशया सशुचा गृहं प्रति पदमेकं क्षिप्त्वास्मिन्नेवान्तरे कदाचिदागमो मा भूदिति प्रत्याशया औत्सुक्याद् वेगविवर्तितकन्धरं यथा भवतीत्येवं पुनः पृष्ठतो विलोकितमिति तदेकतानेन प्रीतिप्रकर्षः। पथिष्विति बहुवचनेन सर्वमार्गेषु प्रियस्यागमनपदवी निर्वर्णितेत्यर्थः। पान्थस्त्रियेत्येकवचनेन विरहहृद्रोगभेषजात्मकप्रबोधनवाक्यप्रस्तावनादिभिराश्वासदायिनी वयस्यापि तस्या नास्तीति भावः। तदेवं प्रवासात्मको विप्रलम्भोऽप्येष करुणप्राय एवेति मर्मणि स्पृशति। परमग्रे तनश्लोकस्यौचित्येन रसिकाः सञ्जीवन्ति। 'दूरदेशान्तरस्थे तु कार्यतः प्रोषिते प्रिये' इति प्रोषितभर्तृका नायिका॥७६॥

६१तम पृष्ठे टीकायां मुद्रितं सहस्व मृष्यस्वेति। अत्र पाठान्तराणि—मर्षयस्व

विलिखितम्—रमतु रमतु चित्ते भारती मे वरिष्ठेति। अपि न ज्ञायते श्रीमता रमधातुरनुदात्तेत्त्वादात्मनेपदीति।

नरेन्द्रः। आर्य, अपि न ज्ञायतेऽत्रभवतानुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति।

अध्यापकः। साधु वत्स साधु। वार्धकवशाद् व्यामोहो मे सञ्जातः। न केवलं समासान्तविधिः समासविधिरेवानित्यः, न केवलं समासविधिर्व्याकरणविधिरेवानित्यः, प्रमाणानां सामान्ये पक्षपातात्। अवितथं खलूक्तं विप्लविकया—न खलु संस्कृतेऽशुद्धं नाम सम्भवति। यदेव ब्रवीषि यदेव लिखसि सर्वमेव साधु। अत एव व्याकरणग्रन्थान् वह्नौ समर्प्य सुखी भव।

---

## पुस्तक-परिचयः

अमरुशतकम्। वेमभूपालविरचितया शृङ्गारदीपिकाख्यया व्याख्यया समलङ्कृतम्। श्रीमता चिन्तामन रामचन्द्रदेवधर एम् ए महोदयेनोपोद्घाताङ्गलभाषामयानुवादपरिशिष्टादियोगेन संस्कृतम्। Oriental Book Agency, 15 Shukrawar Peth, Poona 2 इत्यतः प्रकाशितम्। मूल्यं ६।२५ रूपकाः (Rs. 6.25).

यद्यप्यमरुशतकस्य व्याख्यास्वर्जुनवर्मदेवविरचिता रसिकसञ्जीवनी सर्वथा प्राथम्यमर्हति, तथापि वेमभूपालस्य शृङ्गारदीपिकापि रसिकजनमनोहारिणी। श्रीमता देवधर-महोदयेन महता यत्नेन हस्तलिखितपुस्तकानि परीक्ष्य व्याख्यानमिदं मुद्रापितम्। उपोद्घातेऽमरुशतकस्य पाठविषये विचारो वर्तते। अवश्यं संग्राह्यमिदं पुस्तकं साहित्यरसपिपासुभिः।

वाचकमहाभागानां विचारसौकर्यायात्रत्य एकः श्लोकष्टीकात्रितयसहयोगेन सम्मुद्र्यते।

आ दृष्टिप्रसरात्प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुत्सर्पति।
दत्त्वैकं सशुचा गृहं प्रति पदं पान्थस्त्रियास्मिन् क्षणे
मा भूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितम्॥

देवधरमहोदयेनादृष्टिप्रसरादित्येकपदरूपेण मुद्रापितं दत्त्वेतिपदमप्येकतकारकं विहितमिति विषीदामः। यद्यपि सर्वैष्टीकाकृद्भिर्मा भूदागत इति पठ्यते तथापि विद्याकरविरचित सुभाषितरत्नकोषे समुपलभ्यमानः 'नाभूदागत' इति पाठ एव समीचीनः स्वारसिकश्चेति प्रतिभाति, ईदृशेषु स्थलेषु माशब्दप्रयोगस्य कविसम्प्रदायविरुद्धत्वात्। अत एव वेमभूपालेन कुशकाशावलम्बनन्यायेनोक्तम्—अत्र मेति प्रतिषेधे निपातो न

माङ्। माङ् भवतीति चेन्माङि लुङ्लिङ्यांशीः प्रसज्येत। सा त्वत्र न युक्ता। मा भूदित्यत्र काकुरनुसन्धेयेति।

रुद्रमदेवकुमारकृतव्याख्या। कयाचन पान्थस्त्रिया दृष्टिःसरं यावद् वल्लभस्य मार्गं दृष्ट्वोद्विग्नया सत्या पुनर्निवृत्तेषु मार्गेषु दिवसावसानेऽन्धकारे प्रसरति सति सशोकया पदद्वयं गत्वास्मिन् क्षणे स आगतो मा भूदित्याशयाधिकवक्रीकृतग्रीवं यथा॰स्यादेवं पुनरवलोकितम्॥९०॥

शृङ्गारदीपिका। आ दृष्टिप्रसराद् दृष्टिसञ्चारावधि प्रियस्य वल्लभस्य पदवीं मार्गं समुद्वीक्ष्य विलोक्य निर्विण्णया खिन्नया प्रियस्यानागमनेनेति शेषः। अहःपरिणतौ दिनावसाने ध्वान्ते तमसि समुत्सर्पति प्रसरति सति पथिषु विश्रान्तेषु विरतेषु सत्सु गतागतशून्येष्वित्यर्थः। सशुचा सखेदया पान्थस्त्रिया पान्थस्य प्रोषितस्य स्त्री वनिता तया गृहं प्रति गृहमुद्दिश्य एकं पदं दत्त्वा विन्यस्य अस्मिन् क्षणे तत्काल एवागत आयातो मा भूदिति नासीदिति प्रिय इति शेषः। अत्र मेति प्रतिषेधे निपातो न माङ्। माङ् भवतीति चेत्, माङि लुङ्लिङ्त्याशीः प्रसज्येत। सा त्वत्र न युक्ता। मा भूदित्यत्र काकुरनुसन्धेया। अमन्दवलितग्रीवं शीघ्र[वि]वर्तितकन्धरं यथा भवति तथा पुनर्वीक्षितं पुनर्विलोकितमिति सम्बन्धः। अस्मिन् क्षणे मा भूदागत इत्यनेन पुनर्वीक्षणेनौत्सुक्यातिशयः सूचितः। अत्र नायिका स्वीया मध्या च, किञ्च प्रोषितभर्तृका। यथा भारतीये। देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका इति। नायकोऽनुकूलः। प्रवासविप्रलम्भशृङ्गारः। अत्र चेष्टाकृतं सङ्केच्छारूपं शृङ्गारि नर्म। जातिरलङ्कारः॥९१॥

रसिकसञ्जीवनी। कयाचिदध्वगवध्वा सकलं दिवसं यावद् दृष्टिः प्रसरति तावदन्तरे दयितस्यागमनपद्धतिमुद्ग्रीविकया वीक्ष्य प्राणनिरपेक्षतारम्भकं निर्वेदं प्राप्तया वासरान्ते विरलसञ्चारेषु वर्त्मसु तमसि सम्यग् उत्कटं प्रसरति सति निष्प्रत्याशया सशुचा गृहं प्रति पदमेकं क्षिप्त्वास्मिन्नेवान्तरे कदाचिदागमो मा भूदिति प्रत्याशया औत्सुक्याद् वेगविवर्तितकन्धरं यथा भवतीत्येवं पुनः पृष्ठतो विलोकितमिति तदेकतानेन प्रीतिप्रकर्षः। पथिष्विति बहुवचनेन सर्वमार्गेषु प्रियस्यागमनपदवी निर्वर्णितेत्यर्थः। पान्थस्त्रियेत्येकवचनेन विरहहृद्रोगभेषजात्मकप्रबोधनवाक्यप्रस्तावनादिभिराश्वासदायिनी वयस्यापि तस्या नास्तीति भावः। तदेवं प्रवासात्मको विप्रलम्भोऽप्येष करुणप्राय एवेति मर्मणि स्पृशति। परमग्रे तनश्लोकस्यौचित्येन रसिकाः सञ्जीवन्ति। 'दूरदेशान्तरस्थे तु कार्यतः प्रोषिते प्रिये' इति प्रोषितभर्तृका नायिका॥७६॥

६१तम पृष्ठे टीकायां मुद्रितं सहस्व मृष्यस्वेति। अत्र पाठान्तराणि—मर्षयस्व,

मर्षय, क्षमस्वेति। मृष्यस्वेति प्रामादिकं दैवादिकस्य मृषः परस्मैपदित्वात्। पाठान्तराणि सर्वाण्येव समीचीनानि।

७९तम श्लोके दृश्यते—"रमणपदवी सारङ्गाक्ष्या सशङ्कितमीक्षिता" इति। रुद्रमदेवकुमारस्यापि स एव पाठः (८७)। अर्जुनवर्मदेवस्य पाठः—"रमणपदवी सारङ्गाक्ष्या निरन्तरमीक्षिता" इति। सशङ्कितपदं वङ्गीयानामतीव प्रियम्।

पुराभूदस्माकं प्रथममविभिन्ना तनुरियं
ततो नु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
हतानां प्राणानां कुलिशकठिनानां फलमिदम् ॥१०॥

इति श्लोकस्य व्याख्यायां वेमभूपालेनोक्तम्—अत्र वयमिति बहुवचनं निर्वेदादेव। निर्वेदादिषु बहुवचनं कविभिः प्रयुज्यते। तथा च शाकुन्तले—वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृतीति। इति। अत्र शाकुन्तलगतश्लोकोद्धारो न समीचीनतया प्रतिभाति, तत्र सर्वास्वेवावस्थासु राजवचने बहुवचनस्योपलम्भात्।

अत्रत्यो नवमः श्लोको यथा—

नार्यो मुग्धशठा हरन्ति रमणं तिष्ठन्ति नो वारिता-
स्तत्किं ताम्यसि किं च रोदिषि पुनस्तासां प्रियं मा कृथाः।
कान्तः केलिरुचिर्युवा सहृदयस्तादृक् प्रियः कातरे
किं नो बर्बरकर्कशैः प्रियशतैराक्रम्य विक्रीयते ॥

इति। अत्र विक्रीयत इति पदं विशेषेण क्रीयत इत्यर्थे प्रयुक्तमिति प्रतिभाति। तेन चावाचकतादोषः स्फुट एव। टीकाकृतः प्रकारान्तरेणामुमेवार्थमभिव्यञ्जयन्ति। तथाहि सहृदयशिरोमणिनार्जुनवर्मणोक्तम्—हे कातरे किं न विक्रीयते। लक्षणयाऽनन्याधीनं किं न क्रियते। अनन्याधीनं हि वस्तु विक्रेतुं याति। इति। वेमभूपालेनापि व्याख्यातम्—विक्रीयते विक्रयार्हः क्रियते स्वाधीनः क्रियत इत्यर्थः। रुद्रमदेवकुमारेण तु व्याकृतम्—हे अधीरे तादृशो लोकोत्तरः पतिर्हास्यकठोरैः प्रियवचनशतैराकृष्य किं न परायत्तः क्रियत इति। [९]

सायणविरचित-ऋग्वेदभाष्यस्योपोद्घातेऽपि विशेषेण क्रीयत इत्यर्थे विपूर्वस्य क्रीणातेः प्रयोग उपलभ्यते। तथाहि फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः सारतो वा कर्मविशेषः स्यादिति मीमांसासूत्रं व्याचक्षाणेन सायणेनोक्तम्—यथा लोके निष्केण खारीपरिमितान् व्रीहीन् विक्रीय निष्कान्तरेण पुनः क्रये सति परिमाणाधिक्यं भवति, यथा वा निष्केण वस्त्रमात्रं लभ्यते निष्कद्वयेन तु सारभूतं दुकूलम् इत्यादि।

श्लोकस्यास्य पारमार्थिकार्थग्रहो न सुकर इति त्रीण्येव व्याख्यानान्यत्रोद्धियन्ते।

रसिकसञ्जीवनी। अनेकनायिकाकमनीयनायकव्यलीकविलीयमानविलासां वरवर्णिनीं विदग्धवयस्या वक्ति—नार्य इति।

अङ्गनास्तावद् बहिर्मुग्धा अन्तःशठास्तव रमणमपहरन्ति। निषिद्धा अपि न निवर्तन्ते। तत् किमिति मुधा ताम्यसि कस्माच्च रोदिषि? उभयमपि व्यर्थमित्यर्थः। एवं हि तासामभीप्सितं भवति। अत एव तासां प्रियं मा कृथा इति। तर्हि किं समयोचितमित्याह—कान्त इत्यादि। हे कातरे किं न विक्रीयते। लक्षणया अनन्याधीनः किं न क्रियते। अनन्याधीनं हि वस्तु विक्रेतुं याति। कोऽसौ पतिः? किंविशिष्टः? कान्तः सुन्दरः। क्रीडारसिकः। तरुणः सहृदयस्तादृगनिर्वचनीयचेतनः। किं कृत्वा? आक्रम्य। मुग्धशठाभ्य एव नायिकाभ्य आच्छिद्येत्यर्थः। कैः? प्रियशतैः। किंविशिष्टैः? बर्बरकर्कशैः सोल्लुण्ठनर्मनिरनुक्रोशैः। यदुक्तं गोवर्धनाचार्येण—

अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः।
इतरेन्धनजन्मा यो धूमः सोऽगुरुसमुद्भवो धूपः॥

इति। अत एव केलिरुचिः न चासम्भावितो वश्यतां याति। यतस्तादृक् सहृदयः। दक्षिणोऽस्यां सहृदयः। अपमानितश्च नार्या विरज्यते। स पुनरुत्कृष्ट इति मया स्वयं मानमुत्सृज्य संगमयितुं कथं युज्यते पतिरिति लाघवलज्जाभीरुत्वेन कातर इति सम्बोधनम्। प्रशंसामनोज्ञानुनयप्रवर्तिका चेयमुक्तिः। यः कान्त इत्यादिगुणैः स्पृहणीयो वारिताभिरप्यङ्गनाभिरपह्रियते स त्वयापराधोचितनिग्रहस्थानीयेन बर्बरकार्कश्येन विक्रेयकोटिमानीयते। तस्माद् युवतिषु धन्या त्वमिति प्रतीयमानत्वात्परिवृत्तिरलङ्कारः, बर्बरकर्कशं दत्त्वा पतिरपह्रियतामिति पर्यवसितत्वात्। यदुक्तं—

युगपद्दानादाने अन्योन्यं वस्तुनः क्रियेते यत्।
क्वचिदुपचर्येते वा प्रसिद्धितः सेति परिवृत्तिः॥

इति। यथा—

दत्त्वा दर्शनमेते मत्प्राणा वरतनु त्वया क्रीताः।
किन्त्वपहरसि मनो यद् ददासि रणरणकमेतदसत्॥ इति ॥८॥

शृङ्गारदीपिका। नायकेन भेदं [भेदोपायं-पा०] गमिता(?)सखी नायिकामुपालभते—नार्य इति। नार्यो मुग्धशठाः सद्यः [सत्यः—पा०] रमणं हरन्ति स्वाधीनं कुर्वन्ति। मुग्धाश्च ताः शठा बहिर्मुग्धा इव लक्ष्यमाणा अन्तः शठा इत्यर्थः। वारिताः सत्यो नो तिष्ठन्ति वारयितुं न शक्या इत्यर्थः। तत् तस्माद् हे कातरे भीरु किं ताम्यसि किमर्थं

ग्लानिं भजसि ? किं च पुनः रोदिषि ? तासां त्वद्रमणहारिणीनां प्रियमिष्टं रोदनादिकं मा कृथाः। अस्या रोदनादिकमेव तासां प्रियमित्यर्थः। प्रियस्तादृक् कान्तः केलिरुचिः क्रीडाप्रियः युवा सहृदयः रसिकश्च। नः अस्माकं बर्बरकर्कशैः परुषकठिनैः। वचनैरिति शेषः। किं प्रयोजनम्? स नायकः प्रियशतैराक्रम्य अवरुध्य विक्रीयते विक्रयार्हः क्रियते स्वाधीनः क्रियत इत्यर्थः। इति सम्बन्धः। स्त्रीणां प्रियाकर्षणे नैपुण्यमेव प्रयोजनं न तु रोदनादिक परुषकठिनो व्यापारश्च। तस्मात् सर्वं परित्यज्य सौम्यप्रकृतौ प्रियेऽत्यन्तं प्रियान् व्यापारान् प्रयुज्य तमावर्जयेति सखी बोधितवतीत्यभिप्रायः। दैन्यं नाम सञ्चारी भावः। अत्र नायिका स्वीयाधीरा मुग्धा [ मध्या—पा० ] च। अधीरत्वं कथमिति चेत् बर्बरकर्कशैर्वचनैः किमिति सखी-वचनात्। तथाचोक्तं दशरूपके—खेदयेद् दयितं कोपादधीरा परुषाक्षरैः [ २।१७ ] इति। किंच कलहान्तरिता। यथोक्तं—कोपात् कान्तं पराणुद्य पश्चात्तापसमन्वितेति। नायकः शठः। गूढविप्रियकृच्छठ इति वचनात् [ दश रू० २।१ ]। मानकृतविप्र-लम्भशृङ्गारः। अत्र विप्रलम्भकृतं सोपालम्भवचनं नर्म। यथोक्तं भारतीये—

ईर्ष्याक्रोधप्रायं सोपालम्भवचनं न विरुद्धम्।
सामोपक्षेपकृतं सविप्रलम्भकृतं नर्म ॥ इति

आक्षेपोऽलङ्कारः। प्रतिषेधोक्तिराक्षेपः [ काव्यादर्शे २।१२३ ] इति ॥९॥

रुद्रमदेवकुमारव्याख्या। काचित् सखी मानिनीं प्रतीदमाह—मनोज्ञधूर्ताः स्त्रियस्त्वदीयवल्लभमाकर्षन्ति, निषिद्धा अपि न निवर्तन्ते। तदा किं खिद्यसे ? किं चालीकं रोदिषि ? तासां नारीणामभीष्टं मा कुरु। हे अधीरे तादृशो लोकोत्तरः पतिर्हास्य-कठोरैः प्रियवचनशतैराकृष्य किं न परायत्तः क्रियते। कीदृशः ? मनोज्ञः क्रीडाभिलाषी तरुणो विदग्ध इति ॥८॥ ( क्रमशः )

---

## मुद्रणप्रमादशोधनम्

पृः २३३ प० १०-१२ "प्रवाससङ्गिन्यनिशं ममासीत्। देवयानी। अस्मिन् प्रवासे तव नास्ति किं खि"-इति पठनीयम्।

पृः २३९ प० १३ शोकविह्वलः सञ्जायते इति पठनीयम्।

पृः २४८ प० ९ तेत्यनुपातेन इति पठनीयम्।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥


# मञ्जूषा

| August, 1960. | १८८२-शकीयभाद्रस्य १४श-वर्षस्य द्वादशी संख्या | Vol. XIV No. 12 |
| --- | --- | --- |


ॐ नमो गणेशाय

## मीराचरितम्


[ श्रीमती लीलादेवी ]


### मङ्गलाचरणम्

दिव्यप्रेमलतामनेकविधिभिः संपोष्टुकामा सती
शश्वत्तां प्रणिधानयोगपयसा सिञ्चेत्प्रयत्नेन हि ।
उद्धृत्यैव विकल्पकत्तृणचयं तन्मूलसारक्षयं
संवृद्धिं च नयेत मानसवनीरक्षाकरी वल्लरीम् ॥

दृश्यम्—मालवेदेशे कुर्खीनगरस्य शोभनतमप्रासादस्य पुरतः । सूत्रधारः प्रविशति ।

सूत्रधारः । विज्ञापयाम्यार्यमिश्रान् ।

जातु क्षत्रियनीतिधर्मपरमः पुत्रानिव स्वप्रजाः
शिक्षापोषणरक्षणैरविरतं वात्सल्यतः पालयन् ।
कन्यारत्नविशेषितात्ममहिमा श्रीरत्नसिंहाह्वयो
मीराया जनको व्यराजत पुरे रत्नाकरः सम्पदाम् ॥

सूत्रधारः । तदभ्यर्थये महानुभावान् अवहिता भवन्तु भवन्तः । पण्डितक्षमारावरचित-
"मीराचरितं" नाम सुकाव्यं नाट्यरूपेण प्रयोक्तुमुद्यता वयम् ।

[ द्वे प्रमदे नवजातां बालां दृष्ट्वा विस्मिते, प्रविश्य । ]

प्रथमा। बालेन्दुः किमयम् ?

द्वितीया। विभाति न दिवा तत्कान्तिरेतादृशी।

प्रथमा। किं वा कैरविणी ?

द्वितीया। परं निशि हि सा जागर्ति संहासिनी।

प्रथमा। मूर्तिः किं कनकद्रवोपखचिता।

द्वितीया। तस्याः कुतो विभ्रमाः ? ( इति निष्क्रान्ते। ) ॥

## प्रथमं दृश्यम्

दृश्यम्। प्रासादस्य सुमण्डित आवासः। कोणे श्रीकृष्णस्य मूर्तिः।

बालमीरा बालमित्रसहिता वातायनाद् यात्रामवलोकयति। मङ्गलवाद्यानां मनोहरा-रावः श्रूयते।

( नेपथ्ये ) भाविप्रौढिमचिह्नमुद्रितमुखी पञ्चाब्दकल्पैकदा
बालालोकत बालमित्रसहिता प्रासादवातायनात्।
यात्रां मङ्गलवाद्यमञ्जुलरवां हस्तप्रदीपोज्ज्वलां
रात्रौ राजपथे सुवर्णशिबिकामावार्य मन्दं यतीम्॥

मीरा। ( जननीमुपेत्य ) लोका यान्ति, किमेतदम्ब ? वद माम्।

राज्ञी। यात्रास्ति वैवाहिकी।

मीरा। मातः, कुत्र पतिर्ममास्ति ?

राज्ञी। ननु ते तिष्ठत्यसौ मन्दिरे। ( इति कृष्णस्य मूर्तिं दर्शयति

मीरा। सञ्जातो नु किमम्ब मे परिणयः ?

राज्ञी। जातः स वत्से पुरा।

मी०। यात्रासीन्महती मदर्थमपि किं वाद्यादिभिर्वैभवैः।

रा०। वृत्तं हन्त महोत्सवेन निखिलं सर्वप्रजानन्दनम्।

मी०। किं पत्युः सविधे स्थिताहम् ?

रा०। अथ किं, पार्श्वे हि ते स स्थितः।

मी०। शुश्रूषा कथमम्ब पत्युरिह मे ?

रा०। कार्या सुते ! श्रद्धया।

मी०। किं तातस्य करोषि येन विधिना ?

रा०। तद्वद्विधेया त्वया।

मी०। किं हि स्याद्यदि सेव्यते प्रतिदिनम् ?

रा०। जायेत तुष्टः स ते।

मी० । कान्तं चेन्न जहामि तद् भवति किम् ?

रा० ।　　　　　　　　　न त्वामसौ हास्यति ।

मी० । सत्कारः कथमज्ञया प्रियपतेः कर्तुं मया शक्यते ?

रा० । गानैर्नर्तनकीर्तनैश्च मधुरैः ।

मी० ।　　　　　　　　कण्ठोऽम्ब मे कर्कशः ।

रा० । गान्धर्वं परिशिक्ष्यसे त्वमचिरात् ।

मी० ।　　　　　　　　जानामि नाप्यक्षरम् ।

रा० । तच्चिन्तां विजहीहि पण्डितवराः शिक्षां विधास्यन्ति ते ।

पटीक्षेपः

———

## द्वितीयं दृश्यम्

( नेपथ्ये )　किञ्चित्कालमतीत्य राजरमणी शुद्धान्तयोषिद्वृता
सम्प्राप्ता परिवृत्तशीलचरितामुद्दीप्तवक्त्रप्रभाम् ।
स्थित्वा श्रीयदुनन्दनस्य पुरतो निर्वर्णयन्तीं चिरं
चित्रस्थामिव निश्चलां दुहितरं चित्रीयमाणेक्षते ॥

[ मीरा पात्रहस्ता प्रविश्य, श्रीयदुनन्दस्य मूर्तिं प्रक्षाल्याङ्गरागवेषविधिं रचयति ।* ]

( समकालञ्च नेपथ्ये ) भोगैश्वर्यवृतापि राजदुहिता भूरिश्रमं सेव्यते
मार्तण्डोदयतः पुरैव हि लघु प्रोत्थाय निष्काम्यति ।
गत्वा निर्जनवापिकामथ शिवं शीतोदकं गाहते
स्नाता च स्वयमेव तीर्थकलशं धृत्वा गृहं गच्छति ॥

दीनां पाहि विभो त्वमेव शरणं नान्यः शरण्योऽस्ति मे
प्रार्थ्यैवं विनता प्रजातपुलका संलोक्य मूर्तेर्मुखम् ।
ईषत्स्मेरमिव स्थितं परवशा बाष्पायमाणेक्षणा
ब्रह्मानन्दमहार्णवे क्षणमहो मग्नेव राराजते ॥

जन्मारभ्य सुखोषिता क्व नृपजा शय्या क्व वा भूतलं ?
क्वाङ्गानां सुकुमारता क्व च तपः क्लेशेऽपि तत्तादृशः ।
संस्कारो बलवत्तरः सुकृतिनां जन्मान्तरोपार्जितो
येनैकान्तिकभक्तियोगमहिमा शिक्षां विना लभ्यते ॥

---

* एतत्त्वभिनयेन विधेयम् ।

( मीरामीदृशीं पश्यन्तो लोकास्तत्स्वरूपं विकल्पयन्ति । )

प्रथमः। अद्भुतं खल्वेतत्! पश्य—

वात्सल्येन किमागता निजशिशोः साक्षाद्यशोदा स्वयम् ?

द्वितीयः। सम्प्राप्ता किमु रुक्मिणी यदुपतेः सांनिध्यमुत्कण्ठिता ?

प्रथमा। राधा रासविनोदिनी विलसितुं किं प्राप भूयो भुवम् ?

द्वितीया। गोपी गोपसुतस्य कापि पुरतो लास्याय किन्तु स्थिता ॥

( मीरा नृत्यति, ततश्च मृगचर्मासनोपविष्टा प्रशान्तमानसा दृश्यते। राजा सहसान्तःपुरं प्रविश्य मीरापार्श्वे स्थितं जोषं वीक्षते । )

(नेपथ्ये) कन्यारत्नविचेष्टितं नरपतिः श्रुत्वापि न व्यश्वसीत्

साक्षादस्य निदर्शनाय सहसा शुद्धान्तमेवाव्रजत् ।

तत्रावैक्षत योगिनीमिव सुतां कृष्णाजिनाध्यासिनीं

ध्यायन्तीं किमपि प्रशान्तमनसा श्रीकृष्णमूर्त्यग्रतः ॥

राजा। ( सम्भ्रान्त आत्मगतम् )

आविष्टा किमियं मदीयदुहिता वेतालभूतादिभिः

कैश्चिद् दुर्मतिभिः कुमार्गमथवा स्वार्थाय किं लम्भिता ।

सञ्जातः किमु कोऽपि दुर्विधिवशादस्या मनोविभ्रमो

हा हा यद्यचिरेण न प्रतिकृतिं कुर्यां विनश्येदियम् ॥ (ललाटं ताडयति ।)

( प्रकाशं, राज्ञीं प्रति ) शृणु तावत्। कोऽयं विपाको विधेः ?

कान्ते, किं करणीयमद्य दुहितुः ?

राज्ञी। स्वामिन्नलं चिन्तया ।

राजा। वैकल्यप्रशमाय चिन्तय विधिम् ।

राज्ञी। चित्ते किमप्यस्ति मे ।

राजा। ( सौत्सुक्यम् ) तन्मे ब्रूहि ।

राज्ञी। विवाह एव विकृतेरस्या व्यपोहक्षमः ।

राजा। को मूढां परिणेष्यति क्षितितले ?

राज्ञी। यः कोऽपि तामर्हति ।

राजा। क्व प्राप्यः सदृशो वरः ?

राज्ञी। स सुलभः कन्या हि रूपान्विता ।

राजा। सा चेन्मूर्तिमनुव्रता ।

राज्ञी। नहि नहि प्राणेशमासेवते ।

राजा। ( आप्तजनान् प्रति ) जानीथैव यदद्य नः प्रियसुता देया गृहे वर्तते।
तद्योग्यं वरमञ्जसा मृगयितुं यत्नः समाधीयताम्॥

सर्वे। ( सहर्षं ) यदाज्ञापयति देवः। ( निष्क्रान्ताः। )

पटोक्षेपः

---

## तृतीयं दृश्यम्

( नेपथ्ये )　तत्कालेऽथ चितोरनामनगरे राजन्यचूडामणि-
सङ्गाख्यो नृपतिर्व्यराजत पुरा विष्वग्यशोभासुरः।
दिष्ट्या तस्य नृपस्य सूनुरभवच्छ्रीभोजराजाह्वय-
स्तेजस्वी पितृवत्प्रतापगरिमप्रोद्धूतवैरिव्रजः॥

( नानामङ्गलवाद्यानां घोषः श्रूयते। कोलाहलेन च मीरायाः पूजा विघ्निता। )

( नेपथ्ये )　निर्दिष्टेऽथ वसन्तमङ्गलदिने लोकप्रमोदायने
मीरायाः सहसाभवद्दिनविधिः कोलाहलैर्विघ्नितः।
संभूतैर्वरयात्रया नरपतेः सौवान्तिकप्राप्तया
नानामङ्गलवाद्यघोषयुतया सौवर्णमुद्राकिरा॥

( प्रविश्य मीरां प्रति )

राजा। शृणु बाले! दत्तासि त्वमितः सुते भवति ते श्रीभोजराजः पतिः।

मीरा। आगन्ता किमिह?

राजा।　एष नैष्यति सुते।

मीरा।　स्थेयं किमस्माद्विना?

राजा। गन्तव्यं ननु मन्दिरं शुभदिने पत्युस्त्वयैवाचिरात्।

मीरा। प्राणान् गोपयितुं कथं नु भगवन्मूर्तिं विना शक्नुयाम्

राजा। कामं तत्र नयस्व तामपि।

मीरा।　ततो हृष्टा प्रयास्याम्यहम्।

राजा। वत्से!

मीरा।　तात!

राजा।　परित्यज भ्रममिमम्।

मीरा।　को नु भ्रमस्ते मतः?

राजा। व्यासङ्गस्तव हेयवस्तुनि।

राजा। मूर्तिप्रीतिरनन्तदुःखजननी।

मीरा। हर्षप्रदा सा तु मे।

राजा। हृष्येस्त्वं गृहिणीपदे।

मीरा। कथमदः।

राजा। पत्युः प्रसादेन ते।

मीरा। संपाद्यः परमेष केन विधिना ?

राजा। बालप्रभुः सेव्यताम्।

मी०। तत्सेवा ननु कीदृशी।

रा०। चर हितं येनाप्यते निर्वृतिः।

मी०। श्रद्धा भक्तिरिति द्वयं ननु पितः सत्साधनं निर्वृतेः।

रा०। तस्मिन् प्रेम तनुष्व।

मी०। तात हृदये गाढं तदस्त्येव मे ॥

( नेपथ्ये )। श्वश्रूमन्दिरमेष्यतीं शुभदिने राज्ञी नवोढां सुता-
मालिङ्ग्यालपितुं च शक्तिविकला जोषं स्थिता नाडिकाम् ॥
तां मीराथ नियन्त्रिताश्रुनयनामूचे

मी०। ऽम्ब मा मा शुचो
भूरि प्रेम यदस्ति ते मयि सखीष्वेतत्सदा बध्यताम् ॥

( निष्क्रान्ताः सर्वे। )

पटीक्षेपः

---

## चतुर्थं दृश्यं

( नेपथ्ये ) सानन्दं स्वपुरीं पुनः प्रविशति श्रीसङ्गबन्धुव्रजे
कर्मारत्ननरेन्द्रसूनुसहिते बद्धोत्सवाडम्बरे।
गायन्ति प्रकिरन्ति लाजकुसुमं कुर्वन्ति चारात्रिकं
सूताः सौधगताङ्गनाः प्रतिगृहं सौभाग्यवत्यः स्त्रियः ॥

[ मञ्जीरवाद्यवीणादीनां घोषः। द्वित्राभिः कन्याभिः पुष्पलास्यं नर्तितव्यम्। ]

( नेपथ्ये ) कासारे कमलावलिः कलयति म्लानत्वमाकस्मिकं
हंसास्तस्य तटे निवृत्तगतयस्तिष्ठन्ति दूरे ह्रिया।
मीनाः संकुचितेक्षणाश्च विमुखा मज्जन्ति नीचैर्जले
जायन्ते परुषस्वराः परभृताश्चैत्रेऽपि मीरान्तिके ॥

दृश्यम्। चितोरनगरे श्रीसङ्गस्य प्रासादस्यान्तःपुरम्। विविधवेषभूषालङ्कारोपायनादिहस्ताः पतिव्रताः प्रविशन्ति, ततश्च मीरा तस्याः श्वश्रूश्च। श्वश्रूश्च बान्धवैः समेता वधूं हरिद्राकुङ्कुमाक्षतैर्विकिरति। मीरा तु श्रीकृष्णपूजामेव मनसा विधत्ते।

श्वश्रूः। बालेऽद्य प्रभृति त्वमेव सदने लक्ष्मीश्च गौरी च गी-
र्भीविक्ष्मापतिरेष ते प्रियतमो भूयाः प्रवीरप्रसूः।°

[ गोपैकमग्नान्तरा मीरा तिष्ठति। ]

( विरम्य )। किं वृत्तम्! वद ते मनः क्व नु गतम्?

मी०। श्रीशेऽनिशं वर्तते।

बाल्यादेव गताहमम्ब शरणं श्रीकृष्णमेवं ध्रुवं
तस्यैवाङ्घ्रिसरोजयुग्मनिहितं नित्यं मदीयं शिरः।
नान्यद्दैवतमस्ति मे भुवि परानन्दप्रदं चेतसो
यावज्जीवमहं तमेव परया भक्त्या भजे श्रीहरम्॥°

श्वश्रूः। (चकिता) श्रीदुर्गा विजयप्रदा रणभुवि क्षत्रस्य शक्तिः परा
कृष्णे मा भव मोहिता नरि मुधा देवी परा पूज्यताम्।

मी०। मातः श्वश्रु तदेकवर्जमखिलं वश्या करिष्याम्यहं
क्षन्तव्यास्मि गृहीतपूर्वमनघं भङ्क्तुं व्रतं नोत्सहे॥

( इति चरणयोः पतति। )

श्वश्रूः। ( रुष्टा ) मा मैवम्, अतिनिन्द्यमेतत्। कथं निजकुलदैवतपराङ्मुखी भवसि? ( शुद्धान्तमुख्याङ्गनां प्रति ) वत्सा मीरा शुभकार्यानुष्ठानसम्भ्रमात् परिक्लान्ता स्याद् दूराध्वतश्च, तत् सत्वरं तदीयगृहं नीयताम्। ( इति सर्वा निष्क्रान्ताः। )

पटीक्षेपः

---

## पञ्चमं दृश्यम्

( नेपथ्ये ) अत्यन्तं कटुदारुणप्रलपनैर्निर्भर्त्सितापि स्वका-
च्छ्रद्धाभक्तिपथाच्चचाल नहि सा गौरीव भावस्थिरा।
ऊदा नाम ततो वरस्य भगिनी क्षुद्रान्तरा प्रायसत्
तच्चेतःपरिवर्तने न च पुनः साफल्यमाप श्रमैः॥
धावल्यं सितनीरजं त्यजति किं पङ्केऽपि नित्यस्थितं
सौभाग्यं विजहाति किं हिमगिरिश्छन्नस्तुषारैरपि।

कान्तिं मुञ्चति किन्नु हीरकमणिर्लोष्टैश्च सन्दूषितः
किं चित्रं यदि धर्मतो न चलिता मीरापि तत्तर्जनैः ॥

दृश्यम्। मीराया वासगृहम्। मीरा प्रशान्तमनसा श्रीकृष्णपूजाविधिनिरता दृश्यते। तस्या धात्री च बहिः स्थित्वा पश्यति।

धात्री। धन्यास्ति खलु मम प्राणप्रिया!

चिन्तामुक्तमनाः स्थिता नृपसुता संमोदपीनास्म्यहं
सा भक्तिंभरते भृशं भगवति स्वान्तं प्रसन्नं मम।
निष्कामा तरुणीपदस्पृगपि सा मुक्तास्मि दुःखैरहं
सा तन्त्री फलभागिनी त्वहमिति प्रेक्षे हिं वृद्धाङ्गना ॥ ( निष्कान्ता। )

पटीक्षेपः

---

( नेपथ्ये ) संजाता हि यदा त्रयोदशवया निर्व्याजमुग्धान्तरा
मीरा पुष्पवती बभूव सुदिने रम्ये वसन्तोत्सवे।
शारीरप्रकृतेर्दशामविदुषी साभूद्यथा विह्वला
कन्यान्तःपुरचारिणी समभवद् वृद्धा तथा ह्रषुला ॥

( मीरोत्थाय सम्भ्रान्ता प्रतीयते। इतराश्च ह्रषुलाः। )

( नेपथ्ये ) शुद्धां राजवधूमथैकदिवसे वृद्धाऽवरोधाङ्गना
देव्यादेशवशादुपेत्य विजने व्यज्ञापयत्प्रस्तुतम्।

वराङ्गना। वत्से हन्त! निषेकमङ्गलदिनं मौहूर्तिकैर्निश्चितं
धन्यासि प्रियसङ्गमेन मुदिता गौरीव कीर्तिं भजेः ॥

[ प्रासादस्य पुरतः पुष्पाणि प्रकिरन्ति बालाः, शुद्धान्ते च मीरां भूषयमाणा तस्या वृद्धा धात्री दृश्यते। मीरा तु निरुत्तरा तिष्ठति। ]

( नेपथ्ये ) नानादिव्यसुगन्धिवस्तुभरितं चित्रैर्वितानैर्वृतं
जातीचम्पकमल्लिकादिसुमनःसम्भारसम्भूषितम्।
शुभ्रप्रच्छदहंसतूलशयनं रत्नप्रभाभास्वरं
शय्यागारमभात् प्रसूनधनुषः क्रीडानिकुञ्जोपमम् ॥

( विविधगन्धवस्तुपुष्पादिकमानीय शय्यागारं सज्जयन्ति किङ्कराः। )

( नेपथ्ये ) तद्रात्रौ परिपूर्णचन्द्रविसरद्दुग्धप्रवाहोपम-
ज्योत्स्नापूरपरिप्लुता समजनि क्रीडावनी भूपतेः।
येन प्रापुरुपेतबन्धुविबुधा विस्मृत्य तात्कालिकं

क्षीरोदार्णवकेलिमुग्धमनसः संमोदमन्यादृशम् ॥
उद्याने प्रचलन्ति विस्मयकरा भव्यप्रयोगोत्सवा
अग्निक्रीडनमाचरन्ति तनुते भूरीन्द्रजालादिकम् ।
नृत्यन्ति प्रकिरन्ति सौरभलसत् पुष्पोदकं सर्वतो
दक्षाः साहसिका महेन्द्रकुशला वाराङ्गनाः किङ्कराः ॥

( खधूपादिक्रीडनं, नर्तनं, पुष्पोदकसेचनं, पुष्पविकिरणं यथेष्टं विधेयं प्रयोक्तृभिः । )

( नेपथ्ये ) मृष्टान्नं परिभुज्य बन्धुनिकरो यावत्प्रमोमुद्यते
तावत्पञ्चशराग्निना नृपसुतस्तीव्रेण दन्दह्यते ।
मीरा नन्दसुतं तदेकहृदयाऽऽनन्देन दाध्यायते
वैषम्यं रसयोरिदं सहचरी सञ्चिन्त्य रोदूयते ॥

[ नृपसुतः सोत्कण्ठं प्रविश्य, शून्यं प्रकोष्ठं दृष्ट्वा विषादं नाटयति, ततश्च देवालयं प्रविशति । तत्र प्रभोः पादाब्जमूले स्वपतीं मीरां वीक्ष्य निःशब्दं विनम्य तस्याः प्रोत्फुल्लं वदनकमलं स्पृशति । प्रबुद्धा च सा झटिति समुत्थाय कुमारस्य पादयोः पतति । ]

मी० । बाल्यादेव मया वृतो यदुपतिः प्राणेश्वरः शाश्वतो
नान्यः कोऽपि पतिर्ममास्ति भुवने तत्क्षम्यतामार्य भोः ॥

---

## षष्ठं दृश्यम्

( कुमारो दुःखितः खेदं नाटयति, ततश्च बहिर्गच्छति । निजस्वसा तं पश्यति । )

ऊदामा । भो भ्रातः, श्रूयताम्—
भार्या ते निशि कामुकैः सह रहो निःशङ्कमाचेष्टते ।

कुमारः । ( सरोषम् ) धिक् तां धर्मपतिद्रुघामधमजां धिग् रत्नसिंहं च तम् ।
धिक् पुंस्त्वं मम धिक् पितुः प्रभुपदं, धिक् सार्वभौमश्रियं
धूर्ताश्लिष्टविदुष्टदुर्वपुरदः खड्गोऽयमाश्लिष्यतु ॥

ऊदामा । नूनं सत्कुलमस्मदीयमचिरान्नश्येदतो जागृहि ।

कुमारः । एहि ! ( भगिनीयुतः खड्गहस्तो गर्जन् मीराया वासगृहं प्रविश्य तस्या धात्रीं पातयति । ततः पूजागृहाद् बहिः स्थितौ तावाकर्णयतः—मीरा सुमधुरं संलपति "त्वमेव शरणं ! त्वमेव पुण्यं परमं पवित्रम्" इत्यादि । )

( नेपथ्ये ) यावद्धावति हन्तुमात्मरमणीमानन्दमग्नान्तरा-
मालापानिव कुर्वतीं भगवता सूक्तैः सुवास्यन्दिभिः ।

तावद् भ्रश्यति विश्लथः करतलात् खड्गः स्वयं भूतले
भूमीशस्य सुतोऽपि शून्यनयनः स्तब्धः स्थितो वीक्षते ॥

( कुमारस्य हस्तात् खड्गः पतति । मीरां नृत्यन्तीं पश्यन्तौ सोदरौ चकितौ । )

कुमारः । ( तर्जयन् ) कस्त्वामालपति स्म ?

मी० । मत्प्रियतमः ।

कु० । कुत्रास्त्यसौ ?

मी० । मत्पुरः ।

कु० । निर्जीवः स किलास्ति ।

मी० । ( शिरो विधूनती ) जीवतितराम् ।

कु० । किं मौनमालम्बते ?

मी० । वक्ष्यत्येव कुमार माम् ।

कु० । तदधुना संभाषयैनं पुनः !

मी० । ( देवं प्रणम्य ) दिव्यां वाचमुदीरय प्रिय पुनः किं भाषितुं नेहसे ?
आर्यालोकय मन्दहासमहहा दृष्टप्रनष्टः क्षणा-
न्नान्यस्यास्मि तवैव मा त्यज विभो तिष्ठ क्षणं हा गतः ।

( मीरा खेदं नाटयति, ततश्च मूर्छिता पतति । ऊदामा तामुद्धर्तुं व्यवस्यति, परं केनाप्यदृश्यहस्तेन निवार्यते । )

ऊदामा । साक्षात्पावनता नराकृतिरियं स्पृश्या न सा पापया
भ्रातुः श्रोत्रयुगं मयैव भरितं दुर्वाक्यहालाहलैः ।

( नेपथ्ये ) इत्थं सानुशयां विलोक्य भगिनीं नष्टः कुमारस्ततः ।

पटीक्षेपः

---

## सप्तमं दृश्यम्

( नेपथ्ये ) कः शङ्केत सुशुभ्रतां हिमगिरेः श्यामायितस्याम्बुदै-
स्तेजःपुञ्जकरालतां दिनपतेर्ग्रस्तस्य वा राहुणा ।
किं चित्रं यदि राजसूनुरनघां बुद्धा वधूं दूषितां
देवागारमकारयत्सुरुचिरं तस्यै बहिः स्वालयात् ॥

मीरां देवालये पूजां विदधती दृश्यते । बहवो देवभक्तास्तां

( नेपथ्ये ) अत्रासौ नचिरात् स्नुषा नरपतेर्देवालये वासिता
पत्युर्यन्त्रणमन्तरा भगवतश्चक्रे सपर्यादिकम् ।

तामेनां परिवव्रु रर्चनविधौ दूरागताः साधवः
सूचीं लोहमणिर्यथा सुजनतां सौजन्यमाकर्षति ॥

मी० । (गायन्ती) माता मे जनकश्च बान्धवजनाः सर्वेऽपि दूरीकृता
नान्यः कोऽपि भुवि प्रियो गिरिधर त्वामन्तरेणास्ति मे
संसारं व्यवधूय वीतममता त्वामेव चिन्वत्यहं
दिष्ट्या दर्शनमद्भुतं तव विभो प्राप्तास्मि बाष्पाकुला ॥
नित्यं प्रेमलतामपोषयमहं ध्यानाम्बुधाराशतं-
र्नित्यं मत्परिरक्षकोऽसि भगवंस्त्वन्नाम मे हृद्गतम् ।
सा चाहं तव किङ्करा तनुमनःप्राणान् समर्प्य स्थिता
कौलीनैरथ किं मृषा प्रलपितैर्नाम स्मरन्त्यास्तव ॥

[ इत्युत्थाय लास्यं वितनुते, सर्वे च निस्तब्धाः पश्यन्ति । लास्यान्ते च ध्यानमग्ना पुनरप्युपविशति । ]

[ यवनराजः श्रीमानकबरस्तस्या दिव्यतेजसातिविस्मितः सन् मुक्ताहारहस्तो बद्धाञ्जलि-र्विनम्रस्तामुपैति । ]

अकबरः । तुच्छां सेवामिमां स्वीकृत्यानुगृह्यतां जनोऽयम् । (तस्याः पादयोः प्रणमति ।)

मी० । ( हारं वीक्ष्य ) पूज्याः, किमेतेन मे ?

अकबरः । देवि ! जाने यदनेन न किंचित्प्रयोजनमिति । परमयं सरो भक्त्या देवायार्प्यते ।

( मीरा हारमादाय श्रीकृष्णस्य कण्ठे निबध्य, पुनरपि कीर्तनपरा दृश्यते । इतरे च शनैः शनैं निष्कान्ताः । )

पटीक्षेपः

---

## अष्टमं दृश्यम्

( नेपथ्ये ) वृत्तान्तं यवनागमस्य नृपजः श्रुत्वा भृशं चुक्षुभे ।

( कुमारः क्रोधान्वितो देवालयं प्रविशति । )

कुमारः । ( गर्जन् ) स्पृष्टं धृष्टतमेन धिक् पदयुगं दत्तश्च हारः स्त्रियः, ध्वस्तं च न कुलगौरवम् ।

सर्वक्षत्रविडम्बनेयमहहा क्षत्राङ्गनाप्यसौ
देवोपायनकैतवान्नरपशुः स्पृष्ट्वा पदे धर्षयेत् ।
जीवन्तोऽपि वयं मृता हि यदयं भूयः स्वदेशं गतो
धिक् क्षत्रान् यदरिः सुरार्चनगृहे दृष्टोऽपि यैर्न क्षताः ॥

( मीरां प्रति ) वंशध्वंसकरी बत त्वमसि नः।

मी०। स्वामिन् मया किं कृ

कु०। भ्रष्टासि त्वमिह।

मी०। प्रभो कथमिदम् ?

कु०। म्लेच्छेन सम्भाषणात्।

मी०। धर्मात्मा ह्ययम्।

कु०। आः प्रशंससि शठम्।

मी०। किं देवभक्तः शठः ?

कु०। तेनास्मत्कुलमद्य दूषितमहो।

मी०। किंहेतुकं दूषणम् ?

कु०। स्पृष्टं तेन तवाङ्गकम्।

मी०। भगवतः सर्वे समाः प्राणिनः।

कु०। हारोऽयं तव पातकं स्फुटयति।

मी०। स्वामिन् कुतोऽयं भ्रमः ?

कु०। धूर्ते, ध्वंसमुपेहि सिन्धुपतनान्मा तिष्ठ दृग्गोचरे।

( निष्क्रान्तः। )

( नेपथ्ये ) आज्ञामक्षरशोऽनुवर्तितुमसौ नद्यास्तटं प्रस्थिता
गायन्ती परमात्मनः स्वरचितां गीतिं सुधावर्षिणीम्।

मी०। ( गायन्ती शनैः शनैः नद्यास्तटं गच्छति।
मुक्ताहं भवबन्धनाद् विलयनं गन्तास्मि सर्वात्मनी-
त्याश्वस्योच्चतरं विरौति नय मां गोविन्द गोविन्द भोः॥ )

पटीक्षेपः

---

## नवमं दृश्यम्

( नेपथ्ये ) प्राप्तागाधसरित्तटां कृतमतिं निस्पन्दभावस्थितां
साक्षात्पर्वतनन्दिनीमिव शिवध्यानैकमग्नान्तराम्।
किन्नु स्यादिति भूतसंहतिरपि स्तब्धा समालोकते
तामाक्रष्टुमिव क्षिपत्यभिमुखं कल्लोलहस्तान्नदी॥

( सन्ध्यार्चनस्य शङ्खघण्टादिनादो देवालयाच्छ्रूयते। )

मी०। अहो मधुरः खलु सन्ध्यार्चनस्य डिण्डिमवाद्यादिनादः। ( हर्षेण नृत्यति। )

( ततश्च नद्यामुत्पतितुमुद्यता परं सहसाऽदृश्येन केनापि निवारिता भूमावेव स्थापिताऽस्ति । सपदि दिव्यवाक् श्रूयते । )

दिव्यवाक् । बाले ! मानुषवल्लभेन सह ते यात्रेह निर्वर्तिता
त्वं मे संस्मर पूर्वजन्मरमणी तद्राज्यमन्विष्यताम् ।
यद्वृन्दावनमञ्जुकुञ्जलसितं प्राप्योऽस्मि तत्र व्रजेः ॥

[ मीरा गिरमाकर्ण्य कन्थां गृहीत्वा देवस्य प्रतिमां च वृन्दावनं प्रति गच्छति । ]

( दुःसहमार्गक्लेशं विस्मृत्य सानन्दं गायन्ती )

मी० । श्रीकृष्ण गोविन्द हरे मुरारे हे नाथ नारायण वासुदेव ।
त्वमेव पुण्यं परमं पवित्रं त्वमेव चैकं शरणं विभो मे ॥

( नेपथ्ये ) सोढासह्यपरिश्रमां धृतजरत्कन्थां प्रसन्नाकृतिं
काषायाम्बरधारिणीमभिगतां ग्रामेषु संवीक्ष्य ताम् ।
तत्पादावनमन् पयः फलमदुस्तस्यै तदङ्कं ययुः
शालीनप्रमदाः सुवृत्तपुरुषा हर्षेण बालार्भकाः ॥

( नेपथ्ये ) बिभ्राणा शरदिन्दुकान्तिरुचिरां पुण्याकृतिं योगिनी
चेतः सर्वजनातिशायिसुगुणस्तोमोज्ज्वलं पुष्णती ।
स्वप्रासादिकदर्शनेन जनतां विस्रम्भमापादयद्
वाचोयुक्तिविचेष्टितैर्मुनिसमं पूजामवापच्च सा ॥

राधाहं रमणी पुरा यदुपतेरित्यात्मना निश्चिता
बभ्राम प्रतिदेशमुत्सुकमतिर्वृन्दावनालोकिनी ।
स्थानं स्थानमभूत्तया परिचितं रूपान्तरेऽपि स्थितं
तच्चेतोऽम्बुनिधौ तरङ्गनिवहाः प्रादुर्बभूवुः स्मृतेः ॥

मी० । आसीदत्र मनोरमः किल मम प्रेमाश्रयो मण्डपः
स्फूर्जद्दिव्यसुगन्धहारिकुसुमः प्रच्छायशीतान्तरः ।
यत्रादौ रमणीयकैतववुषा नीता मम प्रेयसा
जाता पाणिसरोजलालितवपुः सर्वाङ्गकम्पाकुला ॥
निर्यातां पितुरालयात्प्रथमतः कामानभिज्ञामसौ
दृष्ट्वा नम्रमुखीं शनैर्जपति मे मन्नाम कर्णे प्रियः ।
ईषत्स्मेरमथाननं मृदु सरोजातेन कण्डूयते
नेत्रान्ते किमपीव वीक्ष्य सहसा गण्डस्थलीं चुम्बति ॥
सार्धं तेन गतैकदा ह्रदवरं लीलाप्रियेणोत्सुका

दृष्ट्वा तत्र निपातुमुत्सुकतरा गोपीः प्रियं लोचनैः।
तन्मन्दस्मितनिर्जितान्ययुवतीश्चालोकितुं निःसहा
सद्यः सर्वविरागिणी निरगमं तत्प्रीतिनाथा हृदात् ॥
ईर्ष्याविगभरावसन्नहृदया बाणैर्मृगीव क्षता
शय्यागारभुवस्तलेऽहमशये व्याकीर्णभूषाम्बरा।
तावच्चेत्य शनैर्ममाङ्गमस्पृशज्जीवेश्वरस्तत्क्षणात्
स्पर्शानन्दसुधानिषिक्तमिव मे प्रक्लिन्नमासीद्वपुः ॥

( किञ्चिद्गत्वा विहस्य ) अहो ! पुरात्रैवासीद् रम्या स्थली।

रेमेऽत्रास्मदुपाश्रितो मृगगणः पुष्टिं गतः शाद्वले।
आवामत्र हि चन्द्रिकाधवलिते कुञ्जोपसीम्नि स्थितौ
हन्तारुन्तुदमुच्चकैरशृणुवाक्रन्दस्य दीनध्वनिम् ॥

( सखेदम् ) तत्रोपेत्य सवल्लभा सपदि मत्पुत्रीकृतं शावकं
निष्पिष्टं तरुशाखया पतितयाद्राक्षं मुमूर्षाकुलम्।
मात्रा नेत्रजलप्लुता यमकरादाकृष्य वा रक्षितुं
गाढाश्लिष्टकलेवरं मृदुवपुर्लावण्यचेतोहरम् ॥ ( अश्रूणि मार्जयति। )
दृष्ट्वा मां करुणस्वरेण हरिणी चिच्छेद मर्माणि मे
सार्धं शावकजीविते विहितया प्रत्याशया मे क्षणात्।
मामालोक्य परीतबाष्पनयनामाचष्ट नाथः प्रिये
मा शोकं वह दैवतन्त्रमखिलं जातस्य मृत्युर्ध्रुवः ॥

( एते सप्त श्लोका नृत्याभिनयेन निरूपणीयाः। )

पटीक्षेपः

---

## दशमं दृश्यम्

मीरा कीर्तनपरा दृश्यते। मञ्जीरवाद्यवीणादीनां मधुरो नादः श्रूयते। शतशो लोकाः समायाता मीरां द्रष्टुम्। अथ जनसमूहमध्याद् भिक्षुः कश्चिद् विनीतो बद्धाञ्जलिर्मीरामुपैति।

भिक्षुः। भद्रे, देहि सुखाकरं किमपि मे

मी०। हा किन्तु दद्यामहम् !

भि०। यद्यन्मे चिरमीप्सितम्।

मी० । सुभग, तत्पृच्छ । ( भिक्षुः कृत्रिमवेषं त्यक्त्वा स्वरूपं प्रकटीकृत्य बद्धाञ्जलि तिष्ठति । मीरा च कुमारं विज्ञाय तत्पादयोः पतति । )

कु० । भद्रे गच्छ मया सह ।

मी० । यदभिप्रेतं तव । ( शङ्खघण्टामञ्जीरादीनां मधुरध्वनिः श्रूयते । )

पटीक्षेपः

---

## एकादशं दृश्यम्

( घण्टामञ्जीरवाद्यादीनां नादः । )

( नेपथ्ये ) या तस्या विगमाद् विदूनहृदया विच्छायसन्दर्शना
विध्वस्ताखिलभाग्यलक्षणगुणा दीनावतस्थे चिरात् ।
सेदानीं पुनरागमात् प्रमुदिता विष्वग्विसर्पिप्रभा
सौभाग्याङ्कभृता चितोरनगरी रेजे महाडम्बरा ॥
निःशब्दः सुरमन्दिरे क्वचिदभूद्यो जैत्रघण्टागणो
या वीणामुरजावलिः समभवन्मौनव्रतालम्बिनी ।
ये वा नूपुरनिक्वणाः समभजन्मूकत्वमाकस्मिकं
ते सर्वे मुखरा बभूवुरधुना मातुः पुरो वार्भकाः ॥

( काश्चिद् बाला नृत्यन्ति । )

पटीक्षेपः

---

## द्वादशं दृश्यम्

( नेपथ्ये ) स्वातन्त्र्यं परमं प्रशस्तमनसा पत्या स्वयं प्रापिता
सा निर्बाधतया चचार नियमैस्तावत्सुतीव्रं तपः ।
यावज्जीवितसूत्रमैहिकपतेस्त्रोटि दैवेच्छया
सौभाग्यं समरक्षि दिव्यदयितव्यासङ्गतोऽस्याः पुनः ॥

[ मीरा विषादं नाटयति । इतरे बान्धवाश्चाभिनयेन द्वेषं दर्श

( नेपथ्ये ) संप्राप्य क्षितिपालतां पुनरसौ मीरां जिघांसुर्व्यधा-
न्नानापैशुनपापकूटरचनाः पूर्वं कदाप्यश्रुताः ।
यत्तेन प्रतिकूलबुद्धिरचितं तस्या हितायैव तज्-

मीरा। यन्मेऽदीयत देवरेण गरलं प्रच्छाद्य सद्भाजने ( पानम् अभिनयति )
पीतं स्नातविपूतया तदहहा पीयूषमेवाजनि।
या तेनैव करालसर्पभरिता प्राहायि मञ्जूषिका
ध्यानान्ते विवृता तु दर्शयति सा सौवर्णमूर्तिं विभोः॥
अन्तःशङ्कुमयी बहिः सुरुचिरा शय्यामुना प्रेषिता
रात्रौ यावदहं शयेऽत्र मृदुला सा पुष्पतल्पायिता।
श्रीकृष्णैकमनाः सुरक्षिततनुस्तन्नाम गायन्त्यहं
पश्यामि प्रभुमेव संततमहो तद्दिव्यभूतीस्तथा॥

( नेपथ्ये ) इत्थं विप्रकृताप्यशेषसहना सा यावदस्थान्मुदा
तावद्देवरराक्षसो व्यरचयत्पूजाविधेर्विप्लवम्।
कर्तव्यप्रतिपत्तिमूढहृदया प्राज्ञोपदेशेप्सिनी
पत्रं साथ विलिख्य पूज्यतुलसीदासाय तत्प्राहिणोत्॥

( पत्रं लिखति। )

मी०। यो जन्मप्रभृति प्रियः सहचरः श्रीकृष्ण एकः कृत-
स्तस्य प्रेमसुपाद्यपाशितहृदा गायाम्यजस्रं गुणान्।
बन्धुश्येनविलूनपक्षविहगी सैषाद्य नष्टोद्गतिः
कृत्यं मां मुनिवर्य बोधय सतां वाचि श्रियो हि स्थिताः॥

पटीक्षेपः

---

## त्रयोदशं दृश्यम्

मी०। ( श्रीतुलसीदासस्य पत्रं वाचयति। )

ज्ञात्वा तद्गतिमादिदेश मतिमान् हेयास्त्वया नास्तिकाः
प्रह्लादः पितरं बलिः कुलगुरुं गोप्यः पतीनात्मनः।
कैकेयीं भरतो दशाननमपि ज्येष्ठाग्रजं सोदरो
व्याचिक्षेप निराचकार मुमुचुस्तत्याज दूराज्जहौ॥
एषामाचरितं निदर्शनतया गृह्णीष्व लोकोत्तरं
बान्धव्यं परमस्तु ते भगवता किं बन्धुपाशैः परैः।
किं तेनाञ्जनलेपनेन यदि तत्पर्यन्धयेल्लोचनं
किं भूयः कथितेन वा कुरु मतिं या देशकालोचिता॥

[ मीरा वृन्दावनगमनमतिर्निष्क्रान्ता। ]

( नेपथ्ये ) क्वेन्द्रश्रीः क्व पथि श्रमः क्व च सुखं हर्म्ये क्व वार्तिर्वने
मृष्टान्नं क्व सुवर्णपात्रकलितं भैक्षं क्व कन्थार्पितम् ।
क्व प्रासादगहंसतूलशयनं शय्याश्मसु क्वाध्वनो
नूनं निश्चितचेतसां तृणसमः कष्टाचलानां गणः ॥

[ मीरा वृन्दावनं प्राप्य मन्दिरे तिष्ठति सर्वदिग्भ्यः कर्षन्ती गुणसौरभेण जनवृन्दानि । ]

श्रीवृन्दावनमापतत्पुनरसौ दीर्घप्रवासोत्तरं
दुर्भिक्षोत्तरमागतेव सुचिरात्प्रावृड्विभूतिः शुभा ।
आमोदं भुवि तन्वती प्रविततं सन्तापमुच्छिन्दती
पुण्यज्योतिरुदीर्य लोकतमसो विच्छेदमातन्वती ॥
पावित्र्याम्बुसुवर्षणेन शुचितामापादयन्ती दिशः
कर्षन्ती गुणसौरभेण जनतारोलम्बवृन्दानि सा ।
श्रीमान् वा कृपणः सुधीरुत जडो योषाथवा पूरुषो
दुर्लङ्घ्यान्यपि निस्तरन्ति तपसेत्यादर्शयत्कर्मभिः ॥

मीरा । ( गायन्ती ) त्वमेकः शरण्यस्त्वमेको वरेण्य-
स्त्वमेको जगत्पालकः स्वप्रकाशः ।
श्रीकृष्ण गोविन्द हरे मुरारे हे नाथ नारायण वासुदेव ।

( नेपथ्ये ) ध्यायन्ती मनसा जपैः प्रणुतिभिः कृष्णप्रसादेप्सिनी
लेभे सा क्षणमेकदैव सहसा देवस्य संदर्शनम् । ( मीराभिनयेन निरूपयति )
दिव्यं तच्च पुनर्विलुप्तमभवत्साप्यश्रुधाराजलैः
शुष्कापाण्डु ममार्ज वक्त्रनलिनं चेतोऽवसादं गता ॥
गायन्ती महिमानमद्भुततरं प्रेम्णः कृपाब्धेर्विभो-
श्चक्रे संसृतिचित्रभूमिफलके चित्रप्रबन्धार्पणम् ।
चित्राणि व्यलिखत् स्वजीवनपटेष्वादर्शभूतानि सा
गाथामाल्यचयं जुगुम्फ सुरभि रोमाञ्चितोदञ्चकम् ॥

( भक्तानां मध्ये कोऽपि मीरामुपेत्य पृच्छति ।

भक्तः । कस्य प्रेम समर्ज्यताम् ?

मी० । भगवतो, न स्त्रीनृपादेः पुनः ।

भ० । सम्पाद्यं मनुजेन तत्कथमहो ?

मी० । भक्त्या न चाटूक्तिभिः ।

भ० । सा लभ्या कथम् ?

मी० । ईश्वरैकमननाद्यार्थादिसंचिन्तनात् ।

दृष्टश्चेन्महिमा विभोरणुरिदं विश्वं विभात्यात्मन-
स्तन्नेत्रस्य सुचारुता यदि मदो हा पुण्डरीक क्व ते ।
तत्तेजो यदि का सहस्रकर ते तेजस्वितायाः कथा
नित्यानन्दमयाननं यदि विधो किं शब्दसाम्येन ते ।।

( ध्यानपरोपविशति । )

( नेपथ्ये ) दीपाराधनमङ्गलोत्सवदिने वृन्दावनेऽलङ्कृते
दिव्यामोदसुपुष्पमाल्यनिचयैर्भक्तप्रवेकैर्युते ।
जन्मारभ्य निरीक्षितः सुसमयः पुण्यक्रियोपार्जितः
काले तामुपसेदिवान् प्रवयसं देवार्चनान्ते स्वयम् ।।

( भक्ताः कुसुममालाभि र्वृन्दावनमन्दिरं दीपावलीमहोत्सवावसरे सज्जयन्ति । मीरा च लास्यं समाप्य देवार्चनं करोति, ततश्च निस्तब्धोपविशति, प्राणांश्च त्यजति । )

( नेपथ्ये ) तस्मिन् पुण्यपदे तथा हि हसितस्वाराज्यसम्पन्मदे
गन्धर्वैरुपवीणिता करतलन्यस्ताम्बुजोद्भासिनी ।
शुभ्राङ्गी विबुधेन्द्रसंस्तुतगुणा शीर्षप्रभामण्डला
नृत्यन्ती बत मुक्तभूतलमसौ विष्णोः पदेऽन्तर्दधे ।।

[ मीराप्सरोभिः परिवृता नृत्यन्ती दिवं गच्छति । मधुरशङ्खवाद्यादिनिनादः श्रूयते । ]

इति समाप्तं मीराचरितम् ।

ॐ तत् सत् ।

---

## प्रश्नः

वीरभूमितः सुहृद्वर्यः साहित्याचार्यो विलिखति—श्रीहर्षविरचिते नैषधचरिते उच्चैरुल्ललुध्वनिरुच्चचारेति पठितम् । इदानीं वार्धकवशात् समग्रः श्लोको न स्मर्यते । प्रसादप्रकाशनतः प्रकाशिते Prin. Vaman Shivaram Apte's Sanskrit-English Dictionary ग्रन्थे दृष्टम्—उच्चैरुलुलुध्वनिमुच्चचार N. इति । न जानीमः किमिति ध्वनिमिति मुद्रितं किमिति च सत्यपि पुष्कले स्थाने सर्गश्लोकसंख्ये न सन्निविष्टे इति । कृपया समग्रः श्लोक उल्लिख्यताम् । इति ।

## उत्तरम्

नैषधचरितस्य चतुर्दशसर्गे ऊनपञ्चाशः श्लोकः—

> कापि प्रमोदास्फुटनिर्जिहानवर्णैव या मङ्गलगीतिरासाम् ।
> सैवाननेभ्यः पुरसुन्दरीणामुच्चैरुलूलुध्वनिरुच्चचार ॥

इति । ध्वनिमुच्चचारेति मुद्रणं परिदर्शकस्य व्याकरणानभिज्ञत्वमपि सूचयति, उदश्चरः सकर्मकादिति सूत्रेणात्मनेपदप्रसङ्गात् ।

## प्रश्नः

यादवपुरविश्वविद्यालयत आयुष्मान् सीतानाथ गोस्वामी पृच्छति—

सिद्धान्तकौमुद्यामव्ययीभावप्रकरणे विभाषासूत्रस्य विवरणे दृश्यते—एतत्सामर्थ्यादेव प्राचीनानां नित्यत्वमिति । एवं चेद् दिने दिने इति प्रयोगः कथं संगच्छते ? इति ।

## उत्तरम्

अस्वपदविग्रहः समासोऽपि नित्यसमास एव । अतो दिनेदिने इति प्रयोगसद्भावेऽपि प्रतिदिनमित्यस्य नित्यसमासत्वं न व्याहन्यते ।

## आ ब्रह्मन्

ब्रह्मन्निति शब्द उत्सर्गतः पुंलिङ्गः स्तोतृवाचको ब्राह्मणवाचकश्चान्तोदात्तः, परब्रह्मवाचकः स्तोत्रवाचकश्च नपुंसकलिङ्ग आद्युदात्तः । परं नपुंसकलिङ्गोऽपि शब्दोऽन्तरान्तरा ब्राह्मणार्थे प्रयुज्यते । यथा—ब्रह्म वै बृहस्पतिः [ ऐ० ब्रा० ४।२ ], यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः [ कठोपनिषत् १।२।२५ ] इत्यादिषु । अतः सायणव्याख्यायां न काप्यनुपपत्तिः ।

कवीन्द्र-रवीन्द्रनाथस्य

# कचं प्रति देवयानी-शापः

*[ विदाय-अभिशाप ]*

[ श्रीफटिकलाल-दासकृततात्पर्यानुवादः ]

कचः

शुचिस्मिते ! हा किमहं स्थितोऽत्र
पुरेऽसुराणां शरदां सहस्र-
मस्यैव हेतोः कृतवांस्तपस्याम् ?

देवयानी

कथं न बन्धो ? पुरुषः किमत्र
विद्यार्थमेव क्षमते हि दुःखम् ?
कृते रमण्या वद जातु लोके
महत्तपः किं न चकार कश्चित् ?
किमर्ककन्यां तपतीं विवोढुं
प्रचण्डसूर्याहितनेत्रयुग्मः
स कौरवः संवरणो नृपाल-
स्तपो न तेपे कठिनं ह्यनश्नन् ?
हा कष्टमेतद् यदि मन्यसे त्वं
विद्यैकमात्रं धरणौ दुरापा ।
किं प्रेम लोके सुलभं रमण्याः ?
किमाप्तुकामः शरदां सहस्रं
तपोऽत्र तप्तं न हि वेत्सि किं तत् ?
विद्यैकतश्चापरतः स्थिताहं—
कदापि तां मामथवा कदाचित्
समुत्सुकः प्रार्थयथास्त्वमाप्तुम् ।
द्विधाविभक्तं हृदयं त्वदीयं
द्वयोः सपर्यां विदधे सयत्नम् ।

उभे त्वयातो वरणार्थमद्य
समेतमेते वनमेतदावां—
यथेच्छमेकां विदितो गृहाण।
प्रभाषसे चेद्दृढसाहसेन
"किं विद्यया मे यशसापि कोऽर्थ-
स्त्वं मूर्तसिद्धिर्मम, देवयानि !
त्वामेव तस्माद् वरयामि, देवि,"
नास्ते क्षतिस्तत्र न कापि लज्जा
सहस्रवर्षैः कृतसाधनस्य
धनं हि बन्धो हृदयं रमण्याः ॥

कचः

कृता प्रतिज्ञाऽमरसन्निधाने
लब्ध्वैव सञ्जीवननामविद्यां
प्रत्यागमिष्यामि निजं द्युलोकं-
तदर्थमत्रागमनं ममाभूत्।
सदा स्थितं मे हृदि जागरूकं
तदेव सत्यं विहितं पुरा यत्।
लब्धाद्य विद्या, सफला प्रतिज्ञा,
बहोश्च कालात् परमस्मि धन्यो—
न कामयेऽहं निजसौख्यमन्यत्।

देवयानी

धिगस्तु मिथ्यावचनं तवेदम्।
विद्या किमेका तव काङ्क्षितासीत् ?
किं छात्ररूपेण समागतोऽत्र
गुरौ निवासी त्वमनन्यचित्त
आसीर्नियुक्तो विजने स्वपाठे

किं निःस्पृहोऽभूः सकलान्यवृत्ते ?
त्यक्त्वा कथं तन्निजपाठकक्षं
पुष्पाणि चेतुं गतवान् वनान्तः ?
माल्यं कथं वा विरचय्य रम्यं
प्रफुल्लनेत्रः स्मितदीप्तवक्त्रः
प्रादा हि कण्ठे स्वयमादरेण
निरस्तविद्याधमयोषितो मे ?
व्रतं कठोरं किमिदं तवासीत् ?
विद्यार्थिनः किं व्यवहार एषः ?
यदा प्रभातेऽध्ययने रतोऽभू-
स्तदागतायां मयि हासवत्यां
शून्यं करण्डं परिगृह्य हस्ते
कथं समुत्थाय विसृज्य पाठं
व्यग्रोऽभवो मे नवकल्यफुल्लैः
पूजां विधातुं शिशिरार्द्रपुष्पैः ?
यदापराह्णे तरुपादमूले
रताऽभवं वारिनिषेककृत्ये
श्रमातुरां वीक्ष्य कथं त्वया भो
उत्थापितं वाः सदयेन कूपात् ?
सन्त्यक्तपाठश्च कथं प्रियं मे
कुरङ्गशावं यवसैरपुष्णाः ?
छायामयं स्निग्धकुलाङ्गनानां
प्रेमानतं दीर्घमिवाक्षिपक्ष्म
यदा तमिस्रा नमति स्म सायं
कथं च गीतं दिवि शिक्षितं यत्
संश्राविताहं सरितः प्रतीरे ?

विद्यां ग्रहीतुं यदि केवलं त्व-
मत्रागतोऽभूर्मम तर्हि कस्मात्
स्वःशाठ्यजालैर्हृदयं ह्यहार्षीः ?
आं बुद्धमेतज्जनकस्य मे हृत्
प्रवेष्टुमैच्छो वशमानयन् माम् ।
तस्मिन् प्रकामं सफलप्रयत्नः
कृतज्ञतामद्य समर्प्य काञ्चित्
प्रयास्यसि त्वं पुनरेव नाकं
प्रार्थी यथा पूर्णमनोरथः सन्
द्वारे नृपालप्रतिहारिहस्ते
ददाति मुद्रा गमनस्य काले
द्वित्राः सहासं परितोषणाय ।

कचः

हा मानशीले ! तव किं सुखं स्या-
दाकर्णयन्त्या वद सत्यमत्र ?
जानाति धर्मः स्वयमेक एव
प्रतारिता त्वं न मया कदाचित् ।
सानन्दचित्तोऽकपटं विधाय
तवैव सेवां परितोषणं च
दोषं ह्यकार्षं यदि तस्य शास्तिं
ददाति वेधा नियतं हि मह्यम् ।
मतं ममासीत्—कथयामि जातु
न तां कथां या हृदयेऽस्ति गुप्ता ।
नितान्तमेकं स्वकमेव यच्च
किं तद् विदित्वा ? वद तत्र कस्य
लाभोऽस्ति को वा भुवनत्रयेऽस्मिन् ?

अस्ति न वा वि त्वयि मेऽनुराग-
स्तर्केण तस्याद्य फलं किमस्ति ?
कर्तव्यमेकं ननु साधनीयम् । (क्रमशः)

---

डक्टर-श्रीयतीन्द्रविमलचतुर्धुरीण-विरचिता

## श्रीश्रीदेशमातृकास्तुतिः

( १ )

जन्मभूमिभारतजननि !

गङ्गागोदावरी-नर्मदाकावेरी-पुण्यधारापीयूषिणी ।
दशभुजाविलासिनी दशदिशोल्लासिनी देववन्द्यभारतजननी ॥१॥
बलसिद्धिविधायिनी ज्ञानधनप्रदायिनी सुतशतकल्याणसाधिनी ।
निखिलभुवनसुरञ्जन-सर्वभाषाप्रजनन-गीर्वाणवाणीभाषिणी ॥२॥
वयं सुधन्यास्तव सन्ताना विश्वकलुषनाशिनि ।
भक्तसन्तानभक्तिसन्तान-वन्दितचरणे जननि ॥३॥

( २ )

तारकामण्डित-नीलनभःप्रान्त-पुलकितवन-कुन्तलिनी ।
सागरसुरणने मञ्जीरचरणे हिमगिरिवर-किरीटिनी ॥
विन्ध्यमेखले जननि ॥४॥
वन्दामहे त्वां विश्वैकस्तुतां जन्मभूभारत-जननि ।
कुसुमितहास्ये विलसितलास्ये त्रिभुवनत्राणविधायिनि ॥५॥

( ३ )

विश्वमानवता-दानपारमिता-मुदितादिप्रचारिणी ।
वेदवेदान्त-ज्योतिषसिद्धान्त तत्त्वज्ञानदायिनी ॥६॥
सर्वसम्पदो विश्वे वितीर्णास्त्वया निःस्वे स्नेहक्रोडप्रदायिनि !
गङ्गागोदावरी-नर्मदाकावेरी-पुण्यधारापीयूषिणी ।
पादपङ्कजतल-प्रणतयतीन्द्रविमल-समुद्धरणकृपां कुरु प्रसविनि ॥
जन्मभूमिभारतजननि ॥७॥

---

# An Ode to Mother Ind

**Versified from original Sanskrit by Principal Dr. Roma Choudhuri**

( 1 )

O Mother mine, Mother Ind !
Pouring honey in rivers coy
God-adored Mother Ind !
Durga Incarnate, spreading Joy.

( 2 )

Bringer of power and pelf
And of Knowledge fine,
Helping progeny self to self
Inspiring Speech Divine *
The root and bliss benign.

( 3 )

Remover of stress and stains
Blessed is thy every child.
Devotees in ceaseless trains
Worship thy feet, soft and mil

( 4 )

Sky-kissed meadows, green and hoary,
From thy locks, flowing down
And, waves, thy anklets, sweet and merry,
The Himalayas, proud, the noble crown,
And Vindhya's girdle of renown.

( 5 )

I salute Thee, beloved Mother,
Adored as only Hold
Laughing and playing together
Redeemer of World Threefold.

( 6 )

O Love's Eternal Shrine,
And, Store of endless lore
Giver of gifts divine

(7)

Mother Ind ! Mother dear,
Love and Peace Incarnate,
Pouring honey far and near
Through rivers, full and ornate.

(8)

O mother mine, Mother mine,
Bestow grace on all.
O mother mine, kind, benign,
Give thy Clarion-Call.

# स्वरसंज्ञाविमर्शः

मीमांसकै"गीतिषु सामाख्या"इति वैदिकसामशब्देन गानं बोध्यते। गानं च स्वराणामारोहावरोहविशेषरूपम्। तेषां चारोहावरोहविशेषाणां मुख्यतः सप्तविधत्वं ध्वन्याधिक्यवशात इति लोके प्रसिद्धम्। तत्र प्रथमं कञ्चन स्वरं केनचन ध्वनिनोपादाय तदुत्तरं ध्वनिमात्राधिक्येन प्रत्येकं परपरवर्तिस्वरषट्कं मिलित्वा प्रथमं गृहीत्वा सप्तारोहा भवन्ति। ते च क्रमेण षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादशब्दैस्तत्सूचकतदादिशब्दैर्वै शिष्टैर्न बोध्यन्ते। यथा षड्जे आदिमं षशब्दं दीर्घीकृत्य प्रथम आरोह उच्यते तस्य "सा" इति नाम। एवमृषभशब्दादिमऋकारस्य रेभावं कृत्वा द्वितीयनाम। एवं गान्धारतो गेति मध्यमपञ्चमयोश्च क्रमेण मेति पेति नामद्वयम्। धैवततो धेति निषादतश्च नीति नामद्वयं गृहीत्वा लोके गाने गानस्वराः सप्त निर्दिश्यन्ते, सारेगमपधनीत्येवंरूपाः। तत्र प्रथमापेक्षया द्वितीये मात्राधिक्यं ध्वनेस्तदपेक्षया तृतीय इत्येवं पूर्वापेक्षयोत्तरत्र मात्राधिक्येन सप्तारोहा ध्वनेरुक्तशब्दाद्यक्षरैरुच्यन्ते लोके। वेदे पुनरुक्तारोहाणां विपरीतक्रमेण येऽवरोहास्तेषां गानस्वरत्वेन व्यवहारः। येऽपि लोकेऽन्त्यस्वरतः क्रमिका आरोहास्ते वेदे क्रमिकाः स्वरा न गृह्यन्ते किन्तु लौकिका आरोहरूपा ये सप्त स्वरास्तेषां मध्ये मध्यमं स्वरमारभ्य ये क्रमिका अवरोहा यथा मध्यमस्ततोऽवरूढो गान्धारस्ततोऽवरूढ ऋषभस्ततः षड्जस्ततो निषादस्ततोऽवरूढो धैवतस्ततः पञ्चम इति। ते चेमेऽवरोहा लोकसङ्केतानुसारेण क्रमेण मगरेसानिधपेत्येवंरूपा वैदिकाः सामस्वराः सप्त भवन्ति। ते च वेदे क्रुष्टः, द्वितीयः, तृतीयः, चतुर्थः, मन्द्रः, अतिस्वार्यः, अतिक्रुष्ट इति शब्दैः क्रमेण बोध्यन्ते। तत्र क्रुष्टातिक्रुष्टयोः क्रमिके अपि नामनी व्यवह्रियेते यथा क्रुष्टः प्रथमशब्देनोच्यतेऽतिक्रुष्टः सप्तमशब्देनापीति। तत्र लोके

वेदे च गानस्वरसङ्ख्या समा सप्तरूपा । आरोहाणां लोके मुख्यगानस्वरता वेदेऽवरोहाणां तत्त्वम् । तत्रापि न लौकिकारोहवैपरीत्येन क्रमिकाणामवरोहाणां गानस्वरत्वं किन्तु लौकिकारोहविपरीतावरोहेषु मध्यमसंज्ञकमवरोहमारभ्य क्रमिका अवरोहाः सप्तगानस्वरत्वेन व्यवह्रियन्ते । तत्र लोक आरोहाणां मुख्यस्वरत्वमवरोहाणां प्रसिद्धक्रमभेदरूपविकारत्वम् । अवरोहेऽपि आरोहे सप्तमो नियतया ध्वनिमात्रया विशिष्टस्तादृशस्यैव ग्रहणं परं पूर्वक्रमेऽयं सप्तम आसीदिदानीं तावत्या ध्वनिमात्रया युक्तः प्रथमं स्थानं प्राप्तः, एवं षष्ठः स्वरो धो ह्यारोहक्रमे यावत्या ध्वनिमात्रया युक्त आसीत्तावन्मात्राविशिष्ट एवावरोहे द्वितीयं स्थानं प्राप्तः । तत्र च नीत्यस्य ध्वनिमात्रातो न्यूनमात्राकत्वं धेत्यस्यारोहेऽप्यासीदेवं केवलमारोहे तस्य षष्ठं स्थानमासीदवरोहे तस्य द्वितीयस्थानता जाता । एवमस्य क्रमभेदरूपविकारत्वम् । वेदे पुनर्मध्यममारभ्य क्रमिका अवरोहाः सप्त गानस्वरा उच्यन्ते । तत्र मौलिकत्वं लौकिकगानस्वराणां वैदिकगानस्वराणां वा ? तत्रोभयत्रापि किमिति सप्तानामेव ग्रहणम्, न न्यूनानामधिकानां वा ? लौकिकानां स्वराणां मौलिकत्वे वैदिकगानस्वराणां विकृतिरूपत्वम् । दृश्यते च विकृतिविशेषरूपता वैदिकस्वरेषु मध्यममारभ्यावरोहरूपत्वात् । परं त्वत्र विकृतिरूपत्वे नाम्नां विभेदस्यासमर्थनीयता । लौकिकगानस्वराणां मौलिकानां ग्रहणेन वैदिकगानस्वररूपविकारविशेषग्रहणे मौलिकनामभिरेव तत्र व्यवहारस्योचितत्वम् । अत्र विकारे केवलं क्रमभेद एव भवति स्वरूपं ध्वनिमात्रादिकं तु समं भवतीत्युक्तमेव । एवं सति नामभेदोऽसमर्थनीय आपद्यते । अथ वैदिकस्वराणामेव मौलिकता विकाररूपा एव लौकिकस्वरा इति । तथा सति क्रमभेद आरम्भभेदश्चासमर्थनीयौ । एवमारोहस्यैव नावरोहस्य अवरोहस्यैव नारोहस्य स्वररूपत्वं मौलिकमित्यत्र विनिगमनाभावः । किञ्च लौकिकस्वरेषु मध्यमपञ्चमयोः क्रमवैशिष्ट्येन तत्तन्नामताऽपरेषां तु सा क्रमवैशिष्ट्याभावनिबन्धनीत्यत्र मूलाभावः । अथोच्येत भिन्ना एवेमे लौकिका गानस्वरा वैदिकगानस्वरेभ्यः, नामभेदादिति, तदपि न । नारदीयशिक्षायामुच्यते—यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः । यो द्वितीयः स गान्धारस्तृतीयस्त्वृषभः स्मृतः ॥ इति । तेनोभयेष्वैक्यस्य प्रतीतेः । एवं च क्रमभेदे नामभेदे कारणस्य न सम्यग्विज्ञानम् । किञ्च वैदिकस्वरेषु केषांचन क्रमिकं नाम निश्चितं यथा द्वितीयतृतीयचतुर्थानां केषांचन विकल्पितं यथा प्रथमसप्तमयोः क्रुष्टातिक्रुष्टयोः । केषांचन क्रमिकनामाभावः । यथा मन्द्रातिस्वार्ययोः । इति । लोके पुनराद्यास्त्रयः षड्जऋषभगान्धाररूपाः, तेषां क्रमबोधकनामराहित्यं चतुर्थस्य मध्यमत्वरूपविशिष्टस्थानबोधकनामवत्त्वम् । परस्य क्रमबोधकनामयुक्तत्वम् । परयोस्तु क्रमबोधकनामराहित्यमेव । तत्र चतुर्थस्य मध्यमनाम्ना व्यवहारेणात्र स्वराणां द्वैराश्यं प्रतीयते तन्मध्यगत्वेन मध्यमत्वं चतुर्थस्य नियतमिति स मध्यम एव । पूर्वोक्तद्वैराश्ये

एको राशिः पर एवेति नियतं यतस्तदादेः पञ्चमेतिक्रमबोधकनामत्वम्। एवं सति पधनी-त्ययं राशिः पर एव भवति, अत्रशेषादपरो राशिः सारेगेत्ययं पूर्वो भवति। तथा सति, उभयराशिमध्यमत्वेन चतुर्थस्य मध्यमेतिनाम, ततः पधनीतिराशिस्थस्य प्रथमस्य पञ्चमनाम्ना व्यवहारेणायं राशिः पर एव भवतीति लौकिकगानस्वराणां नियतक्रमकता।

यत्तु नारदशिक्षायां स्वराणां स्थानसम्बन्धेन नामप्रतिपादनावसरे उच्यते—नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः। षड्भिः सञ्जायते यस्मात्तस्मात्षड्ज इति स्मृतः॥ वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः। नदत्यृषभवद्यस्मात्तस्मादृषभ उच्यते॥ वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः। नासागन्धवहः पुण्यो गान्धारस्तेन हेतुना॥ वायुः समुत्थितो नाभेरुरोहृदि समाहतः। नाभिं प्राप्तो महानादो मध्यमत्वं समश्नुते॥ पञ्चस्थानोत्थितस्यास्य पञ्चमत्वं विधीयते। वायुः समुत्थितो नाभेरुरोहृत्कण्ठशिरोहतः। धैवतं च निषादं च वर्जयित्वा स्वरद्वयम्। शेषान्पञ्चस्वरानन्यान्पञ्चस्थानोत्थितान्विदुः॥ इति। पञ्चमस्य क्रमिकनामत्वाभावः पञ्चमत्वं च पञ्चस्थानोत्थिततत्वेन हेतुनेति, तत्तु स्वोक्तिविरुद्धं न युक्तम्। पञ्चस्थानोत्थितिमात्रेण पञ्चमत्वे कथमिदमेकस्यैव स्वरस्य नाम भवेत् यतस्तत्रैव धैवतं निषादं च स्वरद्वयं वर्जयित्वान्येषां पञ्चानां स्वराणां पञ्चस्थानोत्थितत्व-वचनम्। अन्ये तु न पञ्चमनाम्ना व्यवह्रियन्ते, तस्मादस्य पञ्चमशब्देन व्यवहारः क्रमा-भिप्राय एव, सोऽपि नियतक्रमत्वेऽस्य नियतपञ्चमस्थानसम्बन्धे सत्येवोपपद्यते इति पूर्वोक्तास्मत्कल्पनैवात्र क्रमे युक्ता। एवं चात्र क्रमनियामकहेतुसत्त्वेनास्यैव मौलिकता। अन्यस्य हेत्वन्तरनिबन्धेनान्यादृशत्वं तत्र क्रमनियामकहेत्वलाभेनतद्विकारशब्देन व्यवहार उचितः। तथाहि तत्र मध्यममारभ्य प्रारम्भः। सोऽपि मध्यमो न मध्यमत्वेनारम्भे गृह्यते, तं गृहीत्वापि न मौलिक आरोहक्रमोऽनुस्रियते किन्तु तद्विपरीतोऽवरोहरूपः। यद्यप्यत्र क्रमे प्रथमादिचतुर्थपर्यन्तानि क्रमवाचकानि नामान्युपादीयन्ते न तानि मौलिकानि क्रमनियामकानि, किन्तु हेत्वन्तरेण गृहीतान्यादृशक्रमक्रमिकत्वबोधकानि न तु मौलिकं क्रमं नियच्छन्ति तानि। मूलापेक्षयाऽन्यादृशा एतत्क्रमे मध्यमः प्रथमो भवेत् गान्धारादीनां द्वितीयादिस्थानस्थित्या द्वितीयादिशब्दैर्व्यवहारः, आरोहे मूलक्रमे याऽवस्था तद्विपरीतभावेन गान्धारादीनामनुसरणाच्च। (क्रमशः)

---